श्रीगणेशायनमः ॥ विद्याधीशंत्रिनेत्रम्विमलमतियुतम्वैद्यनाथाभिधेयं जन्मस्थित्यन्तकारीनिखिलज
निमतांयश्चपूज्यस्सुरेशैः ॥ आनंदाब्धिर्महेशःसकलकृतिनतोदुर्गमोबोधहीनैःसत्यज्ञानस्वरूपोविगतपरि
मलस्तंनमामोगिरीशम् ॥१॥ यस्यास्माद्योविधत्तेचकिलमतिशयंनिष्कलंकोप्यबाधो यस्यस्मृत्याभवाब्धि
न्तरतिगतमलःशुद्धसम्वित्कृतात्मा ॥ तंश्रीकृष्णन्दयेशंनिगमनुतिचिरंवन्दनम्प्राणिराशेःध्यायन्ध्यायंन
मामश्चरितकलुषहन्त्रघरम्वरेण्यमन्नम् ॥२॥ आराध्ययांगिरिसुताम्वरदांसुधीरैर्लब्धम्फलंसमधिकस्म
थितैरभीष्टम् ॥ संसारसागरतरीम्भजनैकपात्रीन्दुर्गांनमामिभवभीतिविनाशनाय ॥३॥ अंबालाख्याजि
लान्तरेस्रुविषयेसंसेवितंसज्जनैःराज्ञीरायपुराधिपोऽतिमतिमान्श्रीकृष्णसिंहोनृपः ॥ तत्पुत्रोनृपनीति

नीतिनिपुणोविप्रप्रियोधार्मिकः श्रीमाद्वजवसन्तसिंहनृपतिस्तद्राजधानीपतिः ॥ ४ ॥ तन्मान्योबुधवृन्दम
ध्यगाणितः श्रीरामलालोबुधः पूर्णीमंविधानमानवचसावृत्यादिभिर्मानितः ॥ सुन्द्रायाःपुरमागतोहिसक
लस्यार्यस्यभाग्योदयात् खवेदांकशशांकवत्सरगणेशाके ऽक्षशून्यधृतौ ॥ ५ ॥ पौषेमासिसितेपक्षेपञ्च
म्यांगुरुवासरे ॥ प्रतिष्ठासर्वदेवानांसुन्द्रापुर्यांहिसुद्रिता ॥ ६ ॥ मान्यान्प्रणम्यनितरांजलिरेषभूयोभूयो
विधायविनयंविनिवेदयामि ॥ दृष्ट्वामनोममपरंनिपुणंविभाव्यभावावबोधविहितोनदुनोतिदोषम् ॥ ७ ॥ ॐ
अपवित्रःपवित्रोवासर्वावस्थांगतोऽपिवा ॥ यःस्मरेत्पुण्डरीकाक्षंसबाह्याभ्यन्तरःशुचिः ॥ पुण्डरीकाक्षःपु
नातु ३ स्वस्तिश्रीमत्सच्चिदानन्दब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृंभिताविद्यायोगात्कालकर्मस्वभा

वाविर्भूतमहत्तत्त्वोत्पादिताहंकारस्तृतीयोद्भूतशब्दादिपंचतन्मात्रेन्द्रियदेवतासमुदायनिर्मितचतुर्दशभुवनात्म
के ऽण्डकटाहे लीलया तन्मध्यवर्तिभगवतः श्रीनारायणस्य नाभिकमलोद्भूतसकललोकपितामहस्य ब्रह्मणः
सृष्टिं प्रकुर्वतस्तदुद्धरणाय प्रजापतिप्रार्थितस्य सकलजगदुत्पत्तिस्थितिलयकारणस्य रक्षाशिक्षाविचक्ष
णस्य प्रणतपारिजातस्य अच्युतानन्तवीर्यस्य भगवतो महापुरुषस्य श्रीमदादिनारायणस्याचिन्त्याप
रिमितशक्त्या ध्रियमानस्य महाजलौघमध्ये परिभ्रम्यमाणानामनेककोटिब्रह्माण्डानामेकतमे महदहंका
र पृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृते ऽस्मिन्ब्रह्माण्डखण्डयोर्मध्ये आधारशक्तिः श्रीमद्वराहदंष्ट्राग्रविराजिते
कूर्मानन्तवासुकितक्षककुलिककर्कोटकपद्ममहापद्मशंखमहानागैः संध्रियमाणे ऐरावतपुण्डरीकवाम

नकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकाष्टदिग्गजोपरिप्रतिष्ठिते अतलवितलसुतलतलातलरसातल
महातलपाताललोकस्योपरिभागे भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपलोकसत्यलोकाख्यसप्त
लोकस्याधोभागे चक्रवालशैलमहावलयनमध्यवर्तिनो महाकालमहाफणिराजशेषस्य सहस्रफणानां
मणिमण्डलमण्डिते दिग्दन्तिशुण्डोत्तम्भिते अमरावतीभोगवतीसिद्धवतीगान्धर्ववतीअलकावत्यादिपुण्यपु
रीप्रतिष्ठिते इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानेतिदिक्पालप्रतिष्ठिते लोकालोकाचलवलयिते ल
वणेक्षुसुरासर्पिर्दधिक्षीरोदकेतिसमार्णवपरिवृते जंबुप्लक्षशाल्मलिककुशक्रौञ्चशाकपुष्कराख्यसप्तद्वी
पयुते इन्द्रकांस्यताम्रगभस्तिनागसौम्यगन्धर्वचारणभारतेतिनवखण्डमण्डिते सुवर्णगिरिकर्णिकोपे

तमहासरोरुहाकारपंचाशतकोटियोजनविस्तीर्णभूमंडले अयोध्यामथुरामायाकाशीकांच्यवन्तिकाद्वाराव
तीतिसप्तपुरीप्रतिष्ठिते शालग्रामशंभलनन्दिग्रामेतिग्रामत्रयविराजिते चंपकारण्यबदरिकारण्यदंडकारण्य
अर्बुदारण्यधर्मारण्यपद्मारण्यगुह्यारण्यजंबुकारण्यनैमिषारण्येतिनवारण्ययुक्ते सुमेरुनिषदरजतकूटशु
भ्रकूटत्र्याकूटहिमाचलानां हरिवर्षकिंपुरुषवर्षयोश्च दक्षिणदिग्विराजमाने नवसहस्रयोजनविस्तीर्णे भरत
खंडे मलयाचलविन्ध्याचलाद्यनेकमहापर्वतमंडिते स्वर्णप्रस्थचंद्रप्रस्थसूक्तिकावर्त्तकरमणकमहारमण
कपांचजन्यसिंहलकलंकेतिनवखंडोपद्वीपमंडिते दक्षिणावस्थितरेणुकाह्वयसूकरकाशिकांचीकालिकावटे
श्वरशुक्लजरमहाकालेतिनवोरवरयुते सोमनाथमल्लिकार्जुनमहाकालममलेश्वरकेदारेश्वरभीमशंकरवि

नकुमुत्र्यंबकेश्वरवैद्यनाथनागेशरामेश्वरघुश्मेशेति द्वादशज्योतिर्लिंगयुते गंगायमुनासरस्वतीतापीप-
योष्णीमलापहारीगोदावरीनर्मदेत्यादिपुण्यनदीविलसिते हिमवन्मेरुगोवर्द्धनक्रौंचश्रीशैलकचित्रकूटहेमकू-
टमहेन्द्रमलयविन्ध्याद्यनेकपर्वतसमन्वितेमतंगादिमहानगरयुते कोंकणहिरण्यशृंगकुब्जाबुदमाणिक-
र्णविदशाल्यग्रामसूकरमथुरागयानिष्क्रमणलोहार्गलमोनस्वामीवदरीति चतुर्दशगुह्यस्थलविलसिते
अस्मिन्जंबुद्वीपकर्मभूमौ बौद्धावतारे गंगादिसरिद्भिः पाविते भारते वर्षे निखिलजनपावनपरमभागवतो
त्तमशौनकादिऋषिगणसेवितपुण्यस्थले आर्यावर्तान्तर्गतब्रह्मावर्तादमुकदिग्भागावस्थिते ऽमुकज
नपदे कुरुक्षेत्रादिमध्यरेखायाअमुकदिग्भागे प्रयागाद्यधिकमध्यरेखायाश्च अमुकदिग्भागे श्रीभागीर

श्याअमुकेतटे अमुकक्षेत्रानन्त वर्तीसोमसूर्यान्वयभूभृत्प्रतिष्ठिते श्रीमन्नारायण नाभिकमलो
द्भूतसकलजगत्स्रष्टुः परार्द्धद्वयजीविनोब्रह्मणोद्वितीयपरार्द्धे पंचाशदधिके वर्षेप्रथममासे प्रथमपक्षे प्र
थमदिवसे अन्होद्वितीययामे तृतीयेमुहूर्ते रथंतरादिद्वात्रिंशत्कल्पानांमध्येऽष्टमे श्रीश्वेतवराहकल्पे
स्वायंभुवादिमन्वंतराणांमध्येसप्तमेवैवस्वतमन्वन्तरे सत्ययुगादिचतुर्युगानांमध्येऽष्टाविंशतितमेयुगे
कलियुगे कलिप्रथमचरणे प्रभवादिषष्टीसंवत्सराणांमध्ये अमुकनाम्निसंवत्सरे उत्तरादिगोलावलंबि
निश्रीमार्तंडमण्डले अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे
अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थितेसूर्ये अमुकराशिस्थितेचन्द्रे शेषेषुग्रहेषु

यथाराशिस्थितेषु सत्सु एवंगुणविशिष्टे ऽस्मिन्शुभक्षणे अमुकगोत्रोत्पन्नोऽहं अमुकप्रवरोऽहं अमुक
नामशर्माहं वा वर्माहं उत गुप्तोऽहं अमुकवेदांतर्गतामुकशाखाध्याय्यहं श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं सू
र्यादिनवग्रहान्तर्गतकिंचिद्ग्रहसूचितारिष्टनिरसनार्थं अंतर्दशाविदशामहादशादिजन्मदशाहीनांशपात्यं
शासुद्वादशादिवर्षदशासूचितारिष्टनिरसनार्थं सकुटुंबस्य सपरिवारस्य द्विपदचतुष्पदसहितस्य स
र्वारिष्टनिरसनार्थं सकलशुभफलप्राप्त्यर्थं निरवच्छिन्नगार्हस्थ्यादिधर्मसिद्धिपूर्वकअंतेमोक्षफल
प्राप्त्यर्थं करिष्यमाणशिवादिप्रतिष्ठाकर्मणः पूर्वांगभूतस्वस्तिवाचनगणपतिपूजनब्राह्मणवरणपु
ण्याहवाचनकलशस्थापनमातृकापूजनघृतमातृकापूजननांदीश्राद्धादिकर्माहं करिष्ये इति प्रतिज्ञासंकल्पं कुर्यात्॥

अथस्वस्तिवाचनं ॥ स्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरि
ष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥२५॥१९॥ पयःपृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयो
धाः ॥ पयस्वतीःप्रदिशःसन्तुमह्यम् ॥१८॥३६॥ भद्रङ्कर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यज
त्राः ॥ स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥२५॥२१॥ आनोभद्राःक्रतवोयन्तुवि
श्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे
॥२५॥१४॥ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसिवैष्णवमसिविष्णवेत्वा
॥५॥२१॥ अग्निर्देवतावातोदेवतासूर्य्योदेवताचन्द्रमादेवतावसवोदेवतारुद्रादेवतादित्यादेवतामरुतो

देवताग्निर्देवताव्वातो देवता सूर्यो देवता चन्द्रमा देवता व्वसवो देवता रुद्रा देवता ऽऽदित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता व्वरुणो देवता ॥ २४ ॥ २० ॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः व्वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ ३६ ॥ १७ ॥ व्विश्वानि देव सवितर्दुरितानि परासुव ॥ यद्भद्रन्तन्न ऽआसुव ॥ दीर्घायुत्वाय बलाय वर्चसे सुप्रजास्त्वाय शंसाय अथो जीव शरदः शतम् ॥ ३० ॥ ३ ॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः यथा शमसद्द्विपदे चतुष्पदे विश्वम्पुष्टङ्ग्रामे ऽअस्मिन्ननातुरम् ॥ १६ ॥ ४८ ॥ एतन्ते देव सवितर्यज्ञम्प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिन्तेन मामव ॥ १२ ॥ १२ ॥ सहस्तोमाः सहच्छन्दस ऽआवृतः सहप्रमा ऽऋषयः सप्त दैव्याः पूर्वेषाम्पन्थामनुदृ

श्यधीराऽ अभीशूनाम्महिमानम्पनायत मनः पश्चादनुयच्छन्ति रश्मयः ॥ ३४ ॥ ४९ ॥ यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति ॥ दूर
ङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३४ ॥ १ ॥ गणानान्त्वा गणपति हवामहे प्रिया
णान्त्वा प्रियपति हवामहे निधीनान्त्वा निधिपति हवामहे वसो मम ॥ आहमजानि गर्भधमात्वमजा
सि गर्भधम् ॥ २३ ॥ १९ ॥ नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो न
मो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमः सेनाभ्यः ॥ १६ ॥
२५ ॥ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञ समिमं दधातु ॥ विश्वे देवास ऽ
इह मादयन्तामो३म्प्रतिष्ठ ॥ २ ॥ १३ ॥ एष वै प्रतिष्ठा नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितम् ॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः॥ लम्बोदरश्च विकटो विघ्नराजो विनायकः॥ धूम्रकेतुर्गणाध्य
क्षो भालचन्द्रो गजाननः॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे त-
था॥ सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते॥ विघ्नवल्लीकुठाराय गणाधिपतये नमः॥ हस्तपुटौ संयोज्य
गणनाथं प्रार्थयेत्॥ तद्यथा॥ ॐ यत्पादपल्लवयुगं विनिधाय कुम्भद्वन्द्वे प्रयाणसमये स गणाधिराजः॥
विघ्नान्विहन्तुं क्षमस्य जगत्त्रयस्य गोविन्दमादिपुरुषं तमहं भजामि॥१॥ उद्यद्दिनेशरुचिरं निजहस्तप
द्मैः पाशाङ्कुशाभयवरान्दधतं गजास्यं॥ रक्ताम्बरं सकलदुःखहरं गणेशं ध्यायेत्प्रसन्नमखिलाभरणा
भिरामम्॥२॥ अविघ्नं कुरुते नित्यं विघ्नं च परिहन्यते॥ यात्रामङ्गलसिद्ध्यर्थमेकदन्त नमोऽस्तु ते॥३॥ मं

जलारुणविस्तीर्णकरपुष्कराजितं ॥ शिवोद्भवंभास्वलंकमलामोददंभजे ॥४॥ ॥इतिसंप्रार्थ्य॥ ॥
अक्षतान्गृहीत्वा ॥ गजवक्त्रायनमः ॥ ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं
यज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयन्तामोम्प्रतिष्ठेतिमंत्रेणप्रतिष्ठाप्यावाहयेत् ॥ भोहेरंब
त्वमेह्येहि अंबिकात्र्यंबिकात्मज ॥ सिद्धिबुद्धिपतेऽत्र्यक्षसर्वलोकपितःपितः ॥ नागास्यनागहारत्वं
गणनाथचतुर्भुजः ॥ भूषितःस्वायुधैर्दिव्यैःपाशांकुशपरस्वधैः ॥ आवाहयामिपूजार्थंरक्षार्थंमध्वर
स्यच ॥ इहागत्यगृहाणत्वंपूजांरक्षचमेक्रतुम् ॥ आगच्छविघ्नराजेन्द्रस्थानेचात्रस्थिरोभव ॥ यावत्पूजा
समाप्येततावत्त्वंसन्निधौभव ॥ आगच्छदेवदेवेशगणनाथनमोस्तुते ॥ सूर्यकोटिसमाभासगज

वक्रचतुर्भुज॥गजवक्त्रगणाध्यक्षसर्वविघ्नविनाशन॥लंबोदरत्रिनेत्रत्वमागच्छगणनायक॥अथातःसंप्र

॥७॥ वक्ष्यामिगणयागंसुशोभनं॥कामिकेवासिकेयज्ञेविवाहेव्रतसंयमे॥आदौगणेश्वरःपूज्यःसर्वकामफलप्रदः

॥मासमासाधिपःपूज्योगणपतिर्योभविष्यति॥येनपूजायतेयज्ञेसमाचार्योधनस्यतिः॥कोसौमासपतिर्देवः

सर्वविघ्नविनाशन॥ ॥श्रीकृष्णउवाच॥ ॥आदौगणेश्वरःश्रेष्ठोविघ्ननाशोविनायकः॥सर्वकामकृतोपू-

ज्योयज्ञकालेसनातनः॥मंडलंचततःकुर्यात्कोष्ठानांद्वादशस्मृतं॥सिन्दूरस्थापितन्देवमीशानेचविनायकं॥

क्रमयुक्तस्ततःस्थाप्योमासमासाधिपःप्रभुः॥मार्गेगणपतिःपूज्यःपौषेचैवविनायकः॥गजवक्त्रंमाघमासे ॥७॥

भालचन्द्रोऽथफाल्गुने॥उपेन्द्रश्चैत्रमासेचवैशाखेविघ्ननाशनः॥ज्येष्ठेशिवसुतःपूज्यआषाढेहरनंदनः॥

श्रावणेविघ्नराजस्तु भाद्रे ऽथमोदकप्रियः॥ आश्विनेकार्त्तिकेबीजंमहाबीजंचमार्गके॥ विघ्नहर्त्ताधिकेमासि
एवंपूज्योगणेश्वरः॥ गन्धपुष्पैस्तथाधूपैः कर्पूरैर्यक्षकर्दमैः*॥ मृगाणांकुंकुमैःशुभ्रैःसिंदूरेणविशेषतः॥ रक्तो
त्पलदलैःपूज्योबिल्वपत्रैश्चकेशरैः॥ मालतीकेतकीपुष्पैर्हेमपुष्पैर्विचक्षणैः॥ अर्घ्यपाद्यैश्चधूपैश्चरक्तवस्त्रे
णाच्छादयेत्॥ पूजांकुर्यात्तुदेवस्यदद्यान्मोदकभोजनं॥ नमोमूषकमारूढशम्भकर्त्रेथतेनमः॥ नमःकात्यायनी
पुत्रलंबकर्णायवैनमः॥ उद्यंतरविरूपायविद्याबुद्धिविचक्षणे॥ देहिमेपुत्रसौभाग्यंदेहिमेसुखसंपदं॥ वांछा
सिद्धिमयोदेहिविद्यांदेहियशोधनम्॥ शत्रवोनाशतांयान्तुदुर्जनोनाशतामियात्॥ स्थानांचैवहितार्थायपार्थ
यित्वागणेश्वरं॥ आदौपूज्यगणेशन्तुशान्तिपाठमथाचरेत्॥ नाशयेत्सर्वविघ्नानिकल्याणंजायतेसदा॥ कृष्णे

* यक्षकर्दमलक्षणन्तु - कस्तूरिकायाद्वौभागौद्वौभागौकुंकुमस्यच चंदनस्यत्रयोभागाःशशिनस्त्वेकएवहीत्युक्तलक्षणोज्ञेयः

नभाषितंपूर्वंदेवतानांहितार्थिना ॥ उत्पातेविघ्नसंभूतौपूजयेद्गणनायकमित्याचार्य ॥ अस्यश्रीसदाशिवादि
प्रतिष्ठायागकर्म्मणःसांगतासिद्ध्यर्थंश्रीगणेशदेवस्यपंचोपचारैर्यथाविधिपूजनमहंकरिष्येतिप्रतिज्ञांकृत्वा
॥ सुमुखायनमस्तुभ्यंगणाधिपतयेनमः ॥ पुष्पासनंमयादत्तंविघ्नपुंजंनिवारय ॥ गणपतयेनमः ॥ आसनंस
मर्पयामि ॥ उमापुत्रायदेवायसिद्धिबुद्ध्यायतेनमः ॥ पाद्यंगृहाणदेवेशविघ्नव्यूहंनिवारय ॥ लंबोदरायनमः ॥
पाद्यंस० ॥ द्वैमातुरकृपासिंधोदेवषाण्मातुराग्रज ॥ वरदस्त्वंवरन्देहिवांछितंवांछितार्थद ॥ अनेनार्घ्य
प्रदानेनवांछितार्थंप्रयच्छमे ॥ एकदन्तमहाकायनागयज्ञोपवीतक ॥ गणाधिदेवदेवेशगृहाणार्घ्यंनमो
स्तुते ॥ द्वैमातुरायनमः ॥ अर्घ्यंस० ॥ नर्मदाचंद्रभागादिगंगासंगमजैर्जलैः ॥ स्नापितोसिमयादेवविघ्नसं

र्घंनिवारय॥उमासुतायनमः॥स्नानंसं०॥सूर्य्यकोटिसमाभासनागयज्ञोपवीतकं॥सुवर्णसूत्रैरचितमुप
वीतंगृहाणमे॥इभवक्त्रनमस्तेस्तुगृहाणपरमेश्वर॥ब्रह्मसूत्रंमयादत्तंविघ्नपुंजंनिवारय॥विघ्नेश्वरायनमः
उपवीतंसं०॥रक्तांबरधराधीशपाशांकुशधरेश्वर॥वस्त्रयुग्मंमयादत्तंगृहाणपरमेश्वर॥सूर्य्यकर्णायन
मः॥वस्त्रंसं०॥ईशपुत्रनमस्तुभ्यंनमोमूषकवाहन॥गन्धंगृहाणदेवेशविघ्नपुंजंनिवारय॥गणाध्यक्षा
यनमः॥गंधंसं०॥रक्तचन्दनसंमिश्रैरक्षतैःपूजयाम्यहं॥सर्वभूतहितार्थायविघ्नराजजगद्गुरो॥विघ्न
हर्त्रेनमः॥अक्षतान्समर्पयामि॥ पाटलामल्लिकादूर्वाशतपत्राणिवैप्रभो॥पुष्पाणीशगृहाणत्वंविघ्न
पुंजंनिवारय॥विघ्नविनाशिनेनमः॥पुष्पंसं०॥लंबोदरविशालाक्षधूम्रकेतोनमोनमः॥धूपंगृहाणदेवे

शाविघ्नं० ॥विकटायनमः॥ धूपंस०॥ घृतात्कवर्तिसंयुक्तंवह्निनायोजितंमया॥ दीपंगृहाणदेवेशरुद्र
प्रियनमोस्तुते॥ वामनायनमः॥ दीपंसम०॥ नमोमोदकहस्तायभालचंद्रायतेनमः॥ नैवेद्यंगृह्यतांदेव
विघ्नपुंजं०॥ सर्वदेवाधिदेवायनमः॥ नैवेद्यंसमर्प्पयामि॥ इदंफलंमयादेवस्थापितंपुरतस्तव॥ तेनमेस
फलावाप्तिर्भवेज्जन्मनिजन्मनि॥ सर्वविघ्नविनाशिनेनमः॥ फलंस०॥ गजाननंनमस्तुभ्यंविनायकनमोनमः
॥ आचम्यतांगणाध्यक्षविघ्नपुंजंनिवारय॥ हेरंबायनमः॥ आचमनंस०॥ पूगीफलंसकर्पूरंनागवल्ली
दलैर्युतं॥ नानाभोग्यसमायुक्तंतांबूलंप्रतिगृह्यतां॥ विघ्नराजायनमः॥ तांबूलंस०॥ हिरण्यगर्भगर्भस्थं
हेमबीजंविभावसोः॥ अनन्तपुण्यफलदमतःशान्तिंप्रयच्छमे॥ विनायकायनमः॥ दक्षिणांस०॥ चन्द्रादि

त्यौच्चधरणीविद्युदग्निस्तथैवच ॥ त्वमेवसर्वज्योतींषिआरार्त्तिं प्रतिगृह्यतां ॥ गणेश्वरायनमः ॥ नीरा
जनंस० ॥ गणेश्वरनमस्तेस्तुसर्वसिद्धिप्रदायक ॥ निर्विघ्नंकुरुदेवेशसर्वकार्येषुसर्वदा ॥ धूम्रायनमः ॥ प्र
दक्षिणांनिवेदयामि ॥ विघ्नेश्वरायवरदायसुरप्रियाय लंबोदरायसकलायजगद्धिताय ॥ नागाननायसित
सर्प्पविभूषिताय गौरीसुतायगणनाथनमोनमस्ते ॥ भक्तार्त्तिनाशनपरायगणेश्वराय सर्वेश्वरायशुभदा
यसुरेश्वराय ॥ विद्याधरायविकटायचवामनाय भक्तप्रसन्नवदनायनमोनमस्ते ॥ इतिनमस्कारंकुर्यात् ॥
अनेनपाद्यादिभिः कृतेनगणपतिपूजनेनश्रीगणपतिर्देवः प्रीयताम् ॥ गणपतिपूजनकृतस्यविधेः सर्वंप
रिपूर्णमस्तु ॥ इतिपुराणोक्तगणपतिपूजनम् ॥ ० ॥ अथप्रसंगात् वेदोक्तप्रकारेणापिसर्वदेवानांषोडशोप

चारपूजनंप्रदर्श्यते ॥ आ नो देवास ईमहे वामं प्रयत्यध्वरे ॥ आ नो देवास आशिषो यज्ञियासो हवामहे ॥ ४॥५॥ इत्यनेनमंत्रेणावाहनं ॥ एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ॥३२॥४॥ इत्यनेनदेवस्यसन्मुखकरणम् ॥ पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥३१॥२॥ इत्यनेनपाद्यं ॥ एतावानस्य महिमातो ज्यायाँश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३१॥३॥ इत्यनेनार्घ्यम् ॥ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद ॥४॥३६॥ इत्यनेनस्नानम् ॥ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे

पयोधाः पयस्वतीः प्प्रदिशः सन्तु मह्यम् ॥१८॥३६॥ इत्यनेन पयस्नानं ॥ ततः शुद्धोदकस्नानं ॥ दधिक्राव्णोऽ अ
कारिषञ्जिष्णोरश्वस्य वाजिनः ॥ सुरभिनो मुखाकरत्प्रण आयू᳐ंषितारिषत् ॥२३॥३२॥ इ० दधिस्नानं ॥ पुन
र्ब्रह्मणस्येत्यनेन शुद्धोदकेन स्नानम् ॥ घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि
स्वाहा ॥ दिशः प्रदिशऽ आदिशो विदिशऽ उद्दिशो दिग्भ्यः स्वाहा ॥६॥१९॥ इ० घृतस्नानं ॥ अपा᳐ं रसमुद्व
यस᳐ं सूर्य्ये सन्त᳐ं समाहितम् ॥ अपा᳐ं रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा
जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥९॥ इ० शर्करास्नानम् ॥ पुनः शुद्धोदकस्नानं ॥ मधुवाता
ऽ ऋतायते मधु क्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥१३॥२७॥ इ० मधुस्नानं ॥ पुनस्तथैव शुद्धोदकस्ना

प्रतिष्ठा नं॥ पञ्च नद्यः सरस्वतीमपियन्तिसस्रोतसः॥ सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्॥ ३४॥ ११॥ इ० पंञ्चा सप्तह

॥ ११॥ मृतस्नानं॥ पुनः शुद्धोदकस्नानं॥ ब्रह्मयज्ञानंप्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः॥ सबुध्न्याऽउप

माऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः॥ १३॥ ३॥ इ० यज्ञोपवीतं॥ वसोः पवित्रमसि द्यौरसि पृथिव्या

सिमातरिश्वनो घर्मोसि विश्वधाऽअसि॥ परमेणधाम्नादृंहस्वमाह्वार्मातेयज्ञपति र्ह्वार्षीत्॥ १॥ २॥ इ०

वस्त्रम्॥ युञ्जन्ति ब्रध्नमरुषञ्चरन्तम्परितस्थुषः॥ रोचन्तेरोचनादिवि॥ २३॥ ५॥ युञ्जन्त्यस्यकाम्याहरि

विपक्षसारथे॥ शोणाधृष्णूनृवाहसा॥ २३॥ ६॥ इ० गन्धम्॥ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत॥ अस्तो ॥ ११॥

षतस्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्रतेहरी॥ ३॥ ५१॥ इ० अक्षतान्॥ श्रीश्चतेलक्ष्मीश्चपत्न्याव

होरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम्॥इष्णन्निषाणामुम्मइषाणसर्व्वलोकम्मइषाण॥३१॥२२॥
इ०पुष्पम्॥ नमोबिल्मिनेचकवचिनेचनमो वर्म्मिणेचवरूथिनेचनमः श्रुतायचश्रुतसेनायचनमोदुन्दुभ्या
यचाहनन्यायचनमोधृष्णवे॥१६॥३५॥इ०बिल्वपत्रं॥ काण्डात्काण्डात्प्ररोहन्तिपरुषःपरुषस्परि॥एवा
नोदूर्वेप्रतनुसहस्रेणशतेनच॥२३॥२०॥इ०दूर्वां॥ धूरसिधूर्वधूर्वन्तन्धूर्वतंय्योस्मान्धूर्वतितन्धूर्वयंवयन्धू
र्वामः॥देवानामसिवह्नितमꣳसस्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम्॥१॥८॥इ०धूपं॥ अग्निर्ज्योति
र्ज्योतिरग्निःस्वाहासूर्य्योज्योतिर्ज्योतिःसूर्य्यःस्वाहा॥ अग्निर्व्वर्चोज्योतिर्व्वर्चःस्वाहा सूर्य्योवर्चोज्यो
तिर्व्वर्चःस्वाहा ज्योतिःसूर्य्यःसूर्य्योज्योतिःस्वाहा॥३॥९॥इ०दीपम्॥ यजमानहस्तप्रक्षालनंदीपदाना

नन्तरंकर्त्तव्यम् ॥ नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौः समवर्तत ॥ पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथालोका
ꣳ॥ऽअकल्पयन् ॥३१॥१३॥ इ० नैवेद्यं ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसन्तोस्यासीदाज्यङ्ग्रीष्म
ऽइध्मः शरद्धविः ॥३१॥१४॥ इ० आचमनं ॥ याः फलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्प
तिप्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥१२॥८९॥ इ० पूगीफलं ॥ हिरण्यगर्भः समवर्त्तताग्रेभूतस्यजातः पतिरे
कऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥१३॥४॥ इ० दक्षिणां ॥ अग्निर्देवतावा
तोदेवतासूर्योदेवताचन्द्रमादेवतावसवोदेवतारुद्रादेवतादित्यादेवतामरुतोदेवताविश्वेदेवादेवताबृहस्प
तिर्देवतेन्द्रोदेवतावरुणोदेवता ॥१४॥२०॥ इ० नीराजनं ॥ येतीर्थानिप्रचरन्तिसृकाहस्तानिषङ्गिणः ॥ तेषाꣳस

हस्रयोजनेवधन्वानितन्मसि॥२६॥६१॥ इ०प्रदक्षिणां॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्या
सन्॥तेहनाकम्महिमानःसचन्तयत्रपूर्व्वेसाध्याःसन्तिदेवाः॥ॐराजाधिराजायप्रसह्यसाहिने नमोवयंवै
श्रवणायकुर्म्महे समेकामान्कामकामायमह्यं कामेश्वरोवैश्रवणोददातु कुवेरायवैश्रवणाय महाराजाधि
राजायनमः ॐस्वस्तिसाम्राज्यंभौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यंमहाराज्यमाधिपत्यमयंसमन्तपर्य्यायी
स्यात्सार्व्वभौमःसार्व्वायुषआन्तादापरार्धात्पृथिव्यैसमुद्रपर्य्यन्तायाएकराडितितदप्येषश्लोकोऽभिगीतोमरुतः
परिवेष्टारोमरुत्तस्यावसन्गृहे आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासदइति॥विश्वतश्चक्षुरुतविश्वतोमुखो
विश्वतोबाहुरुतविश्वतस्पात् सम्बाहुभ्यांधमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवएकः॥३१॥१६॥इ०पुष्पांज

लिं ॥ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे उपप्रयन्तुमरुतःसुदानवइन्द्रप्राशूर्भवासचा ॥ ३४ ॥ ५६ ॥ इतिवि
सर्जनम् ॥ इतिवेदोक्तषोडशोपचारपूजनम् ॥ अथाचार्यादिब्राह्मणानांवरणपूर्वकंपूजनम् ॥ तत्रब्राह्म
णान्प्राङ्मुखानुपवेशयेत् ॥ स्वयंयजमानउदङ्मुखः ॥ मतांतरेतुब्राह्मणानुदङ्मुखानुपवेशयेत् ॥ आचार्यः
प्राङ्मुखः कर्ताप्राङ्मुखइत्यपिलिखितं ॥ तत्रप्रथमंपत्न्याअंचलकोणेरक्तासनहरिद्रादूर्वाफलानिबध्वा
ॐ यंब्रह्मवेदांतविदोवदंतिपरंप्रधानंपुरुषंतथान्ये ॥ विश्वोद्गतेःकारणमीश्वरंवातस्मैनमोविघ्नविनाशनाये
त्यादिमंगलमंत्रैर्यजमानस्यदुकूलांचलकोणेबध्वा यजमानस्यदक्षिणपार्श्वेपत्नीमुपवेशयेत् ॥ सर्वेषुधर्मकृ
त्येषुपत्नीदक्षिणतःसदेतिवचनात् ॥ अन्यमतेतुवामोपवेशनमपिलिखितं ॥ शांतिकेपुंसवनेसर्वेषुस्नानेसंप्राप

नादिषु॥वामेदक्षपविशेत्पत्नींव्याघ्रस्यवचनंयथेतिस्मरणात्॥ततोयजमानःस्वासनेउपविश्य॥पवित्र
पाणिराचम्य॥गणेशंगुरुंचस्मृत्वा॥स्वस्त्ययनादीनिपठित्वा॥दक्षिणहस्तेताम्रपात्रेसकुशयवजलंगृही
त्वा॥ अद्येत्यादिविशिष्टकालपर्यंतमुक्त्वा॥ममदेहआयुरारोग्यपरमश्रीसुखप्राप्तये सपुत्रस्यसभार्यस्य
चिंतितार्थसिद्ध्ये आधिव्याधिजरामृत्युभयशोकदुःखादिनिवृत्तये भूतभविष्यद्वर्तमानत्रिविधोत्पातशां
तयेपरमैश्वर्यप्राप्त्यर्थंकरिष्यमाणशिवादिप्रतिष्ठांगभूततत्तत्कर्मकरणार्थंआचार्यादिब्राह्मणानांवरणपू
र्वकपूजनमहंकरिष्येइतिसंकल्प्य॥जलाक्षतादीन्भूमौप्रक्षिपेत्॥ततोयजमानोविप्राणांसामान्यतःपा
दप्रक्षालनादिकंकृत्वा॥सामान्यतोऽर्घांगमर्घ्यमादाय॥सर्वेभ्योब्राह्मणेभ्यएकदैवदद्यात्॥आपःक्षीरं

कुशाग्राणिदधिदूर्वाक्षतानिच ॥ तिलाःसिद्धार्थकाश्चैवस्थापांगोऽर्घउच्यते ॥ कुशाचितुतिलाइत्यरयस्था
नेकुंकुमपदप्रक्षेपःकृतःसामान्यतोऽर्घदानप्रकारमाह ॥ यजमानःस्वासनादुत्थायोत्तिष्ठन्नेवब्राह्मणान्
प्रार्थयेत् ॥ ॐ आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् ॥ संक्रन्दनोनिमिषएकवीरः
शतꣳसेनाऽजयत्साकमिन्द्रः ॥ ततःप्रार्थनाश्लोकाः ॥ पावनाःसर्ववर्णानांब्राह्मणाब्रह्मरूपिणः ॥ अनुगृ
ह्णन्तुमामद्यशिवयागाख्यकर्मणि ॥ स्वस्वकर्मरतानित्यंवेदशास्त्रार्थकोविदाः ॥ श्रोत्रियाःसत्यवादाश्चदे
वध्यानरताःसदा ॥ यद्वाक्यामृतसंसिक्ताऋद्धिंयान्तिनरद्रुमाः ॥ अंगीकुर्वन्तुमत्कर्मकल्पद्रुमसमाशिषः ॥ य
थोक्तनियमैर्युक्तामंत्रार्थेस्थिरबुद्धयः ॥ यत्कृपालोकनात्सर्वेऋद्धयोवृद्धिमाप्नुयुः ॥ स्वागतंवोद्विजश्रेष्ठामद

नुग्रहकारकाः॥ इदमर्घ्यमिदं पाद्यं भवद्भिः प्रतिगृह्यतां॥ चरणक्षालनाद्देवास्तुष्यन्ति शुद्धमानसाः॥ तज्जलेन-
च संसिक्ताः पूर्णकामा भवन्तु मे॥ इमं वोऽर्घ्यं प्रयच्छामि गृह्णन्तु प्रीतिमानसाः॥ पावयन्तु च मां नित्यं परमन्तु मनो-
रथान्॥ प्रीतये परमेशस्य भूरिभावा मयेऽपुनः॥ शिवयागजपारंभे ह्यवनान्तं च यद्भवेत्॥ तत्संपादनायैव भवतां
प्रार्थनं कृतं॥ इत्युक्त्वा ब्राह्मणानां मये ऽर्घ्यं स्थापयेत्॥ ब्रह्मा चात्र शास्त्रीयः कर्त्तव्यः॥ अत्र ब्रह्माचार्यादयोऽनु
क्रमेणार्घ्या इति केचित्॥ प्रतिष्ठाकाण्डादौ तु पूर्वं ब्रह्मा स्थाने सदस्यवरणमुक्त्वा तदनंतरमाचार्यादीनां वर
णमित्युक्तमस्ति॥ गृह्यमंत्रभाष्ये तु॥ आचार्यं वृणुयात्पूर्वं ब्रह्माणं तदनन्तरं॥ ततः कर्माणि कुर्वीत सर्वसूत्र
विदां मतमिति लिखितमस्ति॥ परशुरामेणापि॥ आचार्यादि समस्तानां जापकानां द्विजन्मनां॥ पाद्यार्घ्यादि

करिष्येऽहं सर्वकर्मांगसिद्ध्यर्थे इत्येव लिखितं॥ तेनात्र श्रुतिस्मृतिसिद्धं उभयं साधुरिति न्यायेन विकल्प एव
ज्ञेयः॥ अन्यतरस्यैवानुष्ठाने तु आत्मनस्तुष्टिरेव नियामिकेति ज्ञेयम्॥ केचित्तु मानुष्यवरणमाचार्यपूर्वकं
दैववरणं तु ब्रह्मपूर्वकमिति व्यवस्थामेवात्र विषये उद्घाटयन्ति॥ तद्यथा॥ आचार्यं प्राङ्मुखमुपवेश्य स्व
यं च यजमान उदङ्मुखो भूत्वा यवजलपुष्पद्रव्यपूगीफलादिकमादायाचार्यस्य दक्षिणजानु आलभ्य॥ अ
द्येत्यादि देशकालादि संकीर्त्यामुकगोत्रोऽमुकप्रवरोऽमुकशर्माऽहं करिष्यमाणशिवादिप्रतिष्ठांगभूतनवक्र
र्मकरणार्थं अमुकगोत्रममुकप्रवरममुकवेदांतर्गतामुकशाखाध्यायिनममुकशर्माणं ब्राह्मणं एभिः पू
गीफलाक्षतद्रव्यचंदनवासोभिराचार्यत्वेन त्वामहं वृणे॥ वृतोस्मीति प्रतिवचनं अनंतरमर्घ्यादिभिः पू

जनम्॥ तच्चाग्रेवक्ष्यते वरणानंतरं व्रतेनदीक्षामाप्नोति दीक्षयाप्नोतिदक्षिणां॥ दक्षिणाश्रद्धामाप्नो-
तिश्रद्धयासत्यमाप्यतेइतिमंत्रंपठेत्॥ अनंतरंयजमानोऽजलिंबध्वाचार्य्यंप्रार्थयेत्॥ शक्रादीनांय
थास्वर्गेत्वाचार्य्योवाबृहस्पतिः॥ तथात्वंममयज्ञेस्मिन्नाचार्य्योभवसुव्रत॥ मंत्रमूर्तिर्भवान्नाथसंसा
रोच्छेदकारकः॥ पूजार्हस्तुयथादेवःकुरुधर्मोद्धृतिंचनः॥ संसारभयभीतेनत्वयंयज्ञःसभक्तितः॥
प्रारब्धस्त्वत्प्रसादेननिर्विघ्नंमेभवेदिति॥ भगवन्सर्वधर्मज्ञशिवधर्मपरायणः॥ सर्वशास्त्रार्थतत्त्वज्ञ
शिवशास्त्रविशारदः॥ अनादिजन्मसंतानेत्वप्रमेयेभवार्णवे॥ अद्यमेसफलंजन्मअद्यमेसफलंधनं॥
अद्यमेजननोच्छित्तिरद्यमेपरमंपदं॥ मोचितोहंत्वयानाथदुच्छेद्याद्भवबंधनात्॥ संत्रातोहंत्वयायस्मा

दप्रमेयाद्भवार्णवात् ॥ मुक्तोहं मर्त्यसंसारात्प्रपन्नोहं तवांतिकमिति ॥ तदनंतरं प्राङ्मुखं ब्रह्माणमुपवेश्य
स्वयमुदङ्मुखो यजमानो यवद्रव्यपूगीफलादिकमादाय ॥ दक्षिणजानुमुपलभ्य ॥ अद्येत्यादिदेशकालप
र्यन्तमुच्चार्यामुकगोत्रोहममुकप्रवरोहममुकशर्माहं सग्रहशिवादिप्रतिष्ठाकर्मणि तत्कृतब्रह्मकर्मकरणा
र्थममुकगोत्रोत्पन्नममुकप्रवरममुकवेदांतर्गतामुकशाखाध्यायिनममुकशर्माणं ब्राह्मणमेभिः पूगी
फलाक्षतद्रव्यादिभिर्ब्रह्मत्वेन त्वामहं वृणे ॥ वृतोस्मीति प्रतिवचनं ॥ अनेन दीक्षामाप्नोतीत्यादि पाठः ॥
आवाहयामि देवेशं ब्रह्माणं कमलोद्भवम् ॥ चतुर्वेदसमायुक्तं सर्वसिद्धान्तवेदिनं ॥ यथा चतुर्मुखो ब्रह्मा
सर्ववेदविशारदः ॥ तथा त्वं मम यज्ञेस्मिन् ब्रह्मा भव द्विजोत्तम ॥ इति ब्रह्माणं प्रार्थयेत् ॥ ततः सर्वानृत्विज

प्राङ्मुखानुपवेश्य स्वयमुदङ्मुखो भूत्वा देशकालौ संकीर्त्यामुकगोत्रोऽहममुकप्रवरोऽहं कलत्रादिकुटुंबसहि
तोऽहं करिष्यमाणशिवादिप्रतिष्ठाकर्मांगभूततत्कर्मकरणार्थममुकामुकगोत्रोत्पन्नानमुकामुकवेदां
तर्गतामुकामुकशाखाध्यायिनो विप्रानृत्विक्त्वेन युष्मानहं वृणे वृतोस्मीति प्रतिवचनं व्रतेन दीक्षा
माप्नोतीत्यादि पठेयुः ॥ ततः प्रार्थयेत् ॥ ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः ॥ अत्रिगोत्रस्तु विप्रेन्द्र
ऋत्विक् त्वं मे मखे भवेति मंत्रेण ऋग्वेदिनमृत्विजं प्रार्थयेत् ॥ कातराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः
॥ काश्यपेयस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भवेति यजुर्वेदिनमृत्विजं प्रार्थयेत् ॥ सामवेदस्तु पिंगाक्षो जा
गतः शक्रदैवतः ॥ भारद्वाजस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भवेति सामवेदिनमृत्विजं प्रार्थयेत् ॥ वृहन्नेत्रो

ःथर्ववेदोनुष्टुप्छंदोरुद्रोदेवतः ॥ वैशंपायनाविप्रेन्द्र ऋत्विक्कृत्वं मे मखे भवेत्यथर्ववेदिनमृत्विजं प्रार्थयेत ॥
भगवन्सर्वधर्मज्ञ सर्वधर्मभृतांवर ॥ विततेमम यज्ञेऽस्मिन्नृत्विक्कृत्वं भवसुव्रत इति प्रत्येकमृत्विजं प्रार्थ
येत् ॥ ततोयजमान उदङ्मुखो भूत्वा प्राङ्मुखान्सदस्यान्वृणुयात् ॥ अद्येत्यादिदेशकालौ संकीर्त्या
मुकगोत्रोत्पन्नोहममुकप्रवरोहं पुत्रपौत्रकलत्रादिकुटुंबसहितोहं अमुकगोत्रोत्पन्नममुकप्रवरममु
कवेदांतर्गतममुकशाखाध्यायिनं ब्राह्मणं त्वामहं वृणे वृतोस्मीति प्रतिवचनम् ॥ सदस्यानां बहुत्व
पक्षेतु बहुवचनपदप्रक्षेपः कर्त्तव्यः ॥ ततः प्रार्थना ॥ ऋत्विग्भिः सहितो ब्रह्मन्संयतैः सुसमाहितैः ॥
आचार्येण च संयुक्तः कुरु कर्म यथोदितं ॥ वांछितार्थफलावाप्त्यै पूजितोसि सुरासुरैः ॥ निर्विघ्नका

र्यसंसिद्ध्यैत्वामहंगणपंवृणे ॥ त्वन्नोगुरुःपितामातात्वंप्रभुस्त्वंपरायणः ॥ आचार्यादिभिःसंयुक्तः
कुरुकर्म्मयथोदितं ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया ॥ सुप्रसन्नैःप्रकर्त्तव्यंकर्मेदंविधिपू
र्वकम् ॥ ततःपुरुषसूक्तसहस्रनामपाठकर्तॄन्वेदपारायणपाठकादीन्वृणुयात् ॥ पूर्वेबह्वृचोद्वा
र्य्य ॥ पूर्वद्वारेऋग्वेदपारायणार्थेत्वामहंवृणे ॥ द्वावेकंवावृणुयात् ॥ एवंदक्षिणद्वारेयजुर्वेदपारा
यणार्थं ॥ पश्चिमद्वारेसामवेदपारायणार्थं ॥ उत्तरद्वारेअथर्ववेदपारायणार्थं ॥ प्रत्येकंद्वावेकंवावृणु
यात् ॥ एवंपूर्वद्वारेऋग्वेदोक्तसूक्तजपार्थं ॥ दक्षिणद्वारेयजुर्वेदोक्तसूक्तजपार्थं ॥ पश्चिमद्वारेसामवे
दोक्तसूक्तजपार्थं ॥ उत्तरद्वारेअथर्ववेदोक्तसूक्तजपार्थंद्वौद्वौएकैकंवाब्राह्मणंवृणुयात् ॥ नवकुंडी

पंचकुंडीपक्षे पंचैषां बहूनामृत्विजां वरणं ॥ एककुंडीपक्षे तु चत्वारिंशत्कोनेनापि निर्वाहो ज्ञेयः ॥ एवं पूर्वद्वारे ऋग्वेदोक्तशांतिसूक्तपाठार्थं ॥ दक्षिणद्वारे यजुर्वेदोक्तशांतिसूक्तपाठार्थं ॥ पश्चिमद्वारे सामवेदोक्तशांतिसूक्तपाठार्थं ॥ उत्तरद्वारे अथर्ववेदोक्तशांतिसूक्तपाठार्थं प्रत्येकं द्वारपालानष्टौ चतुरो वा एकं वा वृणुयात् ॥ सर्वेषां गोत्राद्युच्चारणपूर्वकं वरणं कुर्यात् ॥ एवं नवग्रहमंत्रजापकान् गणेशगायत्रीविष्णुगायत्रीरुद्रगायत्रीदुर्गापाठवास्तुक्षेत्रपालादिजपार्थं च ब्राह्मणान्वृणुयात् ॥ ततो यजमानो यथाशक्ति प्रत्येकमेकदेवं वा सर्वेषामाचार्यादिब्राह्मणानामासनदानादिपुरःसरं पूजनं कुर्यात् ॥ अत्राचार्यऋत्विजानामेव मधुपर्कादिना पूजनमितिकर्मकांडदानतर्पणादयः ततः साधुभवानास्तामर्चयिष्यामो

आवाहयामितंदेवंयक्ष्माणंराजसंज्ञकम् ॥ नानाव्याधिसमाकीर्णंरोगैश्चपरिशोभितं वामेनवरदंचैव
दक्षिणेनाभयप्रदं ॥ आगच्छभगवन्यक्ष्मन्पूजेयंप्रतिगृह्यताम् ॥ ॐ नाशयित्री बलासस्यार्शस उप
चितामसि ॥ अथोशतस्ययक्ष्माणांपाकारोरसिनाशनी ४१। ९७ ॐ भूर्भुवःस्वः राजयक्ष्माणमावाहया
मि० राजयक्ष्मन्निहागच्छेहतिष्ठ राजयक्ष्मणेनमः ४२॥ तदुत्तरपदद्वयेवास्तोर्वामहस्तेरुद्रमावाहयेत् ॥
आवाहयामितंरुद्रंसर्वदाशंकरंविभुं उमाधिष्ठितवामांगंवरदाभयहस्तकं जटागंगाधरंसौम्यंकर्पूरा
द्रिसमप्रभं आगच्छभगवन्रुद्रक्षेत्रेऽस्मिन्सान्निध्योभव ॥ ॐ अवरुद्रमदीमह्यवदेवंत्र्यम्बकम् ॥ यथा
नोवस्यसस्करद्यथानःश्रेयसस्करद्यथानोव्यवसाययात् ३।५८ ॥ ॐ भूर्भुवःस्वः रुद्रमावाहयामि०

 रुद्रइहागच्छेहतिष्ठ रुद्रायनमः ४३॥ तत्पूर्वपदचतुष्के वामहस्ते पृथ्वीधरमावाहयेत्॥ पृथ्वीधरत्वंस 

 प्रमंडलेस्मिन्नाधारभूतोजगतीतलस्य॥ स्थित्वावरंदेहिसुखप्रदस्त्वंगृहाणपूजांभगवन्नमस्ते॥ ॐस्योना

पृथिवीनोभवानृक्षरानिवेशनी यच्छानःशर्म्मसप्रथाः ३६।१३॥ ॐभूर्भुवःस्वः पृथ्वीधरमावाह

यामि० पृथ्वीधरइहागच्छेहतिष्ठ पृथ्वीधरायनमः॥४४॥ मध्येपदचतुष्टयेवास्तोर्हृदयेब्रह्माणमावा

हयेत्॥ आवाहयामिदेवेशंमूर्द्धभागेव्यवस्थितं हंसपृष्ठसमारूढंकोटिसूर्य्यसमप्रभं चतुर्मुखंचतु

र्बाहुंचतुर्वेदसमन्वितं पुस्तकंचाक्षसूत्रादिदधानंचकमण्डलुं विश्वकर्मेतिनामानंदेवतागणपूजितं 

आगच्छभगवन्ब्रह्मन्क्षेत्रेऽस्मिन्सन्निधौभव॥ ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवे

नः आवः सबुध्या ऽउपमा ऽ अस्यविष्ठाः सुःतश्चयोनिमसतश्चविवः ॥२३।३॥ ॐ भूर्भुवः ब्रह्माणमावा
हयामि० ब्रह्मन्निहागच्छेहतिष्ठ ब्रह्मणेनमः ४५॥ ततोमण्डलबाह्ये ईशानादिकोणक्रमेण चरक्यादी
नावाह्यपूजयेत्॥ तद्यथा॥ अहमावाहयिष्यामि चरकींनामराक्षसीं॥ अंकुशं डमरुं शंखं कुंडलंचा
पिबिभ्रतीं आगच्छ चरकि त्वंहि पूजेयं प्रतिगृह्यताम्॥ ॐ यत्तेदेवी निर्ऋतिराबबन्धपाशंग्रीवा
स्वविचृत्यं॥ तत्तेविष्याम्यायुषोनमध्यादथैतंपितुमद्धि प्रसूतः नमोभूत्यैयेदञ्चकार ॥१२।६५॥
ॐ भूर्भुवः स्वः चरकीमावाहयामि० चरकि इहागच्छेहतिष्ठ चरक्यैनमः ॥१॥ अथाग्नेय्यां वि
दारीमावाहयेत्॥ आवाहयाम्यहंदेवीं विदारीं सदृशाननां॥ विशालनखरोमाढ्यां चापबाण

धरांबरासु विदारित्वमत्रागच्छ पूजेयं प्रतिगृह्यतां ॥ ॐ अक्षराजायकितवंकृतायादिनवदर्शं
त्रेतायैकल्पिनंद्वापरायाधिकल्पिनमास्कन्दायसभास्थाणुम्मृत्यवेगोव्यच्छमन्तकायगोघातं
क्षुधेयोगांविकृन्तन्तम्भिक्षमाणउपतिष्ठति दुष्कृतायचरकाचार्यम्पाप्मनेसैलगम् ३०।१८॥
ॐ भूर्भुवःस्वःस्वाविदारीमावाहयामि० विदारीइहागच्छेहतिष्ठ विदार्यैनमः २॥ ततोनैर्ऋ
त्यांपूतनामावाह्यपूजयेत् ॥ पूतनेत्वमिहागच्छराक्षसीगणसंयुते ॥ मयानिवेदितांपूजांगृहाण
वरदाभव ॥ ॐ इन्द्रस्यक्रोडोदित्यैपाजस्यन्दिशाञ्जत्रवोदित्यैभसज्जीमूतान्हृदयौपशेनान्त
रिक्षम्पुरीततानभउदर्य्येणचक्रवाकौमतस्नाभ्यान्दिवंवृक्काभ्यांगिरीन्प्लाशिभिरुपलान्प्लीह्ना

योगः ॐ मित्रस्यत्वाचक्षुषाप्रतीक्ष्येइतिमंत्रंपठेयुः ततोदेवस्यत्वेतिप्रजापतिर्ऋषिस्त्रिष्टुप्छंदःस
वितादेवतामधुपर्कग्रहणेविनियोगः ॐ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामि
त्यंजलिंप्रतिगृह्यसव्येपाणौमधुपर्कंनिधायदक्षिणहस्तस्थकनिष्ठकयांगुल्या ॐ नमःश्यावास्या
यान्नशनेयतआविद्धंतत्तेनिष्कृन्तामीतिमंत्रेणसकृदालोड्यतूष्णींसकृदनामिकांगुष्ठाभ्यामादा
यवह्निमांक्षिप्यपुनरेवंद्विवारमालोडनंनिरीक्षणंकुर्युः ततोयन्मधुनइतिकुत्सऋषिर्जगतीच्छंदोमधु
पर्काधिष्ठातृदेवतामधुपर्कप्राशनेविनियोगः ॐ यन्मधुनोमधव्यंपरमꣳरूपमन्नाद्यन्तेनाहंमधुनो
मधव्येनपरमेणरूपेणान्नाद्येनपरमोमधव्योन्नादोसानीतिमंत्रेणानामिकांगुष्ठाभ्यांमधुपर्कमादाय

त्रिवारम्प्राशनंकुर्य्युः मधुवातेतिप्रत्यृचंवात्रिवारंप्राशनंकुर्युः प्राशितशेषंमधुपर्कंमन्त्रेचाशिनेदद्यात् पु
त्रायवादद्यात् पूर्वस्यांदिशिअसंचरदेशेवानिदध्यात् सर्वम्वाप्राश्नीयादितिसूत्रप्रामाण्येनयथासं
भवंकुर्युः तदनंतरमाचम्य वाङ्मआस्येऽस्त्वितिकराग्रेणमुखस्पर्शनंनसोर्मेप्राणोऽस्त्वितिदक्षिण
वामनासारंध्रे अक्ष्णोर्मेचक्षुरस्त्वितिदक्षिणोत्तरचक्षुषीकर्णयोर्मेश्रोत्रमस्त्वितिकर्णयोः बाह्वोर्मे
बलमस्त्वितिवामदक्षिणबाह्वोः ऊर्वोर्मेओजोऽस्त्वितिवामदक्षिणोरू अरिष्टानिमेऽङ्गानितनूस्तन्वा
मेसहसंत्वितिशिरःप्रभृतीनिसर्वाण्यंगानिउभाभ्यांहस्ताभ्यामालभेत् एवमाचांतोदकानांविप्राणां
यजमानोगौर्गौर्गौरितिब्रूयात् ततोब्राह्मणाः मातारुद्राणान्दुहितावसूनां स्वसादित्यानाममृतस्य

नाभिः प्रणवोच्चार्य किंतु पंजनार्थमागःमनागामादीतिं चाधिष्ठ ममचामुकशर्मणोयजमानस्यचपा
प्याहृतः ॐमित्युच्चार्य उत्सृजततृणान्यग्नुइत्युच्चैर्ब्रूयुः गंगागोदावरीचैवयमुनाचसरस्वती नर्मदा
सिंधुकावेरीताभ्यःस्नानीयमाहृतमित्यनेनस्नानं ब्राह्मणेभ्योनमःस्नानंसमर्पयामि वस्त्रयुग्मंस
मानीतंपट्टसूत्रेणनिर्मितं स्वर्णरचितंदिव्यंभोधिमेन्द्रगृह्यताणत्वं इत्यनेनवस्त्रयुग्मं ब्राह्मणेभ्यो
नमः वस्त्रयुग्मंसमर्पयामि कार्पासतंतुभिर्युक्तंब्रह्मणानिर्मितंपुरा अनेकरत्नखचितमुपवीतंगृ
हाणमे इत्यनेनयज्ञोपवीतम् ब्राह्मणेभ्योनमः यज्ञोपवीतंनिवेदयामि चंदनंमलयोद्भूतंकस्तूर्या
गरुसंयुतं कर्पूरेणचसंयुक्तंस्वीकुरुष्वानुलेपनमित्यनेनचंदनं ब्राह्मणेभ्योनमः चंदनंसमर्पया

मि शतपत्रैः कर्णिकारैश्चपंकैर्मल्लिकादिभिः तुलस्यासुक्तपुष्पाणिविप्रेन्द्रत्वंगृहाणमे इत्यनेनपु
ष्पाणि ब्राह्मणेभ्योनमःपुष्पाणिसमर्पयामि दशांगंगुग्गुलंधूपंसुगंधंचमनोहरं कृष्णागरुसमा
युक्तंधूपंदेवगृहाणमेइत्यनेनधूपं ब्राह्मणेभ्योनमःधूपंसमर्पयामि आज्यंचवर्त्तिसंयुक्तंवन्हिना
योजितंचयत् दीपंगृहाणविप्रेन्द्रत्रैलोक्यतिमिरापहमित्यनेनदीपंब्राह्मणेभ्योनमः दीपंसमर्पया
मि अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं भक्ष्यभोज्यसमायुक्तंनैवेद्यंगृह्यतांविभोइत्यनेननैवेद्यं
ब्राह्मणेभ्योनमः नैवेद्यंसमर्पयामि कर्पूरैलालवंगादिनागवल्लीदलान्वितं पूगीफलसमायुक्तंतांबू
लंप्रतिगृह्यतामित्यनेनतांबूलं ब्राह्मणेभ्योनमः तांबूलंसमर्पयामि हिरण्यगर्भगर्भस्थंहेमबीजंवि

भावसोः अनंतपुण्यफलदमतःशांतिंप्रयच्छमेइत्यनेनदक्षिणां ब्राह्मणेभ्योनमःदक्षिणांसं०॥ चंद्रादि
त्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वज्योतींषिआरार्तिंप्रतिगृह्यतामित्यनेनारार्तिं ब्राह्मणेभ्योन
मआरार्तिंनिवेदयामि॥ यानिकानिचपापानिब्रह्महत्यासमानिच तानिसर्वाणिनश्यंतुप्रदक्षिणायाःप
देपदेइतिप्रदक्षिणां ब्राह्मणेभ्योनमःप्रदक्षिणांनिवेदयामि ततःसर्वेषांप्रार्थना क्षमातपोदयादा
नंसत्यंशौचंचसंयमः विद्याविनयसंयुक्ताब्राह्मणालोकतारकाः यजनंयाजनंचैवाध्ययनाध्याप
नंतथा दानप्रतिग्रहोहोमःषट्कर्मनिरतःसदा त्रिकालसंध्याकरणेस्वाध्यायाचरणेतथा नानाशा
स्त्राभ्यासरताःसंसारोच्छेदकारकाः भवद्दर्शनमात्रेणमुक्तास्तुभवबंधनात् अग्निशुश्रुषणरताधर्म

मार्गे दृढव्रताः परदारपरद्रव्यपरनिंदादिविवर्जिताः भवतां दर्शनेनैव शुद्ध्यन्ति मलिना जनाः भूमिदेवा स्तु विप्रा वै त्रिषु लोकेषु विश्रुताः अस्मिन्कर्मणि सर्वे वै सहाया संतु सर्वदा ब्राह्मणाः सन्तु मे सक्ताः पापात्त्रातुं समाहिताः वेदानां चैव दातारः पातारः सर्वदेहिनां जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः देवानां पितृणां चैव तृप्त्यर्थं याजकाः कृताः येषां देहे स्थिता वेदाः पावयंति जगत्त्रयं रक्षंतु सततं ते मां जपयज्ञे व्यवस्थिताः ब्राह्मणा जंगमं तीर्थं त्रिषु लोकेषु विश्रुतं येषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः श्रोत्रियाः सत्यवाचश्च देवध्यानरताः सदा यद्वाक्यामृतसंसिक्ता ऋद्धिं याति नरद्रुमाः अंगीकुर्वंतु कर्मैतत्क

स्त्वद्भुमसमाशिषः यथोक्तनियमैर्युक्तामंत्रार्थैस्थिरबुद्धयः यत्नपालोचनालसर्वोर्तक्षयोहृद्धिमास्तु
सुः ममयज्ञेजपेपूज्याःसंतुमेनियमान्विताः अक्रोधनाःशौचपराःसततंब्रह्मचारिणः देवध्यानरतानि
त्यंप्रसन्नमनसःसदा अदुष्टभाषणःसंतुमासंतुपरनिंदकाः ममापिनियमात्येतेभवंतुभवतामपि इ
तिप्रार्थयेत् ॥ ततोयजमानोनिरुक्तब्राह्मणानामेववैदिकंदेववरणंकुर्यात् तथाहि प्राङ्मुखोप
वेशितानेवाचार्यादीन्स्वयमुदङ्मुखोयजमानोवृत्तानांब्राह्मणानांवैदिकंदेववरणमहंकरिष्ये इति
प्रतिज्ञासंकल्पंकुर्यात् तत्रवैदिकवरणेपरशुरामेणब्रह्माणंपूर्वंवृत्वाऽनंतरमाचार्यादीनांवरणमुक्तं
तत्रपुष्पांजलिंगृहीत्वा ॐ आवाहयाम्यहंदेवंब्रह्माणंकमलोद्भवं कमंडलुधरंहस्तेकुशपुस्तक

धारिणं वेदशास्त्रपुराणज्ञमागमोक्तिविदं यथा यजमानस्य यज्ञेऽस्मिन्ब्रह्मा त्वं रक्षको भव ब्रह्माणं
रक्तवर्णाभं रक्तवस्त्रैरलंकृतं चतुर्भुजं चतुर्वक्त्रं सस्रुवं स्रुचिहस्तकं यथा चतुर्मुखो ब्रह्मा सर्ववेदधरो
भुवि तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम इत्यादिश्लोकैर्ब्रह्ममूर्तिं अंजलिना पुष्पाणि विकर
न्नावाहयेत् एवमावाह्य सयवेन हस्ताग्रेण दक्षिणजानुमालभ्य वृणुयात् अमुकगोत्रोऽमुकप्रवरा
न्वितोऽमुकशर्माहं अमुकगोत्रममुकशर्माणं ब्राह्मणममुकवेदांतर्गतममुकशाखाध्यायिनं मेभिश्चंदन
पुष्पालंकारवासोभिस्त्वामहं वृणे वृतोऽस्मीति प्रतिवचनानंतरमंजलिं बध्वा प्रार्थयेत् मर्माणि त इति
मंत्रेण ब्राह्मणं प्रणाम्याहं ॐ मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानुवस्ताम् उरोर्वरीयो

घरुणस्त्वेकृणोतुजयन्तंत्वानुदेवामदन्तुइतिमंत्रेणनमस्कृत्य शिवयागजपयज्ञेनाहंयक्ष्ये तत्रत्वंमेब्रह्मा
भवेत्यभिधाय ॐ भवामीतिप्रतिवचनं ततःपूर्ववत्पुष्पांजलिंगृहीत्वा ॐआवाहयामिदेवेज्यमाचार्यंय
ज्ञकारिणं पुराणन्यायमीमांसासर्वशास्त्रार्थपारगं बृहस्पतिर्यथास्वर्गेज्ञानविज्ञानसंयुतः तथैवमम
यज्ञेस्मिन्नाचार्यस्त्वंभवप्रभोइतिपठित्वाअंजलिनातन्मूर्धनिपुष्पाणिविकिरन्नावाहयेत् एवमावाह्य
सव्येनहस्ताग्रेणदक्षिणजानुमालभ्यवृणुयात् अमुकगोत्रोमुकप्रवरोमुकशर्माहममुकगोत्रोत्पन्न
ममुकप्रवरममुकवेदांतर्गतममुकशाखाध्यायिनममुकशर्माणंब्राह्मणंगंधचंदनपुष्पाक्षतालंकारयज्ञो
पवीतवस्त्रादिभिस्त्वामाचार्यमहंवृणे वृतोस्मीतिप्रतिवचनानंतरं अंजलिंबध्वाप्रार्थयेत् बृहस्पतेइ

तिमंत्रेणाचार्यंप्रणाम्याहं ॐ बृहस्पतेअतियदर्योअर्हाद्युमद्विभातिक्रतुमज्जनेषु यद्दीदयच्छवस
ऋतप्रजाततदस्मासुद्रविणंधेहिचित्रं शिवयागजपयज्ञेनाहंयक्ष्ये तत्रत्वंमेआचार्योभव ॐ भवामी
तिप्रतिवचनंअनंतरं पुष्पांजलिंगृहीत्वा ॐ आवाहयेऋषींस्तान्येपूर्वस्यांदिशिसंस्थिताः मार्कंडेयोभर
द्वाजः काश्यपेयस्तुनारदः पुलस्त्यःपुलहश्चैवदत्तात्रेयश्चभार्गव अस्ययज्ञस्यसिद्ध्यर्थमेतेऋग्वेदपा
ठकाः ऋग्वेदंवपुषाश्वेतंशुभ्रवस्त्रैरलंकृतं श्वेताभरणसंयुक्तंकांचनेनविभूषितं इतिपुष्पांजलिंत
न्मूर्ध्निविकिरन्नावाहयेत् सव्येनदक्षिणहस्तेनदक्षिणजानुमालभ्यवृणुयात् अमुकगोत्रोहमि
त्यादिपठित्वाअमुकगोत्रोत्पन्नमित्युच्चार्यणमिवरणसामग्रीभिऋग्वेदिनंत्वामहंवृणे वृतोस्मीतिप्र

तिवचनानंतरं प्रार्थयेत् अग्निमीळेसुमंत्रेणऋग्वेदंप्रणमाम्यहं ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृ
त्विजं होतारंरत्नधातमं इतिनमस्कृत्य शिवादियागेनाहंयक्ष्ये अत्रत्वंमेऋग्वेदोभव ॐ भवामीति
प्रतिवचनं ततोयजमानःपुष्पांजलिमादाय आवाहयेदृषींस्तान्येदक्षिणांदिशमाश्रिताः अग
स्त्योव्यासवाल्मीकीगौतमोगर्गसंज्ञकः मांडव्योऽन्योदधीचश्चगालवश्चतथापरः यजमानस्यय
ज्ञेस्मिन्नृषयोज्ञाननिर्मलाः रत्नाभरणसंयुक्तंरत्नकुंडलशोभितं रक्तवस्त्रधरंदेवंयजुरावाहयाम्यहं
मित्यंजलिनापुष्पाणितन्मूर्ध्निविकिरन्नावाहयेत् सव्येनदक्षिणहस्ताग्रेणदक्षिणजानुमालभ्यब्रूय
यात् अमुकगोत्रोहं० अमुकगोत्रोत्पन्नं० एभिर्वर्णसामग्रीभिस्त्वामहंयजुर्वेदिनंयजुर्वेदप्रतिनिधित्वेन

प्रतिष्ठा वृणे वृतोऽस्मीति प्रतिवचनं अंजलिं बध्वा प्रार्थयेत् इषेत्वेति मंत्रेण यजुर्वेदं नमस्यहं इषेत्वोर्जेत्वा संग्रह

॥२५॥ वायवस्थ देवोवः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजापतीरनमिवा

ऽअयक्ष्मामावस्तेन ईशतमाघशंसो ध्रुवा अस्मिन् गोपतौस्यात् बह्वीर्यजमानस्य पशून्पाहि इ

त्यनेन नमस्कृत्य शिवादियागेनाहं यक्ष्ये तत्र त्वं मे यजुर्वेदो भव ॐ भवामीति प्रतिवचनं ततो यजमानः

पुष्पांजलिं गृहीत्वा आवाहयामि ऋषीं स्तान्ये पश्चिमां दिशमाश्रिताः वशिष्ठश्चैव दुर्वासा जमदग्निः पराश

रः विश्वामित्र ऋषिशृंगस्त्वात्रेयोष्यत्रि रष्टमः यजमानस्य यज्ञे ऽस्मिन् सामगायेसमुद्यताः सामवेदं श्या ॥२६॥

मवर्णं श्यामवस्त्रैरलंकृतं गीतध्वनिसमायुक्तं वीणाहस्तां विचिंतयेत् ममयज्ञस्य रक्षार्थं सामभावा

ह्वयाम्यहमित्यंजलिनात्तन्मूर्द्धनिपुष्पाणिविकिरन्नावाहयेत् सव्येनहस्तायेणदक्षिणजानुमालभ्य
ब्रूयात् अमुकगोत्रोऽमुकप्रवरोऽमुकवेदांतर्गतामुकशाखाध्याय्यमुकशर्माहममुकगोत्रोत्पन्नममु
कप्रवरममुकवेदांतर्गतामुकशाखाध्यायिनमेभिर्दास्यमानवर्णद्रव्यैः सामवेदप्रतिनिधित्वेनसामवे
देनत्वामहंवृणे वृतोस्मीतिप्रतिवचनानंतरंप्रार्थयेत् अग्नआयाहिमंत्रेणसामवेदंनमाम्यहं ॐ
अग्नआयाहिवीतयेगृणानोहव्यदातये निहोतासत्सिबर्हिषि इतिनमस्कृत्य शिवादियागेनाहं य
स्येतत्वंमेसामवेदोभव ॐ महं भवामीतिप्रतिवचनं ततोयजमानः पुष्पांजलिंगृहीत्वा ॐ सा
वाहयेऋषींस्तान्येउत्तरस्यांदिशमाश्रिताः क्रतुर्दक्षोमरीचिश्चयाज्ञवल्क्योमहातपाः शौनको

यस्त्वजीमूतोवामदेवस्तथांगिराः यजमानस्ययज्ञेस्मिन्नथर्वशिरसासह अथर्ववेदंकृष्णाभंवेष्टितंनी
लवाससा नीलाक्रांतंमहारौद्रंचिंतयेऽच्युतमानसं कराग्रीविशिरवांभूत्वादुष्टांशशिशिविरंयनुः अतिरौद्रं
ततोध्यात्वारौद्रंचततपरोक्षयं इत्यादिमंत्रैश्चांजलिनापुष्पाणिविकरन्नावाहयेत् सव्येनहस्ताग्रेण
दक्षिणजानुमालभ्यवृणुयात् तथाहि अमुकगोत्रोऽमुकप्रवरोऽमुकवेदांतर्गतामुकशाखाध्याय्य
हममुकगोत्रोत्पन्नममुकवेदांतर्गतममुकशाखाध्यायिनममुकशर्माणंब्राह्मणमेभिश्चंदनपुष्पाक्ष
तालंकारवासोभिस्त्वामहंवृणे वृतोस्मीतिप्रतिवचनानंतरंप्रार्थयेत् शन्नोदेवीतिमंत्रेणाथर्ववेदं
नमाम्यहं ॐ शन्नोदेवीरभिष्टयआपोभवंतुपीतये शंयोरभिस्रवन्तुनइत्यनेननमस्कृत्य शिवा

दियागेनाहंयक्ष्ये तत्रत्वंमे ऽथर्ववेदोभव भवामीतिप्रतिवचनं उक्तप्रकारेणजापकादीन्वृणुयात्
उक्तंचपरशुरामेण एवंयस्यत्वयज्ञोत्रंयथावत्प्रवरान्वितं यजुर्वेदाध्यायिनंविप्रंयच्छाखाध्यायिनंपुनः
जापिनंशिवनामानमृत्विजंत्वामहंवृणे शिवादियागेनाहंयक्ष्ये तत्रत्वंमेजापकोभव भवामीतिप्रति
वचनं ततोवरुणश्राद्धार्थंनानानामगोत्रान्नानाप्रवरान्नानाशाखाध्यायिनोनानाशर्मणोब्राह्म-
णान् शिवादियागांगभूतवरुणश्राद्धेयुष्मानहंवृणे वृतास्मइतिप्रतिवचनं तदुक्तंपरशुरामेण
गुर्वादिभ्यःसमस्तेभ्यऋत्विग्भ्योरिदमासनं गंधपुष्पंचधूपंचवरुणश्राद्धेप्रकल्पयेत् अद्येत्यादि
वृतानांब्राह्मणानामासनाद्यर्चनमहंकरिष्येइतिसंकल्प्य वरुणश्राद्धेवरुणरूपेभ्योब्राह्मणेभ्यइ

मानिस्थासनपाद्यार्घाचमनगंधपुष्पधूपदीपनैवेद्ययज्ञोपवीतवस्त्रालंकारादीनिब्राह्मणेभ्योनम
इतिदद्यात् प्राजापत्यान्युपवीतानि बार्हस्पत्यानिवस्त्राणि अग्निदेवताकानिस्वर्णनिर्मितानिकुं
डलाद्यलंकारादीनि तांबूलादीनिमधुपर्कपात्रादीनिवरुणरूपेभ्यः समस्तब्राह्मणेभ्यः स्वाहासंपद्य
तां ततआचमनं ततोवरुणपूजनं वरुणश्राद्धादिविधेः परिपूर्णतांप्रार्थयेत् प्रमादादितिपठेत् इति
विप्रवरणंपूजनंच अथयजमानहस्तेरक्षाबंधनं भविष्योत्तरपुराणे दूर्वायवांकुराश्चैवबालकं
नूतपल्लवाः हरिद्राद्वयसिद्धार्थःशिखिपक्षोरगत्वचः कंकणौषधयश्चैताः कौतुकाख्यानवस्मृताः
अथवायवांकुरांस्तथादूर्वाःसर्षपान्गंधसंयुतान् गोमयंदधिसंयुक्तंकारयेत्ताम्रभाजने तद्वाज

नंकरसंपुटेधृत्वामन्त्रान्पठेत्ततः ॐ गणाधिपंनमस्कृत्यनमस्कृत्यपितामहं विष्णुंरुद्रंश्रियंदेवींवंदेभक्त्या
सरस्वतीं स्थानाधिपंनमस्कृत्यदिननाथंनिशाकरं धरणीगर्भसंभूतंशशिपुत्रंबृहस्पतिं दैत्याचार्यंन
मस्कृत्यसूर्यपुत्रंमहाग्रहं राहुंकेतुंनमस्कृत्ययज्ञारंभेविशेषतः शक्राद्यादेवतासर्वामुनींश्चकश्यपा
म्यहं गर्गमुनिंनमस्कृत्यनारदंमुनिसत्तमं वशिष्ठंमुनिशार्दूलंविश्वामित्रंमहामुनिं व्यासंकविंनमस्कृत्य
सर्वशास्त्रविशारदं सर्वेनमस्कृतास्तेमेयज्ञंरक्षंतुसर्वदा पूर्वेरक्षतुगोविंदआग्नेय्यांगरुडध्वजः या-
म्येरक्षतुवाराहोनारसिंहस्तुनैर्ऋते केशवोवारुणींरक्षेद्वायव्यांमधुसूदनः उत्तरेश्रीधरोरक्षेदीशाने
चगदाधरः उर्द्धुंगोवर्द्धनोरक्षेदधस्तात्तुत्रिविक्रमः एवंदशदिशोरक्षेद्वासुदेवोजनार्दनः यज्ञांगेपा

तुमांशंखः पृष्ठेपद्मंतुरक्षतु वामपार्श्वेगदारक्षेद्दक्षिणंतुसुदर्शनः उपेन्द्रःपातुब्रह्माणमाचार्यंपातुवा
मनः अच्युतःपातुऋग्वेदंयजुर्वेदमधोक्षजः कृष्णोरक्षतुसामाख्यमथर्वाणंतुमाधवः विप्रायेचोप
देष्टारस्तांश्चदामोदरोऽवतु वेदमंत्रैश्चकर्त्तव्यारक्षाशुभ्रैश्चसर्षपैः रक्षोहणादिभिर्मंत्रैःसूक्तंरक्षोह
णंपठेत् ॐ रक्षोहणम्वलगहनम्वैष्णवीमिदमहन्तम्वल्गमुत्किरामि यम्मेनिष्ट्योयममात्योनिन
खायेदमहन्तम्वल्गमुत्किरामियम्मेसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि १ स्वराडसिसप
त्नहासत्रराडस्यभिमातिषाहाजनराडसिरक्षोहासर्वराडस्यमित्रहा २ रक्षोहणोवल्गहनः प्रोक्षा
मिवैष्णवान्रक्षोहणोवोवलगहनोऽवनयामिवैष्णवान्रक्षोहणोवोवलगहनोवस्तृणामि वैष्ण

वान्नक्षोहणोवोवलगहनाउपदधामिवैष्णवीरक्षोहणोवोवलगहनोपर्य्युहामिवैष्णवीवैष्णवम-
सिवैष्णवास्त्य ३ नतद्रक्षांसिनपिशाचास्तरन्तिदेवानामोजः प्रथमजᳫं ह्येतत् योबिभर्त्तिदाक्षायण
ᳫं हिरण्यᳫं सदेवेषुकृणुतेदीर्घमायुः समनुष्येषुकृणुतेदीर्घमायुः ४ रक्षोहाग्निर्व्विश्वचर्षणिरभि
योनिमयोहते द्रोणासधस्थमासदत् ५ इतिदिग्बंधपूर्वकयजमानहस्तेरक्षाबंधनंकुर्यात् ॐ य
दाबध्नन्दाक्षायणाहिरण्यᳫं शतानीकायसुमनस्यमानाः तन्मआबध्नामिशतशारदायायुष्माञ्जरद
ष्टिर्यथासम् १ येनबद्धो बलीराजादानवेन्द्रोमहाबलः तेनत्वांप्रतिबध्नामिरक्षेमाचलमाचल २ इ
त्यनेनमंत्रेणयजमानदक्षिणहस्तेकंकणबंधनं स्त्रियस्तुवामहस्तेरक्षाबंधनंकर्त्तव्यं रक्षाबंधनं

कृत्वा मातृदेवोभवपितृदेवोभवआचार्यदेवोभवअतिथिदेवोभवसत्यादेताआशिषःसंविधि
विप्राआशीर्वादंदद्युः केचित्तुआचार्यादिवरणात्पूर्वमेवरक्षाबंधनंकुर्वंति तत्रयथादेशाचारंतथाकर्त
व्यमितिविवेकः परशुरामः कृत्वैवंवरणंपूर्वंवाच्यंपुण्याहवाचनम् अध्वर्युरुदकुंभंतमाकृष्यापि
तफलान्वितं सामवेदीसमुत्थाप्यमेषवत्येषसुन्वरेत् आकृष्यापिनमित्यस्यगणेशपूजनानंतरंस्थापि
तमित्यर्थः तंकलशमादायपुण्याहवाचनंकर्त्तव्यं अथवापुण्याहवाचनादौकलशंयथाविधिंस्था
प्यपुण्याहवाचनंकुर्यादितिविवेकः इतिकंकणबंधनप्रकारः अथघटस्थापनपूर्वकंपुण्याहवाच
नम् तत्रादौघटस्थापनं भूरसीतिभूमिस्पर्शः भूरसिभूमिरस्यादितिरसिविश्वधायाविश्व

स्य भुव॑नस्य धुर्त्री पृ॑थि॒वीं य॑च्छ पृथि॒वीं दृ॑ꣳह पृथि॒वीं मा हि॑ꣳसीः ॥१२॥१८॥ धा॒न्य॑मसीति धान्यं॑
न्यमसि धिनु॒हि दे॒वान् प्रा॒णाय॑ त्वोदा॒नाय॑ त्वा व्या॒नाय॑ त्वा दी॒र्घामनु॒ प्रसि॑ति॒मायु॑षे धां दे॒वो वः॑ सवि॒ता हि
रण्य॑पाणिः॒ प्रति॑गृभ्णा॒त्वच्छि॑द्रेण॒ पाणि॑ना॒ चक्षु॑षे त्वा म॒हीना॒म्पयो॑ऽसि ॥१॥२०॥ आजिघ्र कलशमिति
तस्योपरि कलशस्थापनम्॥ आजि॑घ्र क॒लशं॑ म॒ह्या त्वा॑ वि॒शन्त्विन्द॑वः। पुन॑रू॒र्जा निव॑र्तस्व॒ सा नः॑ स॒
हस्रं धुक्ष्वो॒रुधा॑रा॒ पय॑स्वती॒ः ॥८।४३॥ वरुणस्येत्युदकमक्षेपणम्॥ वरु॑णस्यो॒त्तम्भ॑नमसि॒ वरु॑णस्य
स्कम्भ॒सर्ज॑नी स्थो॒ वरु॑णस्य ऽऋत॒सद॑न्यसि॒ वरु॑णस्य ऽऋत॒सद॑नमसि॒ वरु॑णस्य ऽऋत॒सद॑न॒मासी॑द
॥४॥३६॥ वसोःपवित्रमिति वस्त्रं कंठे वेष्टयेत् वसोः॑ प॒वित्र॑मसि श॒तधा॑रं॒ वसोः॑ प॒वित्र॑मसि स॒हस्र॑धारं

म् देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥१॥३॥ याः फलिनीरिति पूंगीफ
लप्रक्षेपः याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳ
हसः ॥१२॥९८॥ कनकं १ कुलिशं २ नीलं ३ पद्मरागं च ४ मौक्तिकं ५ एतानि पंचरत्नानि परिवाजोनि मंत्रेण क
लशे निक्षिपेत् परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् दधद्रत्नानि दाशुषे ॥२१॥२५॥ हिरण्यगर्भ इ
ति द्रव्यं क्षिपेत् हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम ॥१३॥४॥ गंधद्वारामिति गंधं प्रक्षिपेत् गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषि
णीम् ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् युञ्जन्तीत्यनेन वा गन्धः युञ्जन्ति ब्रध्नमरुषञ्चर

न्तुम्पारितस्युषः रोचेन्नैरोचनादधि याओषधीतिसर्वौषधीः प्रक्षिपेत् या॰ओषधीः पूर्वाजाता देवे
भ्यस्त्रियुगम्पुरा मनैनुबभ्रूणामहँ शतन्धामानिसप्त च ॥१२।७५॥ ततोऽस्मिन्कलशे अश्वस्थाना
द्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् राजद्वाराद्गोकुलाच्चमृदमानीयनिक्षिपेत् स्योनापृथिवीतिमंत्रे
णसप्तमृदः स्योनापृथिवीनोभवानृक्षरानिवेशनी यच्छानःशर्मसप्रथाः ॥३६।१३॥ काण्डादिति
दूर्वाप्रक्षेपः काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥१३।२०
चूताश्वत्थन्यग्रोधोदुंबरप्लक्षइतिपंचपल्लवान् अश्वत्थेतिमंत्रेणकलशमुखेस्थापयेत् अश्वत्थे
वोनिषदनम्पर्णेवोवसतिष्कृता गोभाजइत्किलासथयत्सनवथपूरुषम् ॥१२॥७९॥ पवित्रस्य

इतिमंत्रेणपवित्राणिक्षिपेत् पवित्रेस्थोवैष्णव्योसवितुर्वःप्रसवउत्पुनाम्यच्छिद्रेणपवित्रेण

सूर्य्यस्यरश्मिभिः देवीरापोऽअग्रेगुवोऽअग्रेपुवोऽग्रऽइममद्ययज्ञन्नयताग्रेयज्ञपतिꣳसुधातुं

यज्ञपतिन्देवयुवम्॥१॥१२॥ पूर्णादर्वीतिमंत्रेण तंडुलपूरितपात्रंकलशोपरिस्थापयेत् पूर्णादर्विपरा

पतसुपूर्णापुनरापत वस्नेवविक्रीणावहाऽइषमूर्जꣳशतक्रतो॥३॥४९॥ श्रीश्चतइतिमंत्रेणना

लिकेरफलनिधानम् श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् इष्ण

न्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ३१॥२२॥ मनोजूतिर्ज्जुषतामाज्यस्यबृहस्पतिर्य्यज्ञमिमन्त

नोत्वरिष्टंय्यज्ञꣳसमिमंदधातु विश्वेदेवासऽइहमादयन्तामोꣳ प्रतिष्ठेत्यनेनमंत्रेणकलशप्रतिष्ठा

ॐ भूर्भुवःस्वःगणेशवरुणाविहागच्छइहतिष्ठ गणानान्त्वेतिमंत्रेणगणपतिं तत्वायामीतिमंत्रेणवरुणंकल
शेष्वावाह्यपूजयेत् गणानान्त्वागणपतिᳬं हवामहे प्रियाणान्त्वाप्रियपतिᳬं हवामहे निधीनान्त्वा
निधिपतिᳬं हवामहे वसोमम आहमजानिगर्भधमात्वमजासिगर्भधम् ॥२३।१९॥ तत्वायामिब्रह्म
णावन्दमानस्तदाशास्ते यजमानोहविर्भिः अहेडमानोवरुणेहबोध्युरुशᳬंसमानआयुःप्रमो
षीः॥२१॥२॥ षोडशोपचारैर्गणेशवरुणौपूजयेत्॥ ततःकलशेगङ्गाद्यावाहनम्॥ सर्वेसमुद्राःसरित
स्तीर्थानिजलदानदाः॥ आयान्तुयजमानस्यदुरितक्षयकारकाः॥ काशीकुशस्थलीमाया॥ वन्त्ययो
ध्यामथोपुरी॥ शालग्रामंसगोकर्णंनर्मदाचसरस्वती॥ तीर्थान्येतानिकुंभेऽस्मिन्विशन्तुब्रह्मशास

नात् ऊर्ध्वहस्तासरोजाक्षीपद्महस्ताशशिप्रभा आगच्छतुसरिज्ज्येष्ठागंगापापप्रणाशिनी नीलोत्पलद
लश्यामापद्महस्तांबुजेक्षणा आयातुयमुनादेवीकूर्म्मयानस्थितासदा प्राचीसरस्वतीपुण्यापयोष्णी
गौतमीतथा चर्म्मिलाचंद्रभागाचसरयूर्गंडकीतथा जंबुकाचशतद्रुश्चकालिकाऽस्रप्रभातथा वित
स्ताचविपाशाचनर्म्मदाचपुनःपुना गोदावरीमहावर्त्ताशर्करावर्त्तमार्ज्जुनी कावेरीकौशिकीचैवतृ
तीयाचमहानदी विटंकाप्रतिकूलाचसोमनंदाचविश्रुता करतोयावेत्रवतीरेणुकावेणुकाचया
आत्रेयगंगावैतरणीकाश्मीरीन्ह्लादिनीचया पावनीचशतत्रासाकल्मषाशांशिनीतथा वशिष्ठाच
अपाप्याचसिन्धुवत्यारुणीतथा ताम्राचैवत्रिसंध्याचतथामंदाकिनीपरा तैलकाशीचपाराचदुंदु

भीनकुलीतथा नीलगंधान्वबोधाचपूर्णचंद्राशशिप्रभा अमरेशंप्रभासंचनैमिषंपुष्करंतथा आ
षाढिडिंडिभारभूतंचलाकुलं हरिश्चंद्रपरंगुह्यंगुह्यंमध्यमकेश्वरम् श्रीपर्वतंसमाख्यातं
जल्पेश्वरमतःपरम् आम्रातकेश्वरंचैवमहाकालंतथैवच केदारमुत्तमंगुह्यंमहाभैरवमेवच ग
यांचैवकुरुक्षेत्रंगुह्यंकनखलंतथा विमलंचंद्रभासंचमाहेंद्रंभीममष्टकम् वस्त्रापदंरुद्रकोटिम
विमुक्तंमहालयं गोकर्णंभद्रकर्णंचहेमांशस्थानमष्टमं छागलाद्व्यंद्विरंडंचैवकर्कोटंमंडलेश्वरम्
कालंजरवनंचैवदेवदारुवनंतथा शंकुकर्णंतथैवेहस्थलेश्वरमतःपरम् एतान्यष्टतीर्थानिगुह्य
क्षेत्राणिसर्वशः तानिसर्वाणिकुंभेस्मिन्नाविशंतुब्रह्मशासनात् इत्यादिरीत्याकलशेतीर्थान्यावा

स्थकलशाभिमंत्रणंकुर्यात् कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः मूलेतस्यस्थितोब्रह्मामध्ये
मातृगणाःस्मृताः कुक्षौतुसागरासर्वेसप्तद्वीपावसुंधरा ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः
अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ततःकलशप्रार्थना देवदानवसंवादेमथ्यमानेमहोदधौ
उत्पन्नोसियदाकुम्भविधृतोविष्णुनास्वयम् त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः त्वयिति
ष्ठन्तिभूतानित्वयिप्राणप्रतिष्ठिताः शिवस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः आदित्यावसवो
रुद्राविश्वेदेवाःसपैतृकाः त्वयितिष्ठन्तिसर्वेपियतःकामफलप्रदाः त्वत्प्रसादादिमंयज्ञंकर्तुमीहे
जलोद्भव सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदा एवंघटस्थापनंकृत्वापुण्याहवाचनंकुर्यात् ॥

तत्रवेदव्यासः संपूज्यगंधमाल्याद्यैर्ब्राह्मणान्स्वस्तिवाचयेत् धर्म्मकर्म्मणिमांगल्येसंग्रामेऽद्भुतद
र्शने पुण्याहवाचनंदैवेब्राह्मणस्यविधीयते ॐकारपूर्वंविप्रस्यभवेत्पुण्याहवाचनं एतदेवनिरोंकारं
कुर्यात्क्षत्रियवैश्ययोः उपांशुचतथावैश्यस्वस्तिशूद्रंचकारयेत् ततोऽवनीकृतजानुमण्डलोकमल
मुकुलसदृशमंजलिंशिरस्याधायदक्षिणेनपाणिनासुवर्णपूर्णंकलशंधारयित्वा अंगानिस्पृशेत् सि
रशिमेसौभाग्यमस्तु मस्तकेश्रीकान्तिरस्तु चक्षुर्षेस्तुतेजोस्तु श्रोत्रयोर्मेश्रवणेन्द्रियशक्तिरस्तु
वाह्वोर्मेबलमस्तु इत्यादिरीत्यांगानिस्पृशन्कलशंपृथिव्यामवस्थापयेत् दीर्घानागानद्योगिर
यस्त्रीणिविष्णुपदानिच तेनायुःप्रमाणेनपुण्यंपुण्याहंदीर्घमायुरस्तु अपांमध्येस्थितादेवाः

सर्वमप्रकृतमितिष्ठितम् ब्राह्मणानांकरेन्यस्ताः शिवाह्यापोभवन्तुनः शिवाह्यापःसन्तु लक्ष्मीर्वसति
पुष्पेषुलक्ष्मीर्वसतिपुष्करे सासेवस तदैनित्यंसौमनस्यंतथास्तुनः सौमनस्यमस्तु अक्षतंचास्तुमे
पुण्यंदीर्घमायुर्यशोबलं यद्यच्छ्रेयस्करंलोकेतत्तदस्तुसदामम अक्षतंचारिष्टंचास्तु गन्धाःपान्तु
सुमांगल्यमस्तु पुष्पाणिपान्तु सौश्रियमस्तु अक्षताःपान्तु आयुष्यमस्तु ताम्बूलानिपान्तु ऐश्व
र्यमस्तु दक्षिणापान्तु आरोग्यमस्तु बहुदेयंचास्तु दीर्घमायुः शान्तिःपुष्टिःतुष्टिःश्रीर्यशोविद्या
विनयोवित्तंबहुपुत्रंबहुधनंचायुष्यंचास्तु यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाः शुभाःशो
भनाःप्रवर्त्तन्ते तमहमोंकारमादिंकृत्वा ऋग्यजुःसामाथर्वाशीर्वचबहुऋषिसंमतंसमनुज्ञातं भवद्भिः

ऽनुज्ञातः पुण्यंपुण्याहंवाचयिष्ये वाच्यताम् माविघ्नंमाचमेपापंमासंतुपरिपंथिनः सौम्याःभवंतुसु
खिनःसर्वेलोकाःसुखावहाइतिकर्त्तावदेत् विप्रास्तथास्त्वित्युक्त्वा करोतुस्वस्तितेब्रह्मास्वस्तिवापिद्विजा
तयः सरीसृपाश्चयेश्रेष्ठास्तेभ्यस्तेस्वस्तिसर्वदा ययातिर्नहुषश्चैवधुंधुमारोभगीरथः तुभ्यंराजर्षयःस
र्वेस्वस्तिकुर्वंतुनित्यशः स्वस्तितेस्तुद्विपादेभ्यश्चतुष्पादेभ्यएवच स्वस्त्यस्त्वपादकेभ्यश्चसर्वेभ्यःस्वस्तिसर्व
दा स्वाहास्वधाशचीचैवस्वस्तिकुर्वंतुतेसदा लक्ष्मीररुंधतीचैवकुरुतांस्वस्तितेनघ असितोदेवलश्चै
वविश्वामित्रस्तथांगिराः स्वस्तितेद्यप्रयच्छंतुकार्त्तिकेयश्चषण्मुखः विवस्वान्भगवान्स्वस्तिकरोतुतव
सर्वदा दिग्गजाश्चैवचत्वारःक्षितिश्चगगनंग्रहाः अधस्ताद्धरणींयोसौनागोधारयतेसदा शेषश्चपन्न

गः श्रेष्ठः स्वस्तितुभ्यंप्रयच्छतु यजुः भद्रङ्कर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः स्थिरैरङ्गैः
॥३८॥ स्तुष्टुवांसस्तनूभिर्व्यशेमहिदेवहितंयदायुः २५॥२१॥ अथऋक्॥ द्रविणोदाद्रविणसस्तुरस्यद्रवि
णोदाःसनरस्यप्रयंसत् द्रविणोदावीरवतीमिषन्नोद्रविणोदारासतेदीर्घमायुः॥ अथयजुः॥ द्रविणो
दापिपीषतिजुहोतप्रचतिष्ठत नेष्टादृतुभिरिष्यतः २६॥२१॥ अथसाम॥ देवोवोद्रविणोदाःपूर्णांवि
विष्टासिचम्ऊर्ध्वा१सिंचा२ध्वमुपवाप्रणध्वम् आदिद्वोदे२वओहते१इह्रा२३ भा३४३ औ२३४ इडा
३र्न्निधियतिन्नो१ अग्निःत्वष्टाविष्णुःप्रजायांसरराणोयजमानायद्रविणन्दधातु॥ अथऋक्॥ ॥३८॥
सवितापश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात् सवितानःसुवतुसर्वतातिंसविता

नौरासतान्दीर्घमायुः॥ यजुः॥ सविता त्वा सवानां सुवतामग्निर्गृहपतीनां सोमो वनस्पतीनाम् बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्म्मपतीनाम्॥ ८॥ ३८॥ २॥ अथ साम॥ उद्धुंउष्टुणाउता २३४ याइतिष्ठा देवो न सविता ऊर्ध्वा वा २३२ जा त्यो सविता पादं अभिः २ वाद्या ईद्वे २ र्वि विड्यासा २३ हा ३४ इड २३४ पद्डा॥ ३॥ अथाथर्वणः॥ येन देवं सवितारं परि देवा अधारयन् ते नेमं ब्रह्मणस्पते परि राष्ट्राय धत्तन॥ ४॥ अथ ऋक्॥ नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः॥ १॥ अथ यजुः॥ न तद्रक्षा ᳪसि न पिशाचास्तरन्ति देवानामोजः प्रथमज ᳪ ह्येतत्॥ यो बिभर्त्ति दाक्षायण ᳪ हिरण्य ᳪ स देवेषु कृणुते दीर्घमायुः

समंतुप्येषुकृणुतेदीर्घमायुः॥३४।४।५॥ अथसाम॥ चन्द्रमाअप्स्वा अन्था प्सुवांतरा अवासुपर्णोधाव्रा
वावतेदिविनवोहिराउवारायनोइमायाउवा पदम्विदाउवानिविद्युताः वित्तंमाअस्याउवास्यारोदा२३सा
३४३ स्या२३४५इडा॥३॥ अथर्वणः॥ नमोनमोभवतिजायमानोन्हांकेतुरुषसामेत्यग्रम् भागंदेवेभ्योवि
दधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः॥४॥ अथऋक्॥उच्चादिविदक्षिणावन्तो१ अस्थुर्ये१ अश्वदाःसहते
॥सूर्य्येणहिरण्यदा१ अमृतत्वम्भजन्तेवासोदाःसोमप्रतिरन्त१ आयुः॥१॥ अथयजुः॥उच्चातेजातम
न्धसोदिविसद्भूम्याददे॥उग्रं शर्म्ममहिश्रवः २।२६।१५॥ अथसाम॥उच्चाता२३जातमन्धसादिवा२मा२
द्भू२मिया२३ददा३उग्रं शर्मामहा२३३ अवा३स्तोषे२३४॥२॥ अथर्वणः॥उच्चैर्घोषोदुन्दुभिःसत्वनायन्वा

नस्यत्यः सम्भृतन्त्वस्मिन्याभिः वाचंसुप्रवानोदमयत्स्वपत्नौ । सिंहइवज्येष्ठांनभिरुतस्त्वाविद्धि ॥ ४ ॥ इत्ये
ताश्चतस्रऋचः ग्राह्याः ब्राह्मणाब्रूयुः ॥ ब्राह्मणानांप्रार्थना ॥ व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां
सर्वेषाम्ब्राह्मणानांमनः समाधीयतां समाहितमनसः स्थ प्रसीदन्तु भवन्तः ॥ प्रसन्नास्म ॥ अथ पूर्वस्थापि
तघटात्ताम्रपात्रेजलमादाय ॥ यजमानमूर्द्धनिदूर्वयासेचनंकुर्यात् ॥ शान्तिरस्तु ॥ पुष्टिरस्तु ॥ तुष्टिरस्तु ॥
वृद्धिरस्तु ॥ ऋद्धिरस्तु ॥ अविघ्नमस्तु ॥ आयुष्यमस्तु ॥ आरोग्यमस्तु ॥ शिवमस्तु ॥ शिवंकर्मास्तु ॥ कर्म्मसमृ
द्धिरस्तु ॥ धर्म्मसमृद्धिरस्तु ॥ वेदसमृद्धिरस्तु ॥ शास्त्रसमृद्धिरस्तु ॥ पुत्रपौत्रसमृद्धिरस्तु ॥ धनधान्यसमृद्धि
रस्तु ॥ इष्टसम्पदस्तु ॥ ततोवहिर्निक्षिपेत् ॥ अरिष्टनिरसनमस्तु ॥ यत्पापंरोगमशुभमकल्याणंतद्दूरेप्रति

हतमस्तु ॥ ततः पुनरेवमार्ज्जनम् ॥ यच्छ्रेयस्तदस्तु ॥ उत्तरेकर्मण्यविघ्नमस्तु ॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंताम् ॥ तिथिकरणमुहूर्त्तनक्षत्रग्रहलग्नसंपदस्तु ॥ तिथिकरणमुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंताम् ॥ तिथिकरणे समुहूर्त्ते सनक्षत्रे सग्रहे सलग्ने सदेवते प्रीयेताम् ॥ दुर्गापाञ्चाल्यौ प्रीयेताम् ॥ अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम् ॥ इन्द्रपुरोगा मरुद्गणाः प्रीयंताम् ॥ वशिष्ठपुरोगा ऋषिगणाः प्रीयंताम् ॥ माहेश्वरीपुरोगा उमाद्या मातरः प्रीयन्ताम् ॥ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् ॥ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् ॥ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम् ॥ आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ॥ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् ॥ श्रीसरस्वत्यौ प्रीयेताम् ॥ श्रद्धामेधे

प्रियेताम्॥ भगवतीकात्यायनीप्रीयताम्॥ भगवतीमाहेश्वरीप्रीयताम्॥ भगवतीऋद्धिकरीप्री
यताम्॥ भगवतीवृद्धिकरीप्रीयताम्॥ भगवतीतुष्टिकरीप्रीयताम्॥ भगवतीपुष्टिकरीप्रीयताम्
॥ दुर्गापाञ्चाल्यौप्रीयेताम्॥ भगवन्तौविघ्नविनायकौप्रीयेताम्॥ सर्वाःकुलदेवताःप्रीयंताम्
॥ सर्वाग्रामदेवताःप्रीयंताम्॥ सर्वाइष्टदेवताःप्रीयन्ताम्॥ पुनर्बर्हिस्त्यागः॥ हताश्चब्रह्मद्विषः॥
हताश्चपरिपन्थिनः॥ हताश्चविघ्नकर्त्तारः॥ हताश्चविघ्नकराः॥ शत्रवःपराभवंयान्तु॥ शाम्यन्तु
घोराणि॥ शाम्यन्तुपापानि॥ शाम्यन्तुईतयः॥ पुनर्मार्जनम्॥ शुभानिवर्द्धंताम्॥ शिवाआपः
सन्तु॥ शिवाऋतवःसन्तु॥ शिवाअग्नयःसन्तु॥ शिवाअतिथयःसन्तु॥ शिवाआहुतयःसन्तु॥

शिवावनस्पतयःसन्तु॥शिवाओषधयःसन्तु॥अहोरात्रेशिवेस्याताम्॥अथऋक्॥शम्नःकनिक्र
॥३९॥ दद्देवःपर्ज्जन्योनअभिवर्षतु ओषधयःप्रतिधीयताम्॥शन्नोद्यावापृथिवीशंप्रजाभ्यःशन्नोऽस्तु
द्विपदेशञ्चतुष्पदे॥अथयजुः॥निकामेनिकामेनःपर्ज्जन्योअभिवर्षतु फलवत्योनऽओषधयः
पच्यन्ताम् योगक्षेमोनःकल्पताम्॥२२।२२॥अथसाम॥त्वष्टा२४ नोदैव्यम्वचःपर्ज्जन्योब्रह्म
णस्पतीः२२पुत्रैर्भ्रातृभिरदितिर्नुपान्तु२३नाःदुष्टरा२२त्रमरणंवाचा३४३।३ २३४५ इंद्रा३३॥अ
थाथर्वणः॥गणास्त्वोपगायन्तुमारुताःपर्जन्यघोषिणःपृथक् सर्गावर्षस्यवर्षतोवर्षन्तुपृथि ॥३९॥
वीमनु॥४॥शक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाःसर्वेग्रहाः

प्रीयन्ताम् ॥ भगवान्नारायणः प्रीयताम् ॥ भगवान्पर्जन्यः प्रीयताम् ॥ भगवान्स्वामीमहासेनः प्री
यताम ॥ पुरोनुवाक्यया यत्पुण्यं तदस्तु ॥ याज्यया यत्पुण्यं तदस्तु ॥ वषट्कारेण यत्पुण्यं तदस्तु ॥ प्रा
तः सूर्योदये यत्पुण्यं तदस्तु ॥ एतत्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये वाच्यताम् ॥ ब्राह्मं पुण्य
महर्यच्च सृष्ट्युत्पादनकारकं ॥ वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ भो ब्राह्मणा मम यजमान
स्य सकुटुंबस्य सपरिवारस्य गृहे पुण्याहं भवन्तो ब्रुवन्तु ३ ॥ पुण्याहं ॥ ३ ॥ ऋक् ॥ उद्गातेव शकुने साम
गायसि ब्रह्मपुत्रइव सवनेषु शंससि वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमावद विश्व
तो नः शकुने पुण्यमावद ॥ १ ॥ अथ यजुः ॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ॥ पुनन्तु वि

अथो भूता निजातवेदः पुनीहि मां १९ ॥३९॥ अथ साम ॥ पुनानाः सोमाः उधारा २३४ यान्यापो सानो
अर्षस्यारत्नधायोनिमृतस्य सा २ इड् औहोवाऽन्मादेवोहिरा २३ ण्या ३ औहोउवाएयया आ ३ हो ४
वाहो ४ ५ इडा २ वा ४ ॥३॥ अथाथर्वणः ॥ पुनन्तु मा देवजनाः पुनन्तु मनवो धिया पुनन्तु विश्वा भूता
निपवमानः पुनातु मां ॥४॥ पृथिव्यां सुदुहितायां नु यत्कल्याणं पुराकृतं ॥ ऋषिभिः सिद्धगन्धर्वैस्तत्क
ल्याणं ब्रुवन्तु नः ॥ भो ब्राह्मणा मम यजमानस्य सकुटुंबस्य सपरिवारस्य गृहे कल्याणं भवन्तो ब्रुवन्तु २
॥ कल्याणं ३ ॥ ऋक् ॥ आपः सोममस्तमिन्द्रमयाहि कल्याणीर्जायासुरणं गृहे ते ॥ यत्र रथस्य बृहतो
निधानं विमोचनं वाजिनो दक्षिणावत् ॥१॥ अथ यजुः ॥ यथेमां वाचं कल्याणीमावदानि जनेभ्यः

ब्रह्मराजन्याभ्याᳬं शूद्राय चार्य्याय च स्वाय चारणाय च ॥ प्रियो देवानां दक्षिणायै दातुरिह भूया
समयम्मे कामः समृध्यताम् ॥२६।२॥ अथ साम ॥ कयानश्चि ३ त्रा ३ आभुवदूती सदावृधः सखा
ओउहोहा ३ कया २३ शचाष्ठ्या ३ यौहो ३ हुमा ३ वा २ र्ता ३ पहो २३ ॥३॥ अथाथर्वणः ॥ विश्वजित्क-
ल्याण्यैमापरिधेहि कल्याणि द्विपाच्च सर्वन्नो रक्ष चतुष्पाद्यच्च नःस्वम् ॥४॥ सागरस्वस्तु यान्कृद्धिम्मी
हालक्ष्म्यादिभिः कृता सम्पूर्णा रूपमायाञ्चतान्तामृद्धिम्बुवन्तु नः ॥५॥ ओं ब्राह्मणा मम यजमानस्य स
कुटुंबस्य सपरिवारस्य गृहे ऋद्धिं भवन्तो ब्रुवन्तु ॥३॥ ऋध्यताम् ३ ॥ ऋद्धु ॥ ऋध्यास्मस्तोमं सनुयाम
वाजमानो मन्त्रं सरथेहोपयातम् ॥ यशो न पक्कं मधु गोष्वन्तरा भूतांशो ३ अश्विनोः काममप्राः ॥१॥

अथयजुः॥सुवस्व१र्कार्दिरस्यगन्मज्योतिरमृता१अभूम॥दिवम्पृथिव्या१अध्यारुहामाविदा
मदेवान्स्वर्ज्योतिः॥२॥८५२॥ अथसाम॥ औहोवा औहोवा अगन्मज्योतिः२ अगन्मज्योति२ अ
मृता१ अभूम२ अमृता१ अभूमान्तरिक्षंपृथिव्या३ अध्यारुहामा३ दिवमन्तरिक्षादध्यारुहामा३ अ
विदामदेवान्३ ससुदेवैरगन्महि३ हौहोवा औहोवा औहोवासुवर्ज्योती।२३४५॥३॥ अथाथर्वणः
॥ ऋधङ्मन्त्रोयोनिंयोनिंयआवभूवामृतासुर्वर्द्धमानः सजन्मा अदब्धासुरभ्राजमानोहेवभितो
धर्त्तादाधार त्रीणि४॥ स्वस्त्यस्तुयाविनाशाख्या पुण्यकल्याणवृद्धिदा॥ विनायकप्रियानित्यन्ता
न्तांस्वस्तिंब्रुवन्तुनः॥८॥ ओंब्राह्मणाःमम यजमानस्यसकुटुंबस्यसपरिवारस्यगृहे स्वस्तिंभवन्तोब्रु

वन्तु ३॥ स्वस्ति ३॥ ऋक्॥ स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति सा नो ऽ अमा सो ऽ अ
रणे नि पातु स्वावेशा भवतु देवगोपाः॥ अथ यजुः॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः
स्वस्ति नस्तार्क्ष्यो ऽ अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥२५॥१९॥१०॥ अथ साम॥ त्रामहवा३न
शक्रं पुरुहूतमिं२३ द्राम् ३६७ स्वस्तिनो मघवा ३४३ इतू३वा५ इन्द्राः ६५६ त्रातारमिंद्रमवितारमिन्द्रा
सहवे हवे सुहवा७ं शूरमिं३॥ अथाथर्वणः॥ स्वस्ति मात्र उत पित्रे णो ऽ अस्तु स्वस्ति गोभ्यः विश्वस्मै
भूतं सुविदत्रन्नो ऽ अस्तु ज्योगेव दृशेम सूर्य्यम्॥४॥ मृकण्डसूनोरायुर्यद्वल्लोमशयोस्तथा॥ आ
युषा तेन संयुक्ता जीवन्तु शरदः शतम् शतञ्जीवन्तु भवंतः॥ ऋक्॥ शतञ्जीव शरदो वर्द्धमानः शतं

हैं मन्त्राऽच्छ तसुपवसतास् ॥ शतमिन्द्राग्नीसंवितावृहस्पतिः शतायुषाहविषेमस्पुनर्दुः ॥१२॥ अ
थयजुः ॥ शतमिन्नुशरदो अन्तिदेवायत्रानश्चक्राजरसंतनूनास् ॥ पुत्रासोयत्रपितरोभवन्तिमा
नोमध्यारीरिषतायुर्गन्तोः ॥२५॥२२॥ अथसाम ॥ हा ४ हाउहाउयशोहाउ ३ वर्चोहाउ ३ अस्मिन्हाई
२ अस्मिन्हा ३ ३ १ उवा २ तवेदिन्द्रावमंवसुत्वम्पुष्यसिमध्यमसत्राविश्वस्यपरमस्यराजसिनकिष्ट्वा
गोषुवृण्वतेहाउहाउहाउयशोहाउ ३ वर्चोहाउ ३ अस्मिन्हाई ३ अस्मिन्हा ३१ उवा २ आयुर्विश्वायु
र्विश्वंविश्वमायुरशीमहिप्रजांत्वष्टरधिनिधेस्वस्मे शतंजीवेमशरदोवयन्ते २३४५ शतायुर्वैपुरुषः श
तवीर्यस्तस्मात्प्रिस्त्वाप्राणायत्वापानायत्वाव्यानायत्वेतिप्राणापानव्यानानेवतदात्माधरन्त्यते ॥३॥ अ

थसामः॥ आयुरस्मै धेहि जातवेदः प्रजां त्वष्टरधिनिधेह्यस्मै रायस्पोषं सवितरासुवास्मै शतं जीवा
ति शरदस्तवायम्॥ ४॥ १३ शिवगौरीविवाहे याग्यश्रीरामेनृपात्मजे॥ धनदस्य गृहे याश्रीरस्माकं
सास्तु सद्मनि॥ १४॥ अस्तु श्रीः॥ ऋक्॥ श्रियेजातः श्रिय आनिरियाय श्रियं वयो जरितृभ्यो द
धाति श्रियं वसाना अमृतत्वमायन्भवन्ति सत्या समिथा मितद्रौ॥ अथ यजुः॥ मनसः काममा
कूतिं वाचः सत्यमशीय॥ पशूनां रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ३९ ४१६॥
अथ साम॥ आयन्तसू ४ रायामृविश्वा २३ इन्द्रारस्याभवा श्रियै आयन्तीय्यम्भवतो आवैः आ
यन्तीयाथं श्रीनवमामहः श्रियेमनवश्रियाथं प्रतिष्ठापयाति ३ अथवा भद्राइन्द्रस्यरा ३५॥

अथाथर्वणः॥ राहवातुवरुणः सोमो १ अग्निर्हिहस्यातिर्वसुमिरेह्नयाति अस्यश्रीसुपसंयानसंवध्य
स्यवेतुंसमनसोजाताभुव्दादधिश्रिमोहिरितेवा॥४॥ प्रजापतिर्लोकपालो धाताब्रह्माचदेवराट्॥ भग
वान्छाश्वतोनित्यंसनोरक्षतुसर्वतः॥१७॥ भगवान्प्रजापतिःप्रीयताम्॥ ऋक्॥ प्रजापतेनत्वदे
तान्न्यन्न्योविश्वाजातानिपरितावभूव॥ यत्कामास्तेजुहुमस्तन्नो १ अस्तुवयथुंस्यामपतयोरयी
णा॥ अथयजुः॥ प्रजापतेनत्वदेतान्न्युन्न्योविश्वारूपाणिपरितावभूव॥ यत्कामास्तेजुहुम
स्तन्नो १ अस्त्वयममुष्यपितासा वस्यपिताव्वयथुंस्यामपतयोरयीणाम्२३॥६५ अथसाम॥
हाउ३ इमाः३ प्रजाः३ प्रजापतेह्वो ३२ प्रजावतेह्वा ३१ उद्वाणत्हृदयं२ हृदया ३१२ उणवा १२ प्रजाप

रूषमजिजन २३८ ३२डा२३ ४५ ॥३॥ अथाथर्वणः ॥ प्रजापतेरावृतो ब्रह्मणा वर्म्मणाहं कश्यपस्य
ज्योतिषा वर्चसा चजरदृष्टिः कृतवीर्यो विहायाः सहस्रायुः सुकृतश्चरेयं ॥४२॥ आयुष्मतेस्वस्ति
मते यजमानाय दाशुषे ॥ क्रियास्त्वाशिषः सन्तु ऋत्विग्भिर्वेदपारगैः ॥२०॥ देवेन्द्रस्य यथा स्वस्ति
यथा स्वस्ति गुरुर्गृहे ॥ एकलिंगे यथा स्वस्ति तथा स्वस्ति सदा मम ॥२१॥ आयुष्मतेस्वस्तिरस्तु ॥
ऋक् ॥ स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ॥ बृहस्पतिं सर्वगणं स्वस्तये स्व
स्तये आदित्यासो भवन्तु नः ॥२२॥ अथ यजुः ॥ प्रतिपन्थामपद्महि स्वस्तिगामनेहसम् ॥ येनविश्वाः
परिद्विषो वृणक्ति विन्दते वसु ॥४।२९॥ अथ सामः ॥ त्वमग्ने यज्ञानां होता २३४ सदेवजूता २३४ सः

सह्नोवानन्तारुता ३२ ७ं रय्यानामृत्र्यारिसुना २३४ द्रमानपूतना २४३ जमाशुं १ स्वस्तिपथिता स्वर्यामि
ह्ना ३ ४३ ह्न २ वाइडमा ६ ५६ ॥३॥ अथाथर्वणः॥ येदस्वस्तिदुर्गणःस्वस्तिःपरशुर्वेदिःपरशुनःस्व
स्तिह्नविष्कृतोयज्ञियायज्ञकामास्तदेवासोयज्ञमिमंजुषन्ताम् ४॥ स्वस्तिदाविषांपतिर्वृत्रह्नाविमृ
धोवशी वृषेन्द्रःपुरएतुनःसोमपाअभयंकरः ५॥ स्वस्तयेवाजिभिश्चप्रणेतःसयन्महीरिषऽआस
त्सिपूर्वीः रायोवन्तारोवृहतःस्यामास्मेऽअस्तुभगऽइन्द्रप्रजावान् भद्रादधिश्रेयःप्रेहिवृहस्पतिः
पुरएताते ऽअस्तु अथेममस्यावरआपृथिव्याआरेशत्रून्कृणुहिसर्ववीरम् २३॥ मुहोअग्नेःसमि
धानस्यशर्म्मण्यनागामित्रेवरुणेस्वस्तये श्रेष्ठेस्यामसवितुःसवीमनितद्देवानामवोऽअद्याव्

णीमहे ३३।१७॥२४॥ अथयजुः॥ विश्वानिदेवसवितर्दुरितानिपरासुव॥ यद्भद्रन्तन्नऽआ
सुव ३०।३॥२५॥ तस्यैसप्तदशसामिधेन्योभवन्तिसद्वन्तावाज्यभागौसदेवावकुर्न्यते विश्वानि
देवसवितःसयानोदेवसवितासद्वावेद्युपा ॐ शम्हवियोयोज्यंनुवाक्ये अनुष्टुभौसंयाज्येरा
जति ॐ हिरण्यन्दक्षिणानासुपलयाअथोतक्रमानयन्नमायशतमानम्भवतिशतायुर्वैपुरु
षः शतेन्द्रियआयुरेवेन्द्रियंवीर्यमात्मधत्ते॥ मन्त्रार्थाःसफलाःसन्तुपूर्णाःसन्तुमनोरथाः॥
शत्रूणांबुद्धिनाशोस्तुमित्राणामुदयस्तव॥२६॥ ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः॥
ब्रह्मवाक्यसदानित्यंनिमंतुतवशत्रवान्॥२७॥ अक्षतान्विप्रहस्तात्तुनित्यगृह्णन्तियेनराः॥

चत्वारितेषांवर्द्धन्तिआयुःकीर्तिर्यशोबलम्॥२८॥ श्रीर्वर्चस्वमायुष्यमारोग्य माविधात्च्छु
भमानंमहीयते धनंधान्यंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः॥ ॥इतिदानखंडोक्तपुण्याह
वाचनम्॥ ॥ततईशानकोणे व्रणंकलशंपूर्वोक्तप्रकारेणस्थापयित्वा
तदुपरिगणेशंवरुणंचावाह्यपूजयेत् पूर्वंपुण्याहवाचनेपूजितमेववाकल
शमीशानकोणेस्थापयेत् ततोब्रह्मामुरारिस्त्रिपुरांतकारीभानुःशशीभू
मिसुतोबुधश्च गुरुश्चशुक्रः शनिराहुकेतवः सर्वेग्रहाः शांतिकराभवंत्वि
तिमंत्रेणाक्षतपुंजोपरिसामान्यतोनवग्रहानावाह्यपूजयेत् अधिदेवता

वा. उ. ईशा.

| | | | |
|---|---|---|---|
| धृति पुष्टि | देव | जया | स्वधा |
| शची | ग. | कुलदे. | मातर |
| मेधा | गौ. | पद्मा | लोक |
| तुष्टि | वि. | सा. | स्वाहा |

प. पू.

नै. द. अ.

प्रत्यधिदेवतादिक्पालादिसहितसूर्यादिनवग्रहेभ्योनमः पाद्यादिनापूजयेत् ततोहस्तेनजल मादायानेनयथासंभवेनपंचोपचारादिपूजनेनअधिदेवताप्रत्यधिदेवतादिसहितसूर्यादिनव ग्रहाःप्रीयताम् अथमातृकास्थापनपूर्वकपूजनप्रकारःकथ्यते अकृत्वामातृयागंतुवैदि कंयस्समाचरेत् तस्यक्रोधसमाविष्टाहिंसामिच्छंतिमातरः पंचोर्द्ध्वपंचतिर्यक्चरेखाकार्या प्रयत्नतः षोडशकोष्ठकाज्ञेयापूज्यामातरःपृथक्पृथक् कुलदेवींगणेशंचगौरींपद्मासमन्वि तां पूजयेन्मध्यमेकोष्ठेशेषावात्र्येदिककोष्ठके मध्यकोष्ठेचतुष्केतुस्थापयेच्चपृथक्पृथक् ग णेशंवायुकोणेचमध्यमेचकुलेश्वरीम् गौरींचनैर्ऋतेपूज्यापद्मापावककोणके शचीचयाम्ये

मेस्थाप्यामेधाचैवद्वितीयके सावित्रीदक्षिणेपूज्याविजयाचद्वितीयके जयाचउत्तरेस्थाप्या
देवसेनाद्वितीयके स्वाहाग्नेयांसमभ्यर्च्याईशानेचस्वधातथा पूर्वेतुमातरःपूज्यालोकमात
रस्तथैव के धृतिपुष्टिर्वायुकोणेतुष्टिंचनैर्ऋततथा एवंहिमातरःस्थाप्यास्वस्वस्थानेपृथक्पृ
थक् अथपूजनम् देशकालादिसंकीर्त्य क्रियमाणशिवादिप्रतिष्ठाकर्मांगभूतश्रीगणपति
सहितगौर्यादिषोडशमातृणामावाहनपूर्वकंपूजनमहंकरिष्येइतिसंकल्प्य गौरीपद्माशचीमे
धासावित्रीविजयाजया देवसेनास्वधास्वाहामातरोलोकमातरः हृष्टिःपुष्टिस्तथातुष्टिरात्मनः
कुलदेवता इतिपठित्वा आदौगणपतिंपूजयेत् ततःश्रीपूजनम् ततोगौर्यादीनांपूजनमितिक्र

मः तथाहि आशुःशिशानोवृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनामिति पठित्वा गजवक्त्रं गणाध्यक्षंसर्वविघ्नविनाशनं लंबोदरंत्रिनेत्रंच आगच्छगणनायक गणानांत्वेतिमंत्रेण वायु-युकोणे ॐ भूर्भुवःस्वः श्रीमहागणपते इहागच्छ इहतिष्ठ श्रियैनमः ॐ भूर्भुवःस्वः श्रीइहागच्छ इहतिष्ठ हिमाद्रितनयांदेवींवरदांभैरवप्रियां ॥ लंबोदरस्यजननींगौरीमावाहयाम्यहम् ॥ आयङ्गौः पृश्निरक्रमीदसदन्मातरंपुरः ॥ पितरंच प्रयन्त्स्वः गौरीमावाहयामिस्थापयामि ॐ भूर्भुवःस्वः गौरीइहागच्छइहतिष्ठ १ सुवर्णाभांपद्महस्तांविष्णोर्वक्षस्थलेस्थितां त्रैलोक्यपूजितांदेवि पद्मामावाहयाम्यहम् ॐ हिरण्यरूपाउषसोविरोक उभाविन्द्राउदिथः सूर्यश्च आ

प्रतिष्ठा ॥ रोहणमश्वरूपं मिन्मुगर्तन्तस्तेश्च क्षाथ्यामादितिं दितिं च मित्रोसि वरुणोसि २०।१६॥ पद्मामावाह ॥ संग्रह

॥७७॥ यामि स्थापयामि भूर्भुवः स्वः पद्मे इहागच्छ इह तिष्ठ ॥२॥ उत्पलाक्षीं सहस्रदशनां शचीं कुंडलधारि

णाम् देवराजप्रियां भद्रां शचीमावाहयाम्यहम् ॥ कुदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ॥ उ

पोपेन्नु मघवन्भूय इन्नु ते दानन्देवस्य पच्यते ऽआदित्येभ्यस्त्वा ॥ शचीमावाहयामि स्थापया

मि ॐ भूर्भुवः स्वः सचीहागच्छेह तिष्ठ ॥३॥ विवस्वतकरस्पृष्टं सकंतं पद्मवासितां ॥ बुद्धिप्रसा

दिनीं सौम्यां मेधामावाहयाम्यहम् ॥ मेधाम्मे वरुणो ददातु मेधामग्निः प्रजापतिर्मेधामिन्द्रश्च

वायुश्च मेधान्धाता ददातु मे स्वाहा ॥३२॥१६ मेधामावाहयामि स्थापयामि ॐ भूर्भुवः स्वर्मेधे इ ॥४७॥

हागच्छेहतिष्ठ ॥ ४॥ जगत्सृष्टांजगद्धात्रीं यक्षीरूपेणसंस्थिताम् ॥ ॐ काराक्षींभगवतींसावित्रीमावाहयाम्यहम् ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि धियोयोनःप्रचोदयात् ॥ सावित्रीमावाहयामिस्थापयामि ॥ ॐ भूर्भुवःस्वःसावित्रीहागच्छेहतिष्ठ ॥ ५॥ दैत्यपक्षक्षयकरीन्देवानांचाभयप्रदां ॥ गीर्वाणवन्दितांन्देवींविजयामावाहयाम्यहम् ॥ विज्यंधनुःकपर्दिनोविशल्योवाणवा २ उत ॥ अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः ॥ विजयामावाहयामिस्थापयामि ॥ ॐ भूर्भुवःस्वःविजयेइहागच्छेहतिष्ठ ॥ ६॥ विश्वभद्रांजयारिक्तांरक्तांबरधरांसदा ॥ त्रैलोक्यवंदितान्देवींजयामावाहयाम्यहम् ॥ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयोनस्त

तुवाशन्तमया गिरिशन्ताभिचाकशीहि॥१६।२॥ जयायै नमः जयामावाहयामि स्थापयामि॥
ॐ भूर्भुवः स्वः जये इहागच्छ इह तिष्ठ॥७॥ मयूरवाहनारूढां शक्तिखड्गधनुर्धरीम्॥ आवाहये दे-
वसेनां तारकासुरमर्दिनीम्॥ देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो निवर्त्तताम्।
देवानां सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे॥२५।१५॥ देवसेनायै नमः दे-
वसेनामावाहयामि स्थापयामि ॐ भूर्भुवः स्वः देवसेने इहागच्छ इह तिष्ठ॥८॥ कव्यमादाय सत-
तं पितृभ्यो यामगच्छति॥ पितृलोकार्चितां देवीं स्वधामावाहयाम्यहम्॥ पितृभ्यः स्वधायि-
भ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः

अक्षन्पितरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुंधध्वम् ११॥ ३६ स्वधायै नमः स्वधामा
वाहयामि स्थापयामि ॥ ॐ भूर्भुवः स्वः स्वधे इहागच्छेह तिष्ठ ॥ ९ ॥ हविर्गृहीत्वा सततं देवो माया
प्रयच्छति ॥ स्वर्गलोकार्चिता स्वाहा समागच्छ ममाध्वरे ॥ स्वाहा यज्ञं मनसः स्वाहोरोरन्तरिक्षा
त्स्वाहा द्यावापृथिवीभ्या॑ᳪ स्वाहा वातादारभे स्वाहा ॥ ४।६ स्वाहायै नमः स्वाहामावाहयामि
स्थापयामि ॥ ॐ भूर्भुवः स्वः स्वाहे इहागच्छेह तिष्ठ ॥ १ ॥ भूतग्राममिदं कृत्स्नं यया उत्पादितं
पुरा ॥ त्रैलोक्यपूजितां देवीं मातरीमावाहयाम्यहम् ॥ आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो
घृतप्वः पुनन्तु ॥ विश्वᳪ हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत एमि ॥ दीक्षातपसो

स्तन्नूरसितान्त्वा शिवा शं शगमाम्परिदध्मे भद्रंवर्णम्पुष्यन् ॥ ४।२॥ मात्रेनमः मातरमावाहयामिस्था
पयामि ॥ ॐ भूर्भुवः स्वर्मातरिहागच्छेह तिष्ठ ॥ ११॥ आवाहयेल्लोकमात्रीं जगत्पालनसंस्थितां
॥ शक्राद्यैर्वन्दितां देवीं तथान्यैश्चासुरैरपि ॥ भवतन्नः समनसौ सचेतसावरेपसौ ॥ मायज्ञ ठं हिं ठं॰
सिष्टम्मायज्ञपतिञ्जातवेदसौ शिवौ भवतमद्यनः ॥ ५।३॥ लोकमात्रेनमः लोकमातरमावाह्या
मिस्थापयामि ॥ ॐ भूर्भुवः स्वर्लोकमातरिहागच्छेह तिष्ठ ॥१२॥ नमस्तुष्टिंकारीं देवीं लोकानुग्र
हकारिणीं ॥ सर्वकामसमृद्ध्यर्थं धृतिमावाहयाम्यहम् ॥ यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिर
न्तरमृतम्प्रजासु ॥ यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३४।३

धृत्यैनमः धृतिमावाहयामिस्थापयामि ॥ ॐ भूर्भुवः स्वर्धृतयेइहागच्छेहतिष्ठ ॥ २३ ॥ प्रणताइ
मेलोकेस्मिन्पुत्रपुष्टिसुखप्रदा ॥ भक्तेभ्यश्चापिवरदाविद्युज्ज्वालार्ककुंडला ॥ तत्वायामिब्रह्मणा
वन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमान आयुः प्र
मोषीः ॥ २१ ॥ २ ॥ पुष्ट्यैनमः पुष्टिमावाहयामिस्थापयामि ॥ ॐ भूर्भुवः स्वः पुष्टेइहागच्छेहति
ष्ठ ॥ २४ ॥ आवाहयामितांतुष्टिंसर्वलोकेषुपूजितां ॥ संतोषभावनादींचरक्षणायाध्वरेमम ॥
बृहस्पतेपरिदीयारथेनरक्षोहामित्राँ२ ऽ अपबाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणोयुधाजय
न्नस्माकमेध्यविता रथानाम् ॥ तुष्ट्यैनमः तुष्टिमावाहयामिस्थापयामि ॥ ॐ भूर्भुवः स्वस्तुष्टे

प्रतिष्ठा इहागच्छेह तिष्ठ ॥ १५ ॥ तामात्मांदिहितांदेवींसर्वकामफलप्रदां ॥ वंशरक्षकरींगोत्रींदेवीमावा संग्रह.
५० ॥ हयाम्यहम् ॥ प्राणाय स्वाहा ऽपानाय स्वाहा व्यानाय स्वाहा अम्बे ऽअम्बिकेम्बालिके नमान
यति कश्चन ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ २२।१८ ॥ आत्मनः कुलदेव्यै नमः
आत्मनः कुलदेवीमावाहयामिस्थापयामि ॥ ॐ भूर्भुवः स्व आत्मकुलदेवी इहागच्छेह तिष्ठ ॥ १६
एवं प्रत्येकमावाहनंस्थापनं च कुर्यात् ॥ मनोजूतिरितिमंत्रेण प्रतिष्ठां कुर्यात् ॥ मनोजूतिर्जुषता
माज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳसमिमन्दधातु ॥ विश्वेदेवास ऽइह मादयन्ता ॥ ५० ॥
मोꣳ३ प्रतिष्ठ ॥ २।१३ ॥ गौर्यादिषोडशमातरः श्रीगणपतिसहिताः सुप्रतिष्ठिताः सत्यो वरदा भवन्तु

अथपूजा सुवर्णमणिभिर्दिव्यैः रचितेदेवनिर्मिते दिव्यसिंहासनेऽस्मिन्धेप्रविशंतुसुरालये
श्रीगणपतिसहितगौर्यादिषोडशमातृभ्योनमः आसनंसमर्पयामि पादोदकंतुभोदेव्यःसुव
र्णकलशेस्थितं गंधपुष्पादिभिर्युक्तंगृह्यतांचनिवेदितं श्रीगणपतिस० पाद्यंसमर्पयामि अ
ष्टद्रव्यसमायुक्तंस्वर्णपात्रस्थितंजलम् अर्घंभवंतोगृह्णंतुभक्त्यामयानिवेदितं श्रीगणप
तिस० अर्घंसमर्पयामि मयानिवेदितंदेव्यःकुरुताचमनंशुभं सुप्रसन्नाश्चवरदाभवंतु
ममसर्वदा श्रीगणपतिस० आचमनंसमर्पयामि पंचामृतैस्ततःस्नानंमंत्रैर्वेदोद्भवैरपि म
ध्येमध्येप्रपूजाचमधुपर्कपुरःसरं श्रीगणपतिसहित० पंचामृतस्नानंनिवेदयामि नदीनां

देवसरस्सांमयानीतंजलंशुभम् अनेनस्नानमंत्रेणमंत्रैर्वैरुणसंभवैः श्रीगणपतिसहित०शुद्धोदकस्नानंसमर्पयामि वस्त्रयुग्मसमानीतंपट्टसूत्रविनिर्मितं वस्त्रंकार्पासतंतूनांसुवर्णेनविराजितं श्रीगणपतिस० वस्त्रंसमर्पयामि गणपतिर्नमस्तुभ्यंत्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृह्णाणगणनायक इतिविनायकस्ययज्ञोपवीतं अन्यत्रयज्ञोपवीताभावाएवबोध्यः केयूरमुकुटश्चैवनूपुरैरंगुलीयकैः पूजिताःस्थप्रयत्नेनरत्नैराभरणैर्मया श्रीगणपति० आभरणानिसमर्पयामि चंदनंमलयोद्भूतंकस्तूर्यागरुसंयुतं कर्पूरेणसमायुक्तंगृह्यतांमातरःशुभम् कुंकुमंकामनादिव्यंकामनाकामसंभवं कुंकुमेनार्चितादेव्योभवंतुवरदाःसदा श्री

गणपतिस० गंधंसमर्पयामि अक्षताश्चमहादिव्यासुक्ताफलसमन्विताः गृह्यंताभोशुभादेव्यो
भक्त्यामयानिवेदिताः श्रीगणपतिस० अक्षतान्समर्पयामि शतपत्रैःकर्णिकारैःश्चंपकैर्मल्लि
कादिभिः पुष्पैर्नानाविधैश्चैवभवन्तुपूजिताःसदा श्रीगणपति० पुष्पाणिस० दशांगंगुग्गुलंधू
पंसुगंधंचमनोहरं मयानिवेदितंधूपंगृह्यतांमातरःसदा श्रीगणपतिस० धूपंसमर्पयामि सु
प्रकाशोमहान्दीपःसर्वत्रतिमिरापहः बाह्याभ्यंतरज्योतिश्चगृह्णंतुदीपकंसदा श्रीगणपति
स० दीपंसमर्पयामि अन्नंचपायसंभक्ष्यंसिताघृतसमन्वितं दधिक्षीरघृतैर्युक्तंगृह्यंतामा
तरःशुभम् श्रीगणपतिसहि० नैवेद्यंसमर्पयामि नागवल्लिदलैर्युक्तंपूगीफलसमन्वितं कर्पू

रस्वादिरैर्युक्तं गृह्यंतां सुतांबूलकं श्रीगणपतिसहित० तांबूलं समर्पयामि पूगीफलं महद्दिव्यं
देवानां तु प्रियंकरम् मया निवेदितं भक्त्या गृह्यंतां मातरः सदा श्रीगणपतिसहित० पूगीफलं
समर्पयामि नीराजनं गृह्यतां पंचवर्तिभिरावृतं तेजोराशिमयं दिव्यं लोकानंदकरं शुभम् श्रीग
णपतिस० नीराजनं समर्पयामि नंदनस्य प्रसूनैश्च तथा कल्पद्रुमस्य च सुरहस्तच्युतानि तु गृह्यं
तां कुसुमांजलिम् श्रीगणपतिस० कुसुमांजलिं स० मंत्रहीनं क्रियाहीनं भक्तिहीनं च यत्कृतम्
पूजनं प्रतिगृह्यंतां क्षम्यतां मातरः सदा इति प्रार्थयेत् इति षोडशमातृकापूजनम् अथ आज्यादि
सप्तघृतमातृकास्थापनपूजनप्रकारश्च प्रदर्श्यते गृहाद् निर्गमे वा प्रांगे वसोर्धारा चैवादिका कार्या

विवाहेविद्धिर्गृह्यनिर्गमदक्षिणे कुड्यलग्नांवसोर्धारांसप्तधाराघृतेनच कारयेत्पंचधारावाना
निर्नीचांनचोच्छ्रिताम् हस्तमात्रप्रमाणांचगृह्यनिर्गमदक्षिणे वसोर्धारातुकर्तव्यावसोर्मंत्रेण कार
येत् वसोःपवित्रमसिशतधारम्वसोःपवित्रमसिसहस्रधारम् देवस्त्वासवितापुनातुवसोःपवि
त्रेणशतधारेणसुप्वाकामधुक्षः १ ३ अनेनमंत्रेणाभित्तौडोरकोपरिसप्तघृतधारांदद्यात् उत्तरो
त्तरक्रमेण मनोजूतिरित्यादिमंत्रेणप्रतिष्ठांकुर्यात् ॐ भूर्भुवःस्वःब्राह्म्यादिसप्तघृतमातॄनावाह
यामि तासांनामानि ॐ ब्राह्म्यैनमः ॐ माहेश्वर्यैनमः ॐ कौमार्यैनमः ॐ वैष्णव्यैनमः ॐ वारा
ह्यैनमः ॐ इन्द्राण्यैनमः ॐ चामुंडायैनमः ब्राह्म्यादिसप्तघृतमातृभ्योनमः पाद्यादीनिसमर्पया

मि एवंपूजयित्वाततःसर्वमातृकापूजनंकुर्यात् ॐकीर्त्यैनमः ॐलक्ष्म्यैनमः ॐधृत्यैनमः ॐमेधा
यैनमः ॐसिद्ध्यैनमः ॐप्रज्ञायैनमः ॐसरस्वत्यैनमः अथमंडपमातृकापूजा ईशानतआरभ्यपूर्वा
दिक्रमेण ॐ नंदिन्यैनमः ॐनलिन्यैनमः ॐमैत्रायैनमः ॐउमायैनमः ॐ पशुवर्द्धिन्यैनमः अथ
द्वारमातृपूजा जयंत्यैनमः ॐविजयायैनमः ॐ शोभनायैनमः ॐपिंगलायैनमः ॐभद्रकाल्यै
नमः इतिनाममंत्रेणार्चयेत् ॥ ततआयुष्यंवर्चस्यꣳरायस्पोषमौद्भितम् इदꣳहिरण्यंवर्च
स्वज्जैत्रायाविशतादुमाम् ५० इतिमंत्रंपठेत् एषांसमनंतरोक्तमातृकाणांवक्ष्यमाणानांचस्थाप
नंचहस्तमात्रपरिमितायांहस्तमात्रोच्छ्रितायांवेद्यांकुंकुमकोष्ठानिकृत्वातत्रकर्तव्यम् जयाचवि

जयाचैवसीमंतेचसुखावहा प्राशनेचसमाशीर्णाचूडभद्रासुभद्रिका व्रतबंधेतुज्ञातव्याईश्वरीसु
वनेश्वरी विवाहेसुचकर्तव्यासुभद्रासर्वतोसुखी गृहकार्येप्रतिष्ठायांनागेंद्रीपद्मवासिनी जातिक
र्मणिशिष्टैश्चजयालीलाप्रकीर्तिता तदुपरिपंचसप्तवावसोर्धाराकर्तव्यानान्यत्रेत्यपिकेचिद्वदंति
इतिघृतमातृकादिसकलमातृकाणांस्थापनपूजनप्रकारः॥ ॥श्रीराम॥ ॥अथाभ्युदयिक
श्राद्धप्रयोगः तत्रदक्षिणोत्तरक्रमेणद्वादशस्थानेषुप्रत्येकप्रासादितद्रव्यंज्वलितप्रदीपंदेश
मागत्याय प्राङ्मुखउदङ्मुखोवोपविशेत् सव्येनसर्वकर्मकर्तव्यं
ऋजवएवकुशाः तिलकार्येयवाःकर्तव्य ततःॐ अप वित्रः पवित्रोवासर्वावस्थांगतो

प्रतिष्ठा· ॥५४॥ सं·श्राद्ध·

पिवा यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॐ पुंडरीकाक्षःपुनात्वितिश्राद्धीयद्रव्याणि
सिंचेत् कुशोदकेन ततःकुशयवजलान्यादाय ॐ अद्यामुकगोत्राणांमातृपितामहिप्रपिता
महीनाममुकामुकदेवीनांनांदीमुखीनां तथामुकगोत्राणांपितृपितामहप्रपितामहानाममु
कामुकशर्मणांनांदीमुखानांतथामुकगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानाम
मुकमुकशर्मणांनांदीमुखानांअमुकगोत्रस्यामुकस्यकर्तव्यामुककर्मनिमित्तकमाभ्युदयि
कश्राद्धमहंकरिष्ये इतिसंकल्पयेत् ततोगायत्रींत्रिर्जपित्वा ॐ देवताभ्यःपितृभ्यश्चमहायो
गिभ्यएवच नमःस्वाहायैस्वधायैनित्यमेवनमोनमः इतित्रिर्जपेत् ततःॐ अद्यामुकगोत्रा

॥५४॥

णांमातृपितामहीप्रपितामहीनाममुकामुकदेवीनांनांदीमुखीनामाभ्युदयिकश्राद्धसंबंधि
नोविश्वेदेवाइदमासनंवोनमः इतिकुशत्रयरूपंसयवमासनंदक्षिणतआरभ्योत्सृजेत् एवंय
थोत्तरं॥ॐअद्यामुकगोत्राणांपितृपितामहप्रपितामहानाममुकामुकशर्मणांनांदीमुखानां
आभ्युदयिकश्राद्धसंबंधिनोविश्वेदेवाइदमासनंवोनमः॥ॐअद्यामुकगोत्राणांमातामहप्र
मातामहवृद्धप्रमातामहानाममुकामुकशर्मणांनांदीमुखानामाभ्युदयिकश्राद्धसंबंधिनोविश्वे
देवाइदमासनंवोनमः॥ॐअद्यामुकगोत्रेमातरमुकदेविनांदीमुखिआभ्युदयिकश्राद्धइदमा
सनंतेनमः एवंपितामहीप्रपितामहीभ्यामासनंदद्यात् ॐअद्यामुकगोत्रपितरमुकशर्मन्नां

दीमुखाभ्युदयिकश्राद्धे इदमासनं तेनमः॥ एवं पितामहप्रपितामहयोरपि॥ ॐ अद्यामुकगोत्रमा
तामह्यमुकशर्मिन्नांदीमुखाभ्युदयिकश्राद्धे इदमासनं तेनमः॥ एवं प्रमातामहवृद्धप्रमातामह
योरपि॥ ततआवाहनम्॥ ॐ विश्वान्देवानहमावाहयिष्ये इत्युक्त्वा॥ विश्वेदेवासऽआगत
शृणुतामऽइमꣳहवम्॥ एदम्बर्हिर्निषीदत॥ उपयामगृहीतोसि विश्वेभ्यस्त्वा देवेभ्यऽएष
ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः॥७।३४॥ इत्यावाह्य॥ यवोसि यवयास्मद्द्वेषो यवयारातीर्दिवेत्वा
न्तरिक्षायत्वा पृथिव्यैत्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि॥५।२६॥ इति देवपात्रेय
वान्विकीर्य॥ विश्वेदेवासऽआगतशृणुतामऽइमꣳहवम्॥ एदम्बर्हिर्निषीदत॥ उपयाम

गृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य ऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ७॥३४॥ ये ऽअन्तरीक्षेय
ऽउपद्यावृषा॥ ये ऽअग्निजिह्वा ऽउत वा यजत्रा ऽआसद्यास्मिन्बर्हिषि मादयध्वम्॥३३॥५३॥ॐ
आगच्छंतु महाभागा विश्वेदेवा महाबलाः॥ ये यत्र योजिताः श्राद्धे सावधाना भवंतु ते इति पठेत्॥
ॐ नांदीमुखान्पितॄनहमावाहयिष्ये इत्युक्त्वा॥ ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि॥
उशन्नुशत ऽआवह पितॄन्हविषे ऽअत्तवे॥१९॥७०॥ इति पितॄनावाह्य॥ ॐ अपहता ऽअसुरा
रक्षा ४ सि वेदिषदः॥२॥२९॥ इति मात्रादिपात्रेयवान्विकीर्य॥ ॐ आयन्तु नः पितरः सोम्यासो
ऽग्निष्वात्ताः पथिभिर्देवयानैः॥ अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान्॥१९॥५८॥

इतिपठित्वा॥ ततोर्घ्यकरणं॥ तत्रदेवपूर्वकंसर्वेष्वर्घपात्रेषुपवित्राणिकृत्वा ॥ ॐ शन्नोदे
वीरभिष्टयऽआपोभवन्तुपीतये॥ शंयोरभिस्रवन्तुनः॥३६।१२॥ इतिदेवार्घपात्रेजलंक्षिपेत्॥
ततोदेवार्घपात्रेषु॥ ॐ यवोसियवयास्मद्द्वेषोयवयारातीर्दिवेत्वान्तरिक्षायत्वापृथिव्यैत्वाशु
न्धन्ताँल्लोकाःपितृषदनाःपितृषदनमसि॥५॥२६॥ मात्रादिपात्रेषु॥ ॐ यवोसिसोमदेवत्यो
गोसवोदेवनिर्मितः प्रत्नमद्भिःपृक्तःपुष्टयऽनान्दीमुखाँल्लोकान्प्रीणाहिनःस्वाहेतिमन्त्रेणयवा
न्क्षिपेत्॥ ततःप्रत्येकंगन्धपुष्पेतूष्णींक्षिपेत्॥ ततः प्रथमदेवपात्रंवामहस्तेकृत्वा॥ तत्रस्थंप
वित्रंभोजनपात्रेनिधायतदुपरिकिञ्चिदुदकान्तरंदत्वा॥ ॐ यादिव्याआपःपयसासम्बभूवुर्या

आंतरिक्षा। उतपार्थिवीर्या हिरण्यवर्णा यज्ञियास्तान आपः शिवाः सथंस्योनाः सुहवाभवंत्विति
पठित्वा॥ कुशान्यवजलान्यादाय॥ ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामु
कदेवीनां नांदीमुखीनां आभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा एष वो हस्तार्घो नमः॥ एवमेव पित्रादि
श्राद्धदेवेभ्यो मातामहादिदेवेभ्यश्च हस्तार्घं दद्यात्॥ ततो मातुरर्घमादाय॥ पूर्ववत्कृत्वा॥ ॐ यादि
व्याइत्यादि पठित्वा॥ कुशादीन्यादाय॥ ॐ अद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि आभ्युदयिकश्रा
द्ध एष ते हस्तार्घो नमः॥ एवं पितामहीप्रपितामह्योरपि दद्यात्॥ ततः पित्रार्घपात्रमादाय॥ सर्वं पूर्ववत्
कृत्वा॥ कुशादीन्यादाय॥ ॐ अद्यामुकगोत्र पितरमुकशर्मन् नांदीमुख आभ्युदयिकश्राद्ध एष ते हस्ता

धेभ्योनमः ॥ एवमेव पितामह्यादिपंचभ्योहस्ताऽर्घंदद्यात् ॥ ततोन्यपरिशिष्टजलपवित्रयुतंप्रथमंदेवार्घ
पात्रमादाय ॥ ॐ विश्वेभ्योदेवेभ्यः स्थानमसीतिदेवासनदक्षिणभागेउत्तानंस्थापयेत् ॥ एवमपरदे
वार्घपात्रद्वयंतत्तदासनदक्षिणभागेउत्तानंस्थापयेत् ॥ ततः पितामहीप्रपितामहीपात्रद्वयस्थितंपवि
त्रादिमात्रर्घपात्रेनिधाय ॥ मात्रर्घपात्रंपितामह्यर्घपात्रोपरिकृत्वातत्रप्रपितामह्यर्घपात्रोपरिधृत्वादक्षि
णकरेणादाय ॥ ॐ मातृभ्यः स्थानमसीतिमात्रासनवामभागेन्युब्जीकुर्यात् ॥ एवमेवपित्राद्यर्घपा
त्राणांमेलनंकृत्वापित्रासनवामभागे ॥ ॐ पितृभ्यः स्थानमसीतित्र्यर्घपात्राणिन्युब्जीकुर्यात् ॥ एवमे
वमातामहाद्यर्घपात्राणांमेलनंकृत्वा ॥ मातामहासनवामभागे ॥ ॐ मातामहप्रमातामहवृद्धप्रमा

तामहेभ्यः ॥ स्थानमसीति न्युब्जीकुर्यात् ॥ ततो गंधादिदानं तत्क्रमः ॥ ॐ अद्यामुकगोत्राणां मातृपि
तामही प्रपितामहीनाममुकामुकीदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा एतानि
गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि वो नमः एवं पित्रादिदेवेभ्यो मातामहादिदेवेभ्यश्च दद्या
त् ॥ ॐ अद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि आभ्युदयिकश्राद्धे एतानि गंधपुष्पधूपदीपतांबू
लसिंदूरवासांसि ते नमः ॥ एवं पितामहीप्रपितामहीभ्यामपि गंधादिदानम् ॥ ततः ॥ ॐ अद्यामुकगो
त्र पितरमुकशर्मन् नांदीमुख आभ्युदयिकश्राद्धे एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते
नमः ॥ एवं पितामहादिपंचभ्योपि गंधादिदानम् ॥ ततो जलेन सर्वासनानि भोजनपात्रसहितानि वृ

कृष्णहव्यमिदंरक्षस्वमदीयमितिपठित्वा॥ॐ इदमन्नमित्यन्ने॥ ॐ इमाआपइतिजले॥ॐ इद
माज्यमितिघृते॥ॐ इदंहविरितिपुनरन्ने॥इतिदक्षिणांगुष्ठमालोड्य॥ॐ यवोसियवयास्मद्द्वे
षोयवयारातीर्दिवेत्वान्तरिक्षायत्वापृथिव्यैत्वाशुन्धन्तांल्लोकाःपितृषदनाःपितृषदनमसि ५।
२६॥ इतियवान्विकीर्य्य कुशादीन्यादाय॥ॐ अद्यामुकगोत्राणांमातृपितामहीप्रपितामही
नामसुकासुकीदेवीनांनांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनोविश्वेदेवाइदमन्नंसोपकरणंवो
नमः॥ यदैकमेवपात्रंभवतितदावामेनपाणिनापात्रमस्यजन्नेचइदंविष्णुरित्यादिपठित्वा॥
यवप्रक्षेपपर्यंतंकृत्वा॥कुशादीन्यादाय॥पित्र्यादिकुल्लेखेनपित्रादिदैवेभ्योप्यन्नमुत्सृजेत्॥ए

प्रतिष्ठा ॥५१॥ वमेवमातामहादिदेवेभ्यः भिन्नाभिन्नपात्रपक्षे ॥ ॐ पृथिवीतेपात्रमित्यादीनांसर्वेषामावृत्तिः संग्रह. नांदीश्रा.
॥ ततोमातृपात्रमुत्तानाभ्यामेवकराभ्यांस्पृष्ट्वा ॥ ॐ पृथिवीतेपात्रमित्यादि ॥ इदंविष्णुरितिपठि
त्वा ॥ ॐ कृष्णकव्यमिदंरक्षमदीयं ॥ ॐ इदमन्नमित्यन्ने ॥ ॐ इमाआपइतिजले ॥ ॐ इदमा
ज्यमितिघृते ॥ ॐ इदंहविरितिपुनरन्नेदक्षिणकरांगुष्ठमारोप्य ॥ ॐ अपहतासुरारक्षांसि
सिवेदिषदइत्यन्नोपरियवान्विकीर्य ॥ ॐ अद्यामुकगोत्रमातरमुकीदेविनांदीमुख्यःश्राद्
धिकश्राद्धइदमन्नंसोपकरणंतेनमः ॥ एवंपात्रालंभनादिकंकृत्वा ॥ प्रत्येकंपितामहीप्रपिता ॥५१॥
महीभ्यामपिदद्यात् ॥ एवंपितृपात्रमालभ्य ॥ ॐ पृथिवीतेपात्रमित्यादिपठित्वा ॥ पूर्ववत्सर्वं

कृत्वा॥ ॐ अद्यामुकगोत्रपितरमुकशर्म्मन्नांदीमुखाभ्युदयिकश्राद्धइदमन्नंसोपकरणंतेन
मः॥ इतिपित्रेन्नमुत्सृजेत्॥ एवंपितामहादिभ्यः पंचभ्योपिप्रत्येकमन्नमुत्सृजेत्॥ ततःप्रांज
लिः ॐ अन्नहीनंक्रियाहीनंविधिहीनंचयद्भवेत्॥ तत्सर्वमच्छिद्रमस्त्वितिजपेत्॥ दर्भेषूपवि
श्य॥ गायत्रींत्रिर्जपित्वा॥ ॐ मधुमधुमध्वितिजपेत्॥ मधुवाता ऋतायतेमधुक्षरन्तिसिन्ध
वः॥ माध्वीर्न्नःसन्त्वोषधीः॥१३।२७॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः॥ मधुद्यौर
स्तुनःपिता॥१३।२८॥ मधुमान्नोवनस्पतिर्म्मधुमाꣳ॥ अस्तुसूर्य्यः॥ माध्वीर्गावोभवन्तुनः॥
१३।२९॥ इत्यादिऋचंपठित्वा॥ अन्यानपिपितृन्भावान्॥ उदीरतामवर इत्यादिंजपेत्॥ अन्या

ञ्चित्पुरुषसूक्तादीनि पवित्राणि जपेत् ॥ ततः प्रागग्रकुशत्रयं भूमावास्तीर्य ॥ जलेन प्रोक्ष्य ॥
जलप्रोक्षितसयवघृतमन्नं कुशादिना ॥ ॐ अनग्निदग्धाश्च ये जीवा ये प्रदग्धाः कुले मम ॥ भूमौ द
त्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् इति मंत्रेण कुशोपरि विकिरेत् ॥ ततश्चाचम्य हरिं स्मृत्वा गायत्रीं
त्रिर्जपेत् ॥ चतुरस्रां पिण्डयोग्यां भूमिं परिकृत्य ॥ उत्तरोत्तरक्रमेण स्थानत्रयं प्रादेशमात्रं परि
माय ॥ ततः प्रागग्रां रेखां दर्भपिंजुलीमूलेन ॥ ॐ अपहता ऽअसुरा रक्षांसि वेदिषदः ॥२९॥
इति कुर्यात् ॥ ततः प्रत्येकं रेखात्रयोपरि ॥ ये रूपाणि प्रतिमुञ्चमाना ऽअसुराः सन्तः स्वधया
चरन्ति ॥ परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥३०॥ इति मंत्रेणांगारान् भ्रा

मयेत्॥ तदुपरिप्रत्येकं कुशत्रयमास्तीर्य॥ ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च॥ नमः
स्वाहायै स्वधायै नित्यमेव नमो नमः॥ इति त्रिर्जपित्वा॥ प्रत्येकमवनेजनं दद्यात्॥ तत्र क्रमः॥ य
वजलगंधपुष्पैर्नव पात्राणि पूरयित्वा पात्रमेकं वामकरे कृत्वा॥ कुशादीन्यादाय॥ ॐ अद्यामु
कगोत्रे मातरमुकदेविनांदीमुखि आभ्युदयिकश्राद्धे पिंडस्थाने ऽवनेनिक्ष्व ते नमः॥ इति सर्व
दक्षिणकुशत्रयमूलमात्रे ऽवनेजनं दद्यात्॥ किञ्चिज्जलमवशेषयेत्॥ एवमेव पात्रांतरमादाय
॥ तत्कुशमध्ये पितामह्यै तत्कुशत्रयाग्रे प्रपितामह्यै अवनेजनं दद्यात्॥ ततश्चापरमात्रमादाय
॥ कुशादींश्चादाय॥ ॐ अद्यामुकगोत्र पितरमुकशर्मन्नांदीमुख आभ्युदयिकश्राद्धे पिंडस्थाने

वनेनिक्ष्वतेनमः॥ इतिमध्यस्थितकुशत्रयमूलेपित्रेऽवनेजनंदद्यात्॥ एवं तत्कुशत्रयमध्य
मयोःपितामहप्रपितामह्योरवनेजनंदद्यात्॥ ततः सप्तमपात्रमादायकुशादींश्चादाय॥ ॐ
अद्यामुकगोत्रमातामहामुकशर्मन्नांदीमुखाभ्युदयिकश्राद्धे पिण्डस्थानेऽत्रावनेनिक्ष्वतेनमः॥
इत्यपरकुशत्रयमूलेमातामहायावनेजनंदद्यात्॥ एवंप्रमातामहवृद्धप्रमातामहयोरपि॥ त
तोयवदधिबदरघृतमिश्रान्ननवपिण्डान्निर्माय॥ एकंपिण्डंकुशादींश्चादाय॥ ॐ अद्यामु
कगोत्रेमातरमुकदेविनांदीमुखिअभ्युदयिकश्राद्धे एषपिण्डस्तेनमः इतितदवनेजनस्थाने
पिण्डंदद्यात्॥ एवमेवपितामहीप्रपितामहीभ्यांस्वीयस्वीयावनेजनस्थानेपिण्डंदद्यात्॥

ततश्चतुर्थं पिण्डमादाय ॥ ॐ अद्यामुकगोत्र पितरमुकशर्मन् नान्दीमुखाभ्युदयिकश्राद्ध एष ते
पिण्डो नमः ॥ इत्यवनेजनस्थाने पित्रे पिण्डं दद्यात् ॥ एवमेव पितामहादिपञ्चभ्यस्तदवनेजन
स्थानेषु प्रत्येकं पञ्च पिण्डान्दद्यात् ॥ ततो दर्भमूले करं प्रोक्ष्याचम्य हरिं स्मृत्वा ॥ ॐ अत्र मातरो
मादयध्वं यथाभागमावृषायध्वम् १।३१ ॥ इति पठित्वा ॥ उदङ्मुखीभूय श्वासं नियम्य तेनैव
यथा परावर्तयन् ॥ ॐ अमीमदन्त मातरो यथाभागमावृषायिषत १।३१ ॥ इति जपेत् ॥ एवम
त्र पितरो मादयध्वं यथाभागमावृषायध्वम् १।३१ ॥ इति जप्त्वा ॥ उदङ्मुखीभूय श्वासं नियम्य
तेनैव यथासुखं परावर्त्तयन् ॥ ॐ अमीमदन्मातरो यथाभागमावृषायिषत १।३१ ॥ इति जपेत्

एवमेवमातामह्यादिपक्षेमंत्रजपः॥ततोऽवनेजनावशिष्टजलेनप्रत्यवनेजनंदद्यात्॥तत्रक्रमः
॥ॐ अद्यामुकगोत्रेमातरमुकदेविनांदीमुख्याभ्युदयिकश्राद्धपिण्डप्रत्यवनेनिक्ष्वतेनमः॥इति
तास्पिण्डोपरिदद्यात्॥एवंपितामहीप्रपितामहीभ्यांतथा॥ॐ अद्यामुकगोत्रपितरमुकशर्म
न्नांदीमुखाभ्युदयिकश्राद्धपिण्डेऽत्रप्रत्यवनेनिक्ष्वतेनमः॥इतिपिण्डोपरि प्रत्यवनेजनंदद्या
त्॥एवमेवतत्तत्पिंडोपरिपितामहादिपंचभ्योदद्यात्॥ततोनीवींविस्रंस्याचम्यहरिंस्मृत्वा
॥सूत्राण्यादाय॥ॐ नमोवोमातरोरसायनमोवोमातरःशोषायनमोवोमातरोजीवायनमो
वोमातरःस्वधायैनमोवोमातरोघोरायनमोवोमातरोमन्यवेनमोवोमातरोमातरोगृहान्नोमा

तरोदत्तसतोवोमातरोदेष्मएतद्वोमातरः २।३२ इतिमातृणांपिण्डत्रयोपरिसूत्रंदद्यात् ॥ ॐ नमोवःपि
तरोरसायनमोवःपितरःशोषायनमोवःपितरोजीवायनमोवःपितरःस्वधायैनमोवःपितरोघोरायन
मोवःपितरोमन्यवेनमोवःपितरःपितरोनमोवोगृहान्नःपितरोदत्तसतोवःपितरोदेष्मएतद्वःपितरोव
सः २।३२ ॥ इत्यनेनपित्रादिपिण्डषट्कोपरिप्रत्येकंसूत्रंदद्यात् ॥ ततःकुशत्रयपयःजलान्यादाय ॥ ॐ
अद्यामुकगोत्रेमातरमुकदेविनांदीमुखिअभ्युदयिकश्राद्धेपिण्डेएतत्तेवासोनमः ॥ इतिसूत्रमुत्सृ
जेत् ॥ एवमेवपितामहीप्रपितामहीभ्याम् ॥ ॐ अद्यामुकगोत्रपितरमुकशर्मन्नांदीमुखाभ्युदयिकश्रा
द्धेपिण्डेएतत्तेवासोनमः ॥ एवंपितामहादिपंचभ्यःसूत्रंदद्यात् ॥ ततोगंधपुष्पधूपदीपताम्बूलादिभिः

प्रत्येकं पिण्डमभ्यर्च्य ॥ ॐ शिवा आपः संत्विति जलं ॥ ॐ सौमनस्यमस्त्विति पुष्पं ॥ ॐ अक्षतं चारिष्टं चास्त्विति तंडुलान् प्रत्येकं पात्रेषु निक्षिप्य ॥ कुशादीन्यादाय ॥ ॐ अद्यामुकगोत्रा मातरः अमुकदेवी नांदीमुखी आभ्युदयिकश्राद्धे दत्तेनान्नपानादिभिः प्रीयतामित्यक्षय्योदकमुत्सृजेत् ॥ एवं पितामह्याः प्रपितामह्याश्चाक्षय्योदकं दद्यात् ॥ तथाद्यामुकगोत्रः पिता अमुकशर्मा नांदीमुखोऽभ्युदयिकश्राद्धे दत्तेनान्नपानादिभिः प्रीयतामिति पित्रे एवं पितामहादिपंचभ्योऽक्षय्योदकं दद्यात् ततः ॐ अघोराः मातरः संत्विति मातृपिण्डत्रयोपरि पूर्वाग्रां जलधारां दद्यात् ॥ ॐ अघोराः पितरः संत्विति पित्रादिपिण्डषट्कोपरि जलधारां दद्यात् ॥ ततः ॐ गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः संततिः

रेवच॥ श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्त्विति॥ अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः
सन्तु मा च याचिष्म कंचन॥ एताः सत्या आशिषः सन्त्वित्याशिषः प्रार्थयेत्॥ ततः सपवित्रकुशत्रयाणि॥ प्र
त्येकं मात्रादिपिण्डत्रये मातामहादिपिण्डत्रये च धृत्वा॥ ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रु
तम्॥ स्वधास्थ तर्पयत मे मातॄः २३४ इति मात्रादिपिण्डोपरि जलधारां दद्यात्॥ ततस्तथैव॥ ॐ ऊर्ज्जं
वहन्तीरित्यादि पठित्वा पित्रादिपिण्डषट्कोपरि जलधारां दद्यात्॥ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं
परिस्रुतम्॥ स्वधास्थ तर्पयत मे पितॄन् २३४॥ ततः पिण्डानाघ्राय उत्थाप्य पिण्डाधारकुशानुल्मुकं च
वह्नौ क्षिपेत्॥ अर्घपात्राण्युत्तानीकृत्य दक्षिणां दद्यात्॥ दक्षिणाद्रव्यं फलमूले फलं मूलं वा प्रत्येकं॥

तत्रक्रमः ॥ ॐ अद्यामुकगोत्राणांमातृपितामहीप्रपितामहीनाममुकामुकदेवीनांनांदीमुखीनामा
भ्युदयिकश्राद्धसंबंधिनांविश्वेषांदेवानांकृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिदंसुवर्णमग्निदैवतमि
मेफलमूलेचवनस्पतिदैवतंयथानामगोत्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजे ॥ एवंपित्रादिश्रा
द्धसंबंधिविश्वेदेवश्राद्धदक्षिणांमातामहादिश्राद्धसंबन्धिविश्वेदेवश्राद्धदक्षिणांचदद्यात् ॥ ॐ अ
द्यामुकगोत्रायामातुरमुकदेव्यानांदीमुख्याः कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिदंसुवर्णमग्नि
दैवतमिमेफलमूलेचवनस्पतिदैवतंइत्यादि ॥ एवंपितामहीप्रपितामह्योरपि ॥ ॐ अद्यामुकगोत्र
स्यपितुरमुकशर्मणोनांदीमुखस्यकृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमेफलमूलेवनस्पतिदैवतंइ

त्यादि ॥ एवंपितामहादिभ्योऽपिदक्षिणांदद्यात् ॥ वाजेवाजेवतवाजिनोनोधनेषुविप्राऽअमृताऽ
ऋतज्ञाः ॥ अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥९।१८॥ वाजेवाजइत्यादि-
नामात्रादिविसर्जनम् ॥ ॐविश्वेदेवाःप्रीयंतामितिदेवविसर्ज्जनम् ॥ ततोदेवताभ्यइतित्रिर्जपः
॥दीपनिर्वापणं॥ आचमनं॥प्रमादात्पाठः॥श्राद्धीयवस्त्रब्राह्मणायदद्यात् ॥इत्याभ्युदयिक
श्राद्धपद्धतिसमाप्ता ॥ ॥अथसंक्षिप्तनांदीश्राद्धप्रारंभः॥ आचम्यप्राणानायम्य॥ कर्त्त
व्येऽस्मिन्पूर्वसंकल्पितेकर्म्मणिसांकल्पिकनांदीश्राद्धमहंकरिष्ये ॥ एतच्छ्राद्धीयान्नभागफ
लपुष्पाययज्ञेश्वरायविष्णवेनमः ॥ यज्ञेश्वरोहव्यसमस्तकव्यभुक्ताव्ययोस्माद्धरिरीश्वरो

त्र॥ तत्सन्निधानादपयांतिसद्यः॥ रक्षांस्यशेषाण्यसुराश्चसर्वे॥ सत्यवसुसंज्ञका विश्वेदेवाः नां-
दीमुखाः॥ ॐ भूर्भुवःस्वः इदं वः पाद्यं पादावनेजनं॥ पादप्रक्षालनं वृद्धिः॥ अमुकगोत्राः मातृपि
तामहीप्रपितामह्यः नांदीमुख्यः ॐ भूर्भुवःस्वः इदं वः पाद्यं पादावनेजनं॥ पादप्रक्षालनं वृद्धिः॥
अमुकगोत्राः पितृपितामहप्रपितामहाः नांदीमुखाः ॐ भूर्भुवःस्वः इदं वः पादावनेजनं पादप्रक्षाल
नं वृद्धिः॥ द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नांदीमुखाः ॐ भू
र्भुवःस्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः॥ सत्यवसुसंज्ञकानां विश्वेषां देवानां नां
दीमुखानां ॐ भूर्भुवःस्वः इदमासनं सुखासनं स्वाहा॥ नांदीश्राद्धे क्षणौ क्रियेतां॥ तथाप्राप्नु

तांभवंतौप्राप्नुवाव॥ अमुकगोत्रामातृपितामहीप्रपितामह्यःनांदीमुख्यः ॐ भूर्भुवः स्वः इदमा
सनंस्वाहा नांदीश्राद्धे क्षणौक्रियेतां तथाप्राप्नुतांभवंतौ प्राप्नुवा॥ नांदीश्राद्धे अमुकगोत्राःपितृ
पितामहप्रपितामहानांदीमुखाः भूर्भुवःस्वः इदमा० क्षणौक्रियेतां॥ॐ तथाप्राप्नुतांभवंतौ
प्राप्नुवाव॥ द्वितीय गोत्रामातामहप्रमातामहवृद्धप्रमातामहाःसपत्नीकानांदीमुखाःॐ
भूर्भुवः स्वः इदमा० क्षणौक्रियेतां॥ॐ तथाप्राप्नुतांभवंतौप्राप्नुवाव॥सत्यवसुसंज्ञकेभ्योवि
श्वेभ्योदेवेभ्योॐ भूर्भुवःस्वः ॥इदंगंधाद्यर्चनंस्वाहा॥संपद्यतांवृद्धिः॥ अमुकगोत्राभ्यो
मातृपितामहीप्रपितामहीभ्योनांदीमुखीभ्यः ॐ भूर्भुवःस्वः इदंगंधाद्यर्चनंस्वाहासंपद्यतां

वृद्धिः॥अमुकगोत्रेभ्योपितृपितामहप्रपितामहेभ्योनांदीमुखेभ्यःॐभूर्भुवःस्वःइदंगंधाद्यर्च-
नंस्वाहासंपद्यतांवृद्धिः॥द्वितीयगोत्रेभ्यःमातामहप्रमातामहवृद्धप्रमातामहेभ्यःसपत्नीकेभ्यः
नांदीमुखेभ्यःॐभूर्भुवःस्वःइदंगंधाद्यर्चनंस्वाहासंपद्यतांवृद्धिः॥सत्यवसुसंज्ञिकाविश्वेदेवा
नांदीमुखाःॐभूर्भुवःस्वःइदंवोयुग्मब्राह्मणभोजनपर्याप्तंदास्यमानमन्नममृतरूपेणस्वाहा
संपद्यतांवृद्धिः॥अमुकगोत्रामातृपितामहीप्रपितामह्यःनांदीमुख्यः॥ॐभूर्भुवःस्वःइदंवोयु-
ग्मब्राह्मणभोजनपर्याप्तंदास्यमानमन्नममृतरूपेणस्वाहासंपद्यतांवृद्धिः॥अमुकगोत्रापितृ-
पितामहप्रपितामहानांदीमुखाःॐभूर्भुवःस्वाहाइदंवोयुग्मब्राह्मणभोजनपर्याप्तंदास्यमानमन्न

ममृतरूपेणस्वाहासंपद्यतां वृद्धिः ॥ द्वितीयगोत्रामातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः
नांदीमुखाः ॥ ॐ भूर्भुवःस्वः इदंवोयुग्मब्राह्मणभोजनपर्याप्तं दास्यमानमन्नममृतरूपेणस्वाहासं
पद्यतांवृद्धिः ॥ स्वस्तिनइन्द्रोइतिमंत्रंपठेत् ॥ अस्यनांदीश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थेसत्यवसु
संज्ञिकेभ्योविश्वेभ्योदेवेभ्योनांदीमुखेभ्यः अमुकगोत्राभ्यः मातृपितामहीप्रपितामहीभ्यः नां-
दीमुखीभ्यः ॥ अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः नांदीमुखेभ्यः ॥ द्वितीयगोत्रेभ्यः
मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः ॥ द्राक्षामलकयवमूलनिष्क्रयणींदक्षिणांदातुमह-
मुत्सृजे ॥ मातापितामहीचैवतथैवप्रपितामही ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ माता

महस्तत्पिता च प्रमाता महकादयः ॥ एते भवंतु मे प्रीताः प्रयच्छंतु च मंगलम् ॥ इडामग्नेपुरुदंशसं सनिं गोः शश्वत्तमं हवमानाय साध ॥ स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे तिवाचं इडामग्ने ३ अधिधारया ३ यिन्मारथान्निक्रन्मूर्वाचिनो निकारिणः छत्रमयमसयममस्तु तुभ्यमस्तु प्रस्तुतावह्नितांत अनिष्टतः नांदीश्राद्धं संपन्नं सुसंपन्नम् ॥ अस्य नांदीश्राद्धस्य कर्मांगदेवताः प्रीयंताम् ॥ ॥ इति नांदीश्राद्धकर्म समाप्तम् ॥ इति श्रीराज्ञीय रायपुरनिवासिनानकचंदात्मज रामलाल पंडित विरचिते प्रतिष्ठासंग्रह ग्रंथे प्रथमः किरणः समाप्तः ॥ श्रीशिवार्पणमस्तु ॥ शुभं भवतु ॥ ॥ ॥ ॥

## अथ मंडपमध्यवर्तिवेदीपूजनप्रारंभः

श्रीगणेशायनमः॥ ॥अथमंडपमध्यवर्तिवेदीनांपूजनं॥ तत्रप्रथमंसर्वतोभद्रमंडलदेवता
नांपूजनंतदनंतरमग्निस्थापनं तदनंतरंवास्तुमंडलदेवतानांपूजनं तदनंतरंअधिदेवताप्रत्य-
धिदेवतासहितग्रहादिपूजनं तदनंतरंयोगिनीक्षेत्रपालादिपूजनमितिक्रमंकेचिद्वर्णयंति
वयंतुअग्निस्थापनानंतरंवास्तुमंडलस्थापितदेवतानांपूजनंतदनंतरंसूर्यादिग्रहपूजनं तदनं
तरंयोगिन्यादिपूजनंकृत्वा पश्चात्सर्वतोभद्रमंडलस्थापितदेवतानांपूजनंकृत्वा तस्यामेवम
ध्यवेद्यांप्रधानदेवतापूजनमितिक्रमंब्रूमः अंगदेवतापूजनानंतरमेवसर्वत्रप्रधानदेवतायाःपू
जनस्यप्रसिद्धत्वादितिसुधीभिर्विभावनीयं अथाचार्यस्वकुंडमागत्यतत्राग्निमप्राङ्मुखउप

विश्य प्राणानायम्य देशकालौ संकीर्त्य शिवादिप्रतिष्ठाकर्माङ्गत्वेन परिसमूहनादि अग्निप्रतिष्ठां
करिष्ये इति संकल्प्य ततो यथाधारि मितेतुषकेशशर्करादिरहितस्थण्डिले कुण्डे वा चतुरस्रां भूमिं कु
शैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्फ्येन स्रुवमूलेन वा प्रागग्रप्रा
देशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणैवानामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्यु
क्ष्य ततः कांस्यपात्रस्थं वह्निं द्वितीयकांस्यपात्रेणापिहितं प्रत्यङ्मुखस्थुपसमाधायाग्निर्मूर्द्धेति
मंत्रेणस्थापयेत् ॥ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् ॥ अपाᳬरेताᳬसि जिन्वति
इन्द्रस्य त्वौजसा सादयामि १३।१४ अथ प्रसंगात्कुशकण्डिकापि कथ्यते ॐ मघकर्त्तव्य

शिवादिप्रतिष्ठांगभूतास्मिन्होमकर्म्मणिकृताकृतावेक्षणरूपब्रह्मकर्म्मकर्त्तुममुकगोत्रोत्प-
न्नममुकशर्माणंब्राह्मणमेभिश्चन्दनपुष्पाक्षतफलद्रव्यवासोभिर्ब्रह्मत्वेनत्वामहंवृणे व्रतो
स्मीतिप्रतिवचनं व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् दक्षिणाश्रद्धामाप्नोतिश्रद्ध
यासत्यमाप्यते ॐयथाविहितंकर्म्मकुरु यथाज्ञानंकरवाणि ततोऽग्नेर्दक्षिणतःपरिस्तर
णभूमिंपरित्यज्य ब्रह्मणेआसनंदत्वा तदुपरिप्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षि
णक्रमेणानीय अत्रत्वंमेब्रह्माभवेत्यभिधायकल्पितासनेउपवेशयेत् ततःप्रणीतापात्रंपु
रतः कृत्वाजलेनापूर्यकुशैराच्छाद्यब्रह्मणोमुखमवलोक्याग्नेरुत्तरतःकुशोपरिनिदध्यात् ॥

ततः परिस्तरणम् बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानांतं ब्रह्मणोऽग्निपर्यंतं नैऋत्याद्वायव्यां
तं अग्नितः प्रणीतापर्यंतं ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रछेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्र
मनन्तर्गर्भं कुशपत्रद्वयम् प्रोक्षणीपात्रम् आज्यस्थाली चरुस्थाली संमार्जनकुशात्रयम् उपयमनार्थं
वेणीरूपकुशत्रयम् प्रादेशमितसमिधस्तिस्रः स्रुवः आज्यं षट्पंचाशदुत्तरमुष्टिशतद्वयावच्छिन्न
तंडुलपूर्णपात्रं पवित्रछेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयम् तस्यामेव दिशि असाधारणव
स्तून्युपकल्प्य नि याति अथ कृत्य पवित्रच्छेदनकुशैः पवित्रे छित्वा प्रादेशमितपवित्रकरणं स
वित्रहस्तेन प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अनामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरु

त्पवनं ततः प्रणीतोदकेन प्रोक्षणीप्रोक्षणं प्रोक्षणीजलेन यथासादितवस्तुसेचनं अग्निप्रणीतयोर्म
ध्ये प्रोक्षणीपात्रं निधाय आज्यस्थाल्यामाज्यं निरूप्य ततोऽधिश्रयणं ततस्तृणं प्रज्वाल्याग्निप्रदक्षि
णं भ्रामयित्वा वन्हौ तत्प्रक्षिप्य स्रुवः प्रतपनं कृत्वा संमार्जनकुशानामग्रैरग्रं मध्यैर्मध्यं मूलैर्मूलं स्रुवसं
मार्जनं कृत्वा प्रणीतोदकेनाभ्युक्ष्य पुनः प्रताप्य स्रुवं दक्षिणतो निदध्यात् ततआज्यस्याग्नेरवतारणं
ततआज्ये प्रोक्षणीवदुत्पवनं आज्यमवेक्ष्य सत्यपद्रव्ये तन्निरसनं पुनः प्रोक्षण्युत्पवनं तत उपयम
नकुशान्वामहस्ते कृत्वा उत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः प्रक्षि
पेत् तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निपर्युक्षणं कृत्वा प्रणीतापात्रे पवित्रं नि

धाय पातितदक्षिणजानुः कुशाग्रेण ब्रह्मणान्वारब्धः समिद्धतमे ऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् तत्राघा
रादारभ्य द्वादशाहुतिषु तत्तदाहुत्यनन्तरं स्रुवावस्थितहुतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः अथ होमः प्र
थममाज्याहुतीर्दद्यात् ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम इति मनसा ॐ इन्द्राय स्वाहा इदमि
न्द्राय इत्याघारौ ॐ अग्नये स्वाहा इदमग्नये ॐ सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ ॐ भूः स्वा
हा इदं भूः ॐ भुवः स्वाहा इदं भुवः ॐ स्वः स्वाहा इदं स्वः एता महाव्याहृतयः ॐ त्वन्नो ऽग्ने वरुण
स्य विद्वान्देवस्य हेडो ऽवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्
ध्यस्मत्स्वाहा २।१।३ इदमग्नीवरुणाभ्यां न मम ॐ स त्वन्नो ऽग्ने ऽवमो भवोती नेदिष्ठो ऽस्याः

उषसोव्युष्टौ१ अवयक्ष्वनोवरुणꣳ रराणोवीहिमृडीकꣳसुहवोनएधिस्वाहा २१४ इदमग्नीवरु०
अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाअसि अयानोयज्ञंवहास्ययानोधेहिभेषजꣳस्वा
हा इदमग्नये३ ॐयेतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितता महान्तः तेभिर्नो१ अद्यसवितोत
विष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काःस्वाहा इदंसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यः
४ ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय॥ अथावयमादित्यव्रतेतवानागसो१
अदितयेस्यामस्वाहा२१ इदंवरुणाय५ इतिद्वादशाहुतयः॥ अथाग्निप्रोक्षणमंत्रः॥ ॐआ
पःशिवाःशिवतमाःशान्ताःशान्ततमास्तास्तेकृण्वन्तुभेषजम् इत्यनेनाग्निप्रोक्षणम्॥ ततोगोसी

रेण नीवारश्चरुःस्थाप्यदेवताकं श्रपयित्वा ततस्तमेवाचार्य्यकुण्डस्थमग्निं अग्निस्थापनानंतरमेव
अग्निप्रोक्षणपर्य्यंतं कर्म्म कृत्वा वा कुंडसंख्यया विभज्य प्रागादिकुण्डेषु ऋत्विग्भिः स्वस्वकुण्डे
स्वगृह्योक्तविधिना संस्कृतेषु यथाविभागं संस्थाप्य चतुर्थिकाकर्म्मसमाप्तिं यावद्रक्षणं तस्यय
त्नतः कर्त्तव्यमिति बोध्यम्॥ ॥अथवास्तुरचनापूजाचोच्यते॥ ॥एकाशीतिपदं वास्तुगृ
हकर्म्मणि सस्यते चतुषष्टिपदो वास्तुः प्रसादे देवपूजामिति वचनाच्चतुषष्टीपदवास्तुरचनापूजा
प्रकारएवात्र निरूप्यते तद्यथा प्रासादे मंडपे वा मध्यवेद्या ईशानभागे निर्ऋत्ये वा द्विहस्तमेकहस्तं
वा चतुरस्त्रमष्टाष्टकपदं वास्तुमण्डलं सद्धान्येनाक्षतैः शालिपिष्टेन वा प्रदक्षिणक्रमेणोल्लिख्य

प्र० था बहिःपंक्तौ कोणेषु षडर्धपदाः चतुर्विंशतिरेकपदाः मध्ये चतुष्पदो ब्रह्मा दिक्षु चत्वारश्चतुष्पदाः संग्रहः वास्तुरचना
॥५॥ शेषाश्चाष्टौ द्विपदाः एवं पंचचत्वारिंशत् देवतापदानि तद्बहिरष्टौ चरक्यादीनामिति तत्र ब्रह्मा
णं शिखिनं चादिं कृत्वा क्रमेण नाममंत्रैरावाहनादिभिः षोडशोपचारैः प्रपूजयेत् तत्र ब्रह्मादिप
क्षो नृसिंहपरिचर्यायामुक्तः शिख्यादिपक्षस्तु शिवादिपरिचर्यायामिति विवेकः ॥ अथ पूजा
॥ तत्पश्चिमत उपविश्याचम्याद्येत्यादि देशकालौ स्मृत्वा शिवादिप्रतिष्ठाकर्मांगत्वेन वास्तुदेवता
स्थापनं पूजनं च करिष्ये इति संकल्प्य ततो वास्तुवेदिचतुष्कोणेषु आग्नेयादीशानादि वा प्रदक्षि ॥५॥
णक्रमेण शंकुचतुष्टयं रोपयेत् ॥ तत्र मंत्रः ॥ विशंतु भूतले नागा लोकपालाश्च सर्वतः ॥ स्थीयतां

मंडपेऽस्मिन्मे सर्वकार्यार्थसिद्धये ॥१॥ अनेनैव मंत्रेण चतुर्षु कोणेषु शंकुरोपणं प्रासादोपवनतडा
गकूपवापिवास्तुकर्म्मणि तत्तन्नामानिर्दिशेत् ततः शंकूनां पार्श्वे रोपणक्रमेण माषभक्तबलिं दद्या
त्॥ तत्र मंत्रः॥ अग्निभ्यश्चाप्यसर्वेभ्यो ये चान्ये तत्समाश्रिताः॥ तेभ्यो बलिं प्रयच्छामि पुण्यमो
दनमुत्तमम् ॥१॥ नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः॥ तेभ्यो बलिं प्रयच्छामि सर्वे गृह्णं
तु मंत्रितम् ॥२॥ ॐ नमो वायुरक्षेभ्यो ये चान्ये तत्समाश्रिताः॥ तेभ्यो बलिं प्रयच्छामि गृह्णंतु पुण्य
मोदनम् ॥३॥ ॐ रुद्रेभ्यश्चैव सर्पेभ्यो ये चान्ये तत्समाश्रिताः॥ तेभ्यो बलिं प्रयच्छामि गृह्णंतु सततो
त्सुकाः॥४॥ ततो वेद्युपरि कुंकुमादिना सुवर्णरजतादिशलाकया रत्नेन वा फलपुष्पान्यतमेन वा नव

रेखाः पश्चिमादारभ्य प्रागायताः उदक्संस्थाः समाः अंगुलद्वयांतराः कुर्यात् ॥ ॐ लक्ष्म्यैनमः ॥ १ ॥ ॐ यशोमत्यैनमः ॥ २ ॥ ॐ कांतायैनमः ॥ ३ ॥ ॐ सुप्रियायैनमः ॥ ४ ॥ ॐ विमलायैनमः ॥ ५ ॥ ॐ शिवायैनमः ॥ ६ ॥ ॐ सुभगायैनमः ॥ ७ ॥ ॐ सुमत्यैनमः ॥ ८ ॥ ॐ इडायैनमः ॥ ९ ॥ ततोदक्षिणादारभ्य उदगायताः प्राक्संस्थानवरेखाः कुर्यात् ॥ ॐ धन्यायैनमः ॥ १ ॥ ॐ प्राणायैनमः ॥ २ ॥ ॐ विशालायैनमः ॥ ३ ॥ ॐ स्थिरायैनमः ॥ ४ ॥ ॐ भद्रायैनमः ॥ ५ ॥ ॐ जयायैनमः ॥ ६ ॥ ॐ निशायैनमः ॥ ७ ॥ ॐ विरजायैनमः ॥ ८ ॥ ॐ विभवायैनमः ॥ ९ ॥ एवंकृते चतुःषष्टिकोष्ठकं मंडलं भवति ॥ तासां रेखानां गंधादिना पूजनम् ॥ अथ शिख्यादिक्रमेण वास्तुमंडलस्थदेवतानां पूजनमिदानीं प्रदर्श्यते ॥

ईशानकोणपदोन्तरार्द्धेर्वास्तुशिरसि आवाहयामित्वांदेवशंकरंशिखिरूपिणं स्त्रुक्स्त्रुवौडमरुं

शूलंचतुर्हस्तेषुविभ्रतं मेषमयसमारूढंस्वाहासाहितंविभुम् आगच्छत्वंशिखिन्देवक्षेत्रे

स्मिन्सान्निधोभव ॐ नमःशिवायेति ॐ नमःशम्भवायेतिवाआवाहनम् ॥ नमःशम्भवायचम

योभवायचनमःशंकरायचमयस्करायचनमःशिवायचशिवतरायच ॥१६॥४१॥ ॐ भूर्भुवःस्वः

शिखिनमावाहयामि० शिखिन्निहागच्छेहतिष्ठ ॐ शिखिनेनमः ॥१॥ तद्दक्षिणे ऽर्द्धपदेवास्तोर्द्दक्षि

णनेत्रे आवाहयामिपर्जन्यंयादसांसुरव्यनायकं कुंभीरस्थसमारूढंपाशहस्तंवरप्रदम् ॥ ॐ शन्नो

वातःपवताᳫं शन्नस्तपतुसूर्य्यः ॥ शन्नःकनिक्रदद्देवःपर्जन्योअभिवर्षतु ॥३६।१०॥ ॐ भूर्भुवःस्वः

पर्जन्यमावाहयामि॰ पर्जन्येहागच्छेहतिष्ठ पर्जन्यायनमः ॥२॥ तद्दक्षिणैकपदेवास्तोर्वामनेत्रे ॥ स्थाऽऽवा
हयामितन्देवंमहेन्द्रंतनयंप्रभुम् मुद्रिकाकंकणैर्युक्तंसर्वाभरणभूषितं वरदाभयहस्तंचजयंतंपूजया
म्यहं ॥ ॐ मर्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्वरीयोवरुणस्तेकृणोतु
जयन्तन्त्वानुदेवामदन्तु १६।४९ ॥ ॐ भूर्भुवःस्वः जयतमावाहयामि॰ जयन्तइहागच्छेहतिष्ठ जयंताय
नमः ॥३॥ तद्दक्षिणैकपदेवास्तोर्दक्षिणांसेकुलिशायुधमावाहयेत् ॥ एहिदेवसहस्राक्षदेवारिबलसूद
न ॥ ऐरावतेचसर्वज्ञ शचीहृदयनंदन ॥ वज्रहस्तसुराध्यक्षत्वामिन्द्रावाहयाम्यहम् ॥ ॐ आयुस्त्विन्द्रो
वसुः उपनः इहस्तुतःसधुमादस्तुशूरः ॥ वावृधानस्तवीयोयस्यपूर्व्वीर्द्यौर्न्नक्षत्रमभिभूतिपुष्यात् २०

४७॥ ॐभूर्भुवःस्वः इन्द्रमावाहयामि० इन्द्रइहागच्छेहतिष्ठ इन्द्रायनमः ॥ ४॥ तद्दक्षिणेकपदेवास्तोर्दक्षि
णवाहौसूर्यमावाहयेत् ॥ आवाहयामिदेवेशंभास्करंतिग्मतेजसं ॥ कालिंगंकाश्यपंरक्तंसप्ताश्वंसप्तर
ज्जुकं ॥ द्विभुजंपद्महस्तंच त्रैलोक्यतिमिरापहं ॥ सर्वसौख्यस्यदातारंकर्म्मसाक्षिणमीश्वरम् ॥ आग
च्छ भगवन्सूर्यक्षेत्रेस्मिन्सान्निधोभव ॥ ॐ बण्महाँ२ ॥ १ असिसूर्य्यबडादित्यमुँ ॥ १ असि मुह्नस्तेसु
तोमेहिमापनस्यत्तेद्धादेवमुह्ना२ ॥ १ असि ३३। २८ ॐभूर्भुवःस्वःसूर्य्यमावाहयामि० सूर्य्यइहागच्छेह
तिष्ठ सूर्य्यायनमः ॥ ५॥ तद्दक्षिणैकपदेवास्तोर्दक्षिणवाहौसत्यमावाहयेत् ॥ आवाहयामितंसत्यं
पुण्ययुक्तमकल्मषं पद्महस्तंमहाबाहुंवरदंनिर्मलंशुभम् ज्ञानमुद्राधरंदेवंचिंतितंब्रह्मकेवलं आग

च्छदेवसत्यस्त्वंक्षेत्रेऽस्मिन्सान्निध्योभव॥ॐ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम्॥ दक्षि
णाश्रद्धयासत्यमाप्यते॥२९॥३० ॐ भूर्भुवःस्वः सत्यमावाहयामि॰ सत्यइहागच्छेहतिष्ठ सत्यायन
मः॥६॥ तद्दक्षिणैकपदेवास्तोर्दक्षिणवाहौभूशमावाहयेत् आवाहयेयंभूशमादिदेवंसंचारशीलंभु
वनत्रयेपि एकेनहस्तेनवरप्रदानंगदांदधानंचपरेणतेन ॐ आत्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः
विशस्त्वासर्वावाञ्छन्तुमात्वद्राष्ट्रमधिभ्रशत्॥१२॥११ ॐ भूर्भुवःस्वः भूशमावाहयामि॰ भूशइहागच्छे
हतिष्ठ भूशायनमः॥७॥ तद्दक्षिणैकपदेवास्तोर्दक्षिणप्रवाहौ आकाशमावाहयेत् आवाहयेत्तमाका
शंविष्णोःपदमनंतकं यत्रदेवास्तथायज्ञाःयज्ञाःसर्वेप्रतिष्ठिताः आगच्छत्वंमहाकाशक्षेत्रेस्मिन्स-

न्निधोभव॥ॐयावाङ्कशामधुमत्यश्विनासूनृतावती तयायज्ञंमिमिक्षितम् ॥ उपयामगृहीतोस्याश्वि
भ्यांत्वैषते योनिर्माध्वीभ्यांत्वा॥७।११॥ ॐ भूर्भुवःस्वः आकाशमावाहयामि॰ आकाशइहागच्छेहति
ष्ठ आकाशायनमः॥८॥ नद्दक्षिणपदार्द्धेवास्तोर्द्दक्षिणप्रवाहोवायुमावाहयेत् आवाहयामिदेवेशंभू
तानांदेहधारिणं आगच्छभगवन्वायोक्षेत्रेऽस्मिन्सान्निधोभव॥ॐ वायोयेतेसहस्रिणोरथासस्ते
भिरागहि नियुत्वान्सोमपीतये॥२७।३२ ॐ भूर्भुवःस्वःवायुमावाहयामि॰ वायोइहागच्छेहतिष्ठ वा
यवेनमः॥९॥ नद्दक्षिणपदार्द्धेवास्तोर्द्दक्षिणमाणिबंधेपूषाणमावाहयेत् आवाहयामिदेवेशंपद्म
हस्तंवरप्रदं रक्तवस्त्रपरीधानंविद्युद्वर्णमहाबलं आगच्छभगवन्पूषन्क्षेत्रेऽस्मिन्सान्निधोभव ॐ

पूषन्तवव्रतेवयन्नरिष्येमकदाचन स्तोतारस्तऽइहस्मसि ३४।४१ ॐ भूर्भुवः स्वः पूषाणमावाहया
मि॰ पूषन्निहागच्छेहतिष्ठ पूष्णेनमः ॥१०॥ तत्पश्चिमैकपदेवास्तोर्दक्षिणपार्श्वे वितथमावाहयेत् ॥ आ
वाहयेत्त्वां वितथंसुराणां द्यावापृथिव्यंतरचारिणंच गृहाणपूजांचणकोदनाख्यांबलिंचगृह्णन्भग
वन्नमस्ते ॐ तत्सूर्य्यस्यदेवत्वन्तन्महित्वंमध्याकर्त्तोर्विततं सञ्जभार ॥ यदेदयुक्तहरितः स
धस्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥ ३३।३७॥ ॐ भूर्भुवः स्वर्वितथमावाहयामि॰ वितथइहागच्छे
हतिष्ठवितथायनमः ११॥ तत्पश्चिमैकपदेवास्तोर्दक्षिणपार्श्वे गृहक्षतमावाहयेत् आवाहयामि
त्वांदेवगृहक्षतसमाख्यक पूजांगृहाणदेवेशममस्वास्तिकरोभव ॐ अक्षन्नमीमदन्तह्यवप्रियाऽ

अंधूषत॥ अस्तौष्वतुस्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्रते हरी ३।५२॥ ॐ भूर्भुवःस्वः गृहक्षत
मावाहयामि॰ गृहक्षतइहागच्छेहतिष्ठ गृहक्षताय नमः॥१२॥ तत्पश्चिमैकपदे वास्तोर्दक्षिणरोमे
यममावाहयेत् आवाहयामिदेवेशंदक्षिणांदिशिमाश्रितम् महिषेचसमारूढमंजनाद्रिसमप्र
भं चित्रगुप्तसहायंतंदण्डमुद्गरधारिणं सप्तर्षिभिःसमायुक्तंधर्माधर्मप्रवर्त्तकं लोकस्ययमनार्थं
यकिंकरैःपरिवारितं आगच्छभगवन्धर्मक्षेत्रेस्मिन्सान्निधोभव ॐ यमायत्वांगिरस्वतेपितृ
मतेस्वाहा॥ स्वाहाघर्म्मायस्वाहाघर्म्मःपित्रे ३८।९॥ ॐ भूर्भुवःस्वर्यममावाहयामि॰ यमइहागच्छे
हतिष्ठ यमायनमः १३ तत्पश्चिमैकपदे वास्तोर्दक्षिणजानौगन्धर्वमावाहयेत् आवाहयामिदे

वेशंषड्जादिगानतत्परंवीणांगृहीत्वाहस्तेनतह्वादनरतंविभुम् अप्सरोगणसंकीर्णंनानागंधै-
श्चर्चितं गंधर्वत्वमिहागच्छपूजेयंप्रतिगृह्यतां ॥ गन्धर्वस्त्वाविश्वावसुःपरिदधातुविश्व
स्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः॥ इन्द्रस्यबाहुरसिदक्षिणोविश्वस्यारिष्ट्यै
यजमानस्यपरिधिरस्यग्निरिडऽईडितः॥ मित्रावरुणौत्वोत्तरतःपरिधत्तांध्रुवेणविश्वस्या
रिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः२।३॥ ॐभूर्भुवःस्वर्गन्धर्वइहागच्छेहतिष्ठ ग
न्धर्वायनमः १४ तत्पश्चिमैकपदेवास्तोर्दक्षिणजंघायांभृंगराजमावाहयेत् आवाहयामितंदे
वंभृंगराजंमहाबलं षट्पदैःसेव्यमानंचकुसुमामोदसंरतं आगच्छालिकलत्वंहिक्षेत्रेस्मिन्स

न्निधोभव ॐ सौरीबलाकाशार्गःसृजयःशयाण्डकस्तेमैत्राः सरस्वत्यैशारिःपुरुषवाक्श्वावि
द्भौमीसार्दूलोवृकःपृदाकुस्तेमन्यवेसरस्वतेशुकःपुरुषवाक् २४।३३ ॐ भूर्भुवःस्वःभृंगराजमा
वाहयामि० भृंगराजइहागच्छइहतिष्ठ भृंगराजायनमः २५ तत्पश्चिमैकपदवास्तोर्दक्षिणस्फि
चिमृगमावाहयेत् मृगमावाहयिष्यामिशशांककृतचिन्हकंकृष्णवर्णंचतुष्पादंश्वेतोदरविषा
णकं आगच्छभगवन्नेणक्षेत्रेस्मिन्सन्निधोभव ॐ प्रतद्विष्णुस्तवतेवीर्येणमृगोनभीमः
कुचरोगिरिष्ठाः॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियन्तिभुवनानिविश्वा॥ ५।२०॥ ॐ भूर्भुवः
स्वःमृगमावाहयामि० मृगइहागच्छइहतिष्ठ मृगायनमः २६ तत्पश्चिमेऽर्द्धपदवास्तोःपादयोः

पितॄनावाहयेत् पितॄनावाहयिष्यामि सोमपाद्याननुक्रमात् पिंगाक्षान्कपिलजटान्हस्ते कुश
कमंडलुम् दधानान्सितवस्त्राणि सितयज्ञोपवीतिनः गृह्णानान्कुशशास्त्रं च पितॄन्संपूजयाम्य
हम् ॥ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ॥ उशन्नुशत आवह पितॄन्हविषे अत्तवे १९।७०
ॐ भूर्भुवः स्वः पितॄनावाहयामि० पितॄनिहागच्छ इह तिष्ठ पितृभ्यो नमः ॥१७॥ तदुत्तरार्द्धे वास्तोवी
मासि किंचिद्दौवारिकमावाहयेत् ॥ एह्येहि दौवारिक रक्षणाय यज्ञाङ्गाणि सर्वाणि च मंदिरस्य पेशं ब
लिं वासितदंतकाष्ठं गृहाण पूजां भगवन्नमस्ते ॥ ॐ द्वारौ देवीरन्वस्य विश्वे व्रतादंदन्ते अग्ने ॥
पुरुव्यचसो धाम्ना पत्यमाना इत्यपि मंत्रं ज्ञेयं ॥ ॐ आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा

राष्ट्रे राजन्यः शूरऽइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिःपुरन्धि
र्योषाजिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यवीरोजायतान्निकामेनिकामेनः॥पर्जन्योवर्ष
तुफलवत्यान्नऽओषधयःपच्यन्तांयोगक्षेमोनःकल्पताम् २२।२२ ॐभूर्भुवःस्वर्दौवारिकमा
वाहयामि० दौवारिकइहागच्छइहतिष्ठ दौवारिकायनमः १८ तदुत्तरैकपदेवास्तोर्वामजंघायां
सुग्रीवमावाहयेत् आवाहयेत्वांकपिमध्यमुख्यंसुग्रीवराजंममण्डलेस्मिन् पाषाणवृ
क्षोदधतंकराभ्यांगृहाणपूजांभगवन्नमस्ते ॐनीलग्रीवाःशितिकण्ठादिवꣳरुद्राऽउप
श्रिताः॥तेषाꣳसहस्रयोजनेवधन्वानितन्मसि १६।५६ ॐभूर्भुवःस्वःसुग्रीवमावाहयामि

सुग्रीवइहागच्छेहतिष्ठ सुग्रीवायनमः १८ तद्दुत्तरेकपदेवास्तोर्वामजानोपुष्पदंतमावाहयेत्
आवाहयामिदेवेशंपुष्पदंतंविनायकं लंबोदरंमहाकायंगजवक्त्रंचतुर्भुजं सिद्धिबुद्धिसमा
युक्तंसर्वविघ्नविनाशनं पुष्पदन्तसमायुक्तंपूजयेयमतिगृह्यताम् ॐनमोगणेभ्योगणपति
भ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमो गृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोवि
रूपेभ्योविश्वरूपेभ्यश्चवोनमोनमः १६।२५ ॐभूर्भुवःस्वःपुष्पदन्तमावाहयामि० पुष्पदन्तइ
हागच्छेहतिष्ठ पुष्पदंतायनमः २० तदुत्तरेकपदेवास्तोर्वामोरोवरुणमावाहयेत् आवाह
यामिदेवेशंवरुणंजलनायकं कुंभीरथसमायुक्तंश्वेताद्रिशिखिरोपमं पाशहस्तंमहाबा

कुंयादोगणसमन्वितम् आगच्छवरुणत्वंहिक्षेत्रेऽस्मिन्सन्निधोभव ॐ इमंमेवरुणश्रुधीहव
मद्याचमृडय। त्वामवस्युराचके २१।१ ॐ भूर्भुवःस्वर्वरुणमावाहयामि० वरुणइहागच्छइहति
ष्ठ वरुणायनमः २१ तदुत्तरैकपदेवास्तोर्वामपार्श्वेऽसुरमावाहयेत् असुरत्वमिहागच्छ र
क्षोगणसमन्वित शक्तिशूलधरोनित्यंरक्ताक्षश्चमहाबलः हिरण्यपाशभृद्देवपूजांस्वीकु
रुमेविभो ॐ यम्ऽशिवन्नानसुञ्चेरासुरादधिसंरस्वत्यसुदिंद्रियाय।। इमन्तऽ०शुक्रम्मधुमन्त
मिन्दुऽ०सोमुऽ०राजानमिहभक्षयामि१९ ३४ ॐ भूर्भुवःस्वरसुरमावाहयामि० असुरइहाग
च्छेहतिष्ठ असुरायनमः २२ तदुत्तरैकपदेवास्तोर्वामपार्श्वेर्गवशोषमावाहयेत् आवाहया-

मिदेवेशंपाताललवासिनं सहस्रशिरसंनागंफणामणिविराजितं कर्पूरविशदंदेवंनागरा
जंमहाबलं परोपकारनिरतमनंतंविष्णुवाहनं आगच्छनागराजत्वंक्षेत्रेऽस्मिन्सन्निधोभव
ॐ याऽइषवोयातुधानानांयेवावनस्पतीरंनु॥ येवावटेषुशेरतेतेभ्यः सर्प्पेभ्योनमः २३।७
ॐ भूर्भुवःस्वः शेषमावाहयामि० शेषइहागच्छेहतिष्ठ शेषायनमः २३ तदुत्तरेकपदेवास्तो
र्वसमणिबंधेपापमावाहयेत् आवाहयामितंपापंनाम्नायक्ष्मातिविश्रुतं निर्मांसंनिर्घृणं
शक्तिपाशपाणिंमहाबलं आगच्छभगवन्पापपूजेयंप्रतिगृह्यताम्॥ ॐ एतत्तेरुद्रावु
सन्तेनपरोमूजवतोतीहि॥ अवततधन्वापिनाकावसः कृत्तिवासाऽअहि ᳫ सन्नः

शिवोनीहि ३।६१॥ ॐ भूर्भुवः स्वः पापमावाहयामि० पापइहागच्छेहतिष्ठ पापायनमः २४
तदुत्तरे वायुकोणार्द्धे वास्तोर्वामभवाह्वो रोगमावाहयेत् आवाहयामितंरोगंवातादित्रिगुणा
त्मकं त्रिपादंत्रिशिरवंरक्तनेत्रंभस्मविभूषितम् लोकानांचरक्षणंदेहि बलिभिर्घृतमोदकैः पू
जांगृहाणभोरोगरक्षेत्रेस्मिन्सन्निधोभव॥ ॐ द्रापे अन्धसस्पते दरिद्रनीललोहित आसां
प्रजानामेषांपशूनांमाभेर्मारोङ्मोचनः किंचनाममत् १६।४७ ॐ भूर्भुवः स्वः रोगमावा
हयामि० रोगइहागच्छेहतिष्ठ रोगायनमः २५ तदुत्तरे वायुकोणार्द्धे वास्तोर्वामभवाह्वेन्न
हिमावाहयेत्॥ आहिमावाहयिष्यामि त्रैलोक्यांतरचारिणं शेषकुलसमुद्भूतंलसत्कणम्

हीश्वरं ॥ आगच्छ नागराज त्वं क्षेत्रेऽस्मिन्सन्निधो भव ॥ ॐ अहिरिव भोगैः पर्येति बाहुं ज्याया
यो हेतिं परिबाधमानः ॥ हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः २९
५१ ॥ ॐ भूर्भुवः स्वः अहिमावाहयामि॰ अहे इहागच्छ इह तिष्ठ अहये नमः २६ तस्मा गेकपदे
वास्तोर्वामबाहौ सुरव्यमावाहयेत् ॥ आवाहयामि तं शैवं गणानां सुरव्यनायकं ॥ जटाजूटध
रं सौम्यं शूलपाशधारिणं ॥ नमस्ते सुरव्य देवेश क्षेत्रेऽस्मिन्सन्निधो भव ॥ ॐ अवतत्य धनुष्ट्वं
सहस्राक्ष शतेषुधे ॥ निशीर्य्य शल्यानां मुखा शिवो नः सुमना भव १६।१३ ॐ भूर्भुवः स्वः सु
रव्यमावाहयामि॰ सुरव्य इहागच्छ इह तिष्ठ सुरव्याय नमः २७ तस्मा गेकपदे वास्तोर्वामबाहौ चे

वभल्लाटमावाहयेत् आवाहयामिदेवेशंभल्लाटंविश्वरूपिणं भिल्लवेषधरंकृष्णंधनुर्बाणा
सिधारिणम् भिल्लमोहनकर्णारंवर्हिपिच्छैरलंकृतं आगच्छभगवन्देवक्षेत्रेस्मिन्सन्निधोभव
ॐ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टं
ग्रामेअस्मिन्ननातुरम् १६।४८ ॐ भूर्भुवःस्वःभल्लाटमावाहयामिभल्लाटइहागच्छइहतिष्ठ
भल्लाटायनमः ॥२८॥ तस्यागेकपदेवास्तोवामभागेवसोममावाहयेत् आवाहयामिदेवेशं
शशांकंरजनीपतिं ॥ क्षीरोदधिसमुद्भूतंहरमौलिविराजितं सुधाकरंद्विजाधारंत्रैलोक्यप्रियका
रकं औषध्याप्यायनकरंसोमंकंदर्पवर्द्धनं आगच्छभगवन्सोमक्षेत्रेस्मिन्सन्निधोभव ॥

ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् भवा वाजस्य सङ्गथे १२।११२ ॐ भूर्भुवः स्वः
सोममावाहयामि ॥ सोम इहागच्छ इह तिष्ठ सोमाय नमः ॥२९॥ तस्याकृपदे वास्तोर्वायांशां सर्प्प
मावाहयेत् आवाहयेऽनन्तनागं फणासप्तकसंकृतं आगच्छोरगराजत्वं क्षेमेऽस्मिन्सन्निधो भव
ॐ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि यो अस्कभायदुत्तरं सध
स्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ५।१८॥ ॐ भूर्भुवः स्वः सर्प्पमावाहयामि ॥ सर्प्प इहा
गच्छ इह तिष्ठ सर्प्पाय नमः ३०॥ तस्याकृपदे वास्तोर्याम्यांशे दितिमावाहयेत् आवाहयामि तां
देवीमदितिं देवमातरं द्विभुजां पद्महस्तां च सर्वाभरणभूषितां कश्यपस्य प्रियां भार्यां सुरूपां च

मलोचनाम् आगच्छत्वादितेत्वंहिक्षेत्रेस्मिन्सान्निधोभव ॐ मिडएत्यादितेएह्रिकाम्युरए
ते॥ मयिवःकामधरणम्भूयात् ३।२७ ॐ भूर्भुवःस्वः आदितिमावाहयामि० आदितेइहागच्छे
हतिष्ठ आदितयेनमः ३१॥ नत्वाकुपदेवास्तोवामनेत्रेदितिमावाहयेत् दितिमावाहयिष्यामि
दैत्यानांचैवमातरं शुक्लांगींद्विभुजांचैवशूलपट्टिशधारिणीम् समागच्छदितेत्वंहिक्षेत्रेस्मिन्
सान्निधोभव ॐ आदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता सपितासपुत्रः विश्वेदेवा आदिति
पञ्चजना आदितिर्ज्जातमदितिर्ज्जनित्वम् २५।२३ ॐ भूर्भुवःस्वः दितिमावाहयामि० दि
तेइहागच्छेहतिष्ठ दितयेनमः ३२ पुनरप्यीशकोणगतद्वितीयपंक्तिस्थपदद्वयेवास्तोसुरेयम्

पश्चावाहयेत् अपश्चावात्समिच्यामि सहयोमाः वरदाः शिवाः आपश्वायान्तु सततं पवित्रास्मंग
लावहाः समागच्छतत्पूर्यवैकुर्वन्त्वनाह्निसन्निभं ॐ आपोह्निष्ठामयोभुवस्तानऊर्जेदधा
तना महेरणायचक्षसे ३६।१४ ॐ भूर्भुवः स्वः आपश्चावाहयामि आपइहागच्छेहतिष्ठ अद्भ्यो
नमः ३३ तद्दक्षिणेपदद्वयेवारुणोद्दक्षिणक्षोसावित्रमावाहयेत् अगन्थापवत्समावाहयेदिश्य
पिकश्चिलुस्तकेपाठः आपवत्सत्वमेरध्येत्स्याह्निकमस्कंधवरयदं पूजांगृहाणदेवेश कुंभस्तनमो
स्तुते ॐ मातेवत्सोमनोयमत्यरुमाचिंत्सधस्थात् अग्नेत्वांकामयागिरा १२।११५ ॐ भूर्भुवः स्वः ॥१६॥
आपवत्समावाहयामि॰ आपवत्सइहागच्छेहतिष्ठ आपवत्सायनमः ३४ सावित्रत्वामिहागच्छ

सर्वध्वांतनिवारक पूजांगृह्णाणदेवेशममभक्तिप्रकल्पितां ॥ॐ हस्तः आध्यायसविताविभ्रद
भ्रिं ठ॰ हिरण्ययीम् ॥ज्योतिरिन्द्रिचाय्यपृथिव्याः अध्याभरदानुष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ ११।११
ॐ भूर्भुवःस्वःसावित्रमावाहयामि॰ सावित्रइहागच्छइहतिष्ठ सावित्रायनमः ॥३४॥ तद्दक्षिणेपद
चतुष्टयेवास्तोर्दक्षिणहस्ते ऽर्घ्यमाणमावाहयेत् ॥ अर्घ्यमनकुरुमेभद्रंसंज्ञयासहसर्वदा ॥गृह्ण
णेमांमयादत्तांपूजांदेवनमोस्तुते ॥ॐ यदुद्यसूरउदितेनागामित्रोऽअर्यमासुवातिसविताभगः
३३।२० ॐ भूर्भुवःस्वःअर्यमाणमावाहयामि॰ अर्यमनिहागच्छइहतिष्ठ ॥अर्यमणेनमः ॥३५॥त
द्दक्षिणेपदद्वयेवास्तोर्दक्षिणहस्तेसवितारमावाहयेत् आवाहयेत्सवितृमंडलमध्यसंस्थंसप्ता

श्ववाहनसुतं धृतपंकजं त्वां ॥ केयूरकुंडलविधारक देहि सौख्यं पूजां गृहाण पूजां भगवन्नमस्ते ॥ ॐ विश्वानि
देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव ३०।३ ॐ भूर्भुवः स्वः सवितारमावाहयामि । सवितरिहाग
च्छेह तिष्ठ सवित्रे नमः ३६ तद्दक्षिणपदद्वये वास्तोर्दक्षिणहस्ते सावित्रमावाहयेत् सावित्र त्वामिहागच्छ
सर्वध्वांतनिवारक पूजां गृहाण देवेश मया भक्त्या प्रकल्पितम् ॥ ॐ हस्त आधाय सविता बिभ्रदभ्रिं
हिरण्ययीम् अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरदानुष्टुभेन छन्दसाङ्गिरस्वत् ११।११ ॐ भू
र्भुवः स्वः सावित्रमावाहयामि । सावित्र इहागच्छेह तिष्ठ सावित्राय नमः ॥ ३७ ॥ तत्पश्चिमपदचतुष्के वास्तो
र्जठरदक्षिणभागे विवस्वंतमावाहयेत् ॥ एध्येध्यो हि देवा त्रिगुणात्मक त्वं हयं समारुह्य तमो नुदन्वै ॥ हस्त

द्वयेवैधृतचक्रपद्मगृहाणपूजांभगवन्नमस्ते ॐविवस्वन्नादित्यैषतेसोमपीथस्तस्मिन्मत्स्वश्रदस्मै
नरोवचसेदधातनुयदाशीर्दादम्पतीवाममश्नुतः॥पुमान्पुत्रोजायतेविन्दतेवस्वधाविश्वाहारपए
धतेगृहे ०।५ ॐभूर्भुवःस्वर्विवस्वंतमावाहयामि०॥विवस्वन्निहागच्छेहतिष्ठ विवस्वतेनमः ३८॥नत्य
श्चिमपदद्वयेवास्तोस्वकरणदेशेविबुधाधिपमावाहयेत् एह्येह्येहिवास्तोविबुधाधिपत्वंगजाधिरूढो
ममरक्षणाय॥वराप्सरोभिश्चविविज्यमानोगृहाणपूजांभगवन्नमस्ते॥ॐसर्वोधिसूरिसृधवाद्वसु
पतेवसुदावन् युयोध्यास्मद्द्वेषांःसिविश्वकर्म्मणेस्वाहा १२।४३ ॐभूर्भुवःस्वःविबुधाधिपमावाह
यामि० विबुधाधिपइहागच्छेहतिष्ठ विबुधाधिपायनमः ३९॥नत्यश्चिमेपदद्वयेवास्तोर्मेद्रदेशेजय

मावाहयेत् ॥ आवाहयामितंदेवंजयंयंष्टिविधारकं ॥ जयत्वंहिसमागच्छक्षेत्रेस्मिन्सन्निधोभव ॥
ॐ अषाढंयुत्सुपृतनासुपप्रिंᳬस्वर्षामप्स्वांवृजनस्यगोपाम् ॥ भरेषुजांᳬसुक्षितिंᳬसुश्रवसंजयंत
न्त्वामनुमदेमसोम ३४।२० ॐ भूर्भुवःस्वः जयमावाहयामि० जयइहागच्छेहतिष्ठ जयायनमः ४०
तदुत्तरपदचतुष्केवास्तोर्जठरवामभागेमित्रमावाहयेत् ॥ मित्रत्वमेवहितमोपशान्त्यैपद्मासनःप
द्मकरोसिनित्यं ॥ गृहाणपूजांघृतमोदकादिंमित्रोनमस्तेभगवन्नमस्ते ॥ ॐ मित्रोनएहिसुमित्र
धः इन्द्रस्योरुमाविशदक्षिणमुशन्नुशन्तᳬस्योनःस्योनम् ४।२७ ॐ भूर्भुवःस्वःमित्रमावाहया
मि० मित्रइहागच्छेहतिष्ठ मित्रायनमः ४१ तदुत्तरपदद्वयेवास्तोर्वामहस्तेराजयक्ष्माणमावाहयेत्

भवंतमितिप्रत्येकार्चनपक्षेज्ञेयं बहुत्वपक्षेतुसाधुभवंतआसतामर्चयिष्यामोभवतइतिवाक्यंवदेत् अर्च

येतिवचनानंतरं षडर्घ्याभवंत्याचार्यऋत्विक्वैवाह्योराजाप्रियः स्नातकप्रतिसंवत्सरानर्हेयुर्यक्ष्यमाणा

स्तुऋत्विजइति सुवर्णमणिभिर्दिव्यैः रचितेदेवनिर्मिते ॥ दिव्यसिंहासनेविप्रउपविश्यप्रसीदमेइतिमंत्रे

णासनेउपवेशयेत् ॥ ॐ विष्टरोविष्टरोविष्टरइत्याचार्येणोक्ते ॥ विष्टरःप्रतिगृह्यतामितियजमानोवदेत्

प्रतिगृह्णामइतिप्रतिवचनमुक्त्वा वर्ष्मोऽस्मिसमानानामुद्यतामिवसूर्यः इमन्तमभितिष्ठामियोमांक

श्चाभिदासतीतिमंत्रेणब्राह्मणाःप्रत्येकंविष्टरंगृहीत्वाउदगग्रंविष्टरंदक्षिणपादतलेस्थापयेयुः ततःपा

द्यं ॐ पाद्यंपाद्यंपाद्यमित्याचार्येणोक्ते पादोदकंतुविप्रेन्द्रसुवर्णकलशोस्थितं ॥ गंधपुष्पाक्षतैर्युक्तं

पाद्यंसंगृह्यतांविभोइतिमंत्रंपठित्वायजमानः पाद्यंप्रतिगृह्यतामित्युक्त्वोदकपात्रंगृहीत्वाऽर्घ्यस्यांजलिं
पूरयेत् ततोऽर्घ्याः ॐ विराजोदोहोसीतिप्रजापतिर्ऋषिर्गायत्रीछंदोब्रह्मादेवतापादप्रक्षालनेविनियोगः
ॐ विराजोदोहोसि विराजोदोहमशीयमयिपाद्यायैविराजोदोहइतिमंत्रंपठित्वादक्षिणंचरणंप्रक्षालयेयुः
पुनर्वामंचरणप्रक्षालनमेवमेवकर्त्तव्यं ततोद्वितीयंविष्टरंपूर्ववदितिकर्त्तव्यतांकृत्वा यजमानोदद्यात् ॐ अर्घ्यो
ऽर्घ्योऽर्घ्यइत्याचार्येणोक्ते ततोयजमानआपःक्षीरंकुशाग्राणिदधिदूर्वाक्षतास्तथा सर्षपाःकुंकुमंचैतिअ
र्घोष्टांगःप्रकीर्त्तितइत्यष्टांगमर्घंकृत्वा ॥ स्वागतंभोद्विजश्रेष्ठामदनुग्रहकारकाः इदमर्घ्यमिदंपाद्यं
भवद्भिःप्रतिगृह्यतामितिपठित्वा अर्घ्यंप्रतिगृह्यतामितियजमानोवदेत् ततोब्राह्मणाःप्रतिगृह्णीयुः

त्युक्त्वा आपस्थइतिमंत्रस्यप्रजापतिर्ऋषिः अनुष्टुपछंदोब्रह्मादेवता ऽर्घ्यग्रहणेविनियोगः ॐआपस्थ
युष्माभिःसर्वान्कामान्वाप्सुवानीतिमंत्रेणार्घ्यंगृहीत्वामूर्द्धपर्यंतमर्घ्यमानीयतत्रस्थमक्षतादिकंमूर्द्धनिनि
वेश्य ॐसमुद्रंवइतिमंत्रस्याथर्वणऋषिर्गायत्रीछंदआपोदेवता ऽर्घ्याभिमंत्रणेविनियोगः ॐसमुद्रंवः
प्रहिणोमिस्वांयोनिमभिगच्छत अरिष्टास्माकंवीरामापरासेचिमत्पयइतिमंत्रंपठित्वाभूमौप्र
क्षिपेयुः ततआचनीयमाचनीयमाचमनीयमित्याचार्येणोक्ते ततोयजमानःशुभद्रव्यसमायुक्तं
स्वर्णपात्रोदकंशुभम् भोऽभयंकरसर्वेषांगृह्णाणाचमनीयकमितिपठित्वा आचमनंप्रतिगृह्यतां
मितिवदेत् ततोब्राम्हणाआचमनंप्रतिगृह्णीमइत्युक्त्वा ॐ आमागन्नितिमंत्रस्यप्रजापतिर्ऋ

षिस्त्रिष्टुप्छंदआपोदेवताआचमनेविनियोगः ॐआमागन्यशसास ꣳसृजवर्चसातस्माकुरुप्रिय
म्प्रजानामधिपंपशूनामरिष्टिन्तनूनामितिमंत्रेणसकृदाचम्यस्मार्त्ताचमनंकुर्य्युः ततॐमधुपर्को
मधुपर्कोमधुपर्कइत्याचार्येणोक्ते यजमानोआज्यमेकंपलंग्राह्यंदधित्रिपलमेवच मधुनःपलमे
कंतुमधुपर्कंतदुच्यतेइत्युक्तलक्षणंदधिमधुघृतरूपंमधुपर्ककांस्यपात्रस्थितं द्वितीयकांस्यपात्रे
णपिहितमादाय मधुपर्कंगृहाणेशसर्वदामधुपर्कद मधुपर्कप्रदानेनप्रीतोभवद्विजेश्वर इतिमंत्रं
पठित्वा मधुपर्कंप्रतिगृह्यतामितिवदेत् ततोब्राह्मणायजमानहस्तास्थितंमधुपर्कंमित्रस्यत्वेतिमं
त्रेणप्रतीक्ष्य ॐमित्रस्यत्वेतिमंत्रस्यकुत्सऋषिस्त्रिष्टुप्छंदःसवितादेवतामधुपर्कावेक्षणेविनि

वृल्मीकान्क्रुोमभिग्लौभिर्गुल्माच्छिराभिः अर्वन्तीन्दुदोन्कुक्षिभ्यां ॐ ससुद्रसुदरेणवैश्वानरम्भ-स्मेना २५।८॥ ॐ भूर्भुवःस्वः पूतनामावाहयामि ॰ पूतनेइहागच्छेहतिष्ठ पूतनायैनमः ॥३॥ अथ वायव्ये पापराक्षसीमावाहयेत् ॥ अहमावाहयिष्यामिराक्षसींपापपूर्विकां ॥ रक्तााननांधूम्रवर्णां राक्षसीगणसंयुताम् ॥ राक्षसीत्वमिहागच्छपूजेयंप्रतिगृह्यतां ॥ ॐ यस्यास्तेघोरआसञ्जुहो म्येषाम्बन्धानामवसर्जनाय ॥ यांत्वाजनोभूमिरितिप्रमन्दते निर्ऋतिंत्वाहंपरिवेदविश्वतः ॥१२।६४ ॐ भूर्भुवःस्वः पापराक्षसीमावाहयामि ॰ पापराक्षसीइहागच्छेहतिष्ठ पापराक्षस्यैनमः ॥४॥ ततःपू र्वदक्षिणपश्चिमोत्तरादिक्षुक्रमेणस्कंदमर्यमणंजृंभकांपिलिपिच्छंचावाहयेत् ॥ तद्यथा ॥ पूर्वेस्कंदः

आवाहयामिदेवेशंषण्मुखंकृत्तिकासुतं रुद्रतेजःसमुद्भूतंदेवसेनासमन्वितं मयूरवाहनंशक्तिपा
णिंवैब्रह्मचारिणं आगच्छभगवन्स्कन्दक्षेत्रेस्मिन्सन्निधोभव॥ ॐ यत्रबाणाःसम्पतन्तिकुमारा
विशिखाइव॥ तन्नऽइन्द्रोबृहस्पतिरदितिःशर्म्मयच्छतुविश्वाहाशर्म्मयच्छतु १७।४८॥ ॐ भूर्भुवः
स्कन्दमावाहयामि० स्कन्दइहागच्छेहतिष्ठ स्कंदायनमः॥१॥ दक्षिणेर्य्यमाणं०॥ आवाहयामिदेव
शमर्य्यमणंपितृनायकं दिव्यंमहिषमारूढंदंडपाणिंशुभेक्षणं कर्म्मणांफलदातारंलोकानांक
र्मसाक्षिणं एहित्वमर्य्यमन्देवक्षेत्रेस्मिन्सन्निधोभव॥ ॐ यद्वयसूरउदितेनागामित्रोऽअर्य्यमा
सुवातिसविताभगः ३३।२०॥ ॐ भूर्भुवःस्वः अर्य्यमाणमावाहयामि० अर्य्यमन्निहागच्छेहतिष्ठ॥

ख्यर्यमगोनमः ॥२॥ पश्चिमेजृंभकं ॥ आवाहयेत्वांमहारंचसुरस्थंजृंभायमानंवररवड्गहस्तं ॥ प्रत्यग्दि
शायांचसुरक्षणीयमत्राधिवासंकुरुजृंभकत्वं ॥ ॐ हिंकारायस्वाहा हिंकृतायस्वाहा क्रन्दतेस्वाहा व
क्रन्दायस्वाहा प्रोथतेस्वाहा प्रप्रोथायस्वाहा गन्धायस्वाहा घ्रातायस्वाहा निविष्टायस्वाहा उपविष्टाय
स्वाहा सन्दितायस्वाहा वल्गतेस्वाहा सीनायस्वाहा शयानायस्वाहा जाग्रतेस्वाहा स्वपतेस्वाहा कूज
तेस्वाहा प्रबुद्धायस्वाहा विजृंभमाणायस्वाहा विचृतायस्वाहा संहानायस्वाहा उपस्थितायस्वाहा अय
नायस्वाहा प्राणायस्वाहा ॥ २२ ॥ ७ ॥ ॐ भूर्भुवःस्वः जृंभकमावाहयामि ॥ जृंभकइहागच्छइहतिष्ठ ॥
जृंभकायनमः ॥३॥ उत्तरेपिलिपिच्छं ॥ आवाहयेत्वांपिलिपिच्छकंचमयूरपिच्छाभिविधारयन्तम् ॥

वामेतुहस्ते धनुरादधानं बाणं दधानं त्वितरेतु हस्ते ॥ ॐ कास्विदासीत्पूर्वचित्तिः किंस्विदासीद्बृ
हद्वयः ॥ कास्विदासीत्पिलिप्पिला कास्विदासीत्पिशङ्गिला २३।५३॥ ॐ भूर्भुवः स्वः जृंभकमावाहया
मि० जृंभक इहागच्छेहतिष्ठ जृंभकाय नमः ॥४॥ ततः प्रागाद्यष्टसु दिक्षु इन्द्रादिलोकपालानावाह्य
पूजयेत् ॥ तद्यथा पूर्वे इन्द्रमावाहयेत् ॥ चतुर्दन्तगजारूढो वज्रपाणिः पुरंदरः ॥ प्राचीपतिस्तु ध्यात
व्यो नानाभरणभूषितः ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम् ॥ ह्वयामि श
क्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः २०।५०॥ ॐ भूर्भुवः स्वः इन्द्रमावाहयामि० इन्द्र इहाग
च्छेहतिष्ठ० इन्द्राय नमः ॥१॥ अथाग्निकोणे अग्निमावाहयेत् ॥ पिंगः श्मश्रुकेशाक्षः पीनांगो जठरः

रोरुणः ॥ छागस्थः साक्षसूत्रस्रुवसमान्वितः शक्तिधारकः ॥ ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हे
डोऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषांसि प्रमुमुग्ध्यस्मत् २१।३॥ ॐ भू
र्भुवः स्वः अग्निमावाहयामि ॥ अग्ने इहागच्छ इहतिष्ठ ॥ अग्नये नमः ॥२॥ दक्षिणे यममावाहयेत् ॥ ईष
त्पीतो यमो ध्येयो दण्डहस्तो विजानता ॥ ॐ यमाय इत्यादि मन्त्रं वा यमस्य ज्ञेयं ॥ ॐ यमाय त्वाङ्गिर
स्वते पितृमते स्वाहा ॥ स्वाहा धर्माय स्वाहा धर्मः पित्रे ३८।८॥ ॐ यमाय त्वा मखाय त्वा सूर्यस्य त्वा
तपसे ॥ देवस्त्वा सविता मध्वानक्तु पृथिव्याः सँस्पृशस्पाहि ॥ अर्चिरसि शोचिरसि तपोसि ३७।११
ॐ भूर्भुवः स्वः यममावाहयामि ॥ यम इहागच्छ इहतिष्ठ ॥ यमाय नमः ॥३॥ अथ नैर्ऋत्यां निर्ऋ

तिमावाहयेत् ॥ रक्तदृक्पाशभृत्कृष्णो निर्ऋतिर्विकृताननः ॥ पुंस्थितः खड्गहस्तश्च भूतवान्राक्षस
प्रियः ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा त इत्
या नमो देवि निर्ऋते तुभ्यमस्तु ॥ १२।६२ ॥ ॐ भूर्भुवः स्वः निर्ऋतिमावाहयामि ॥ निर्ऋत इहागच्छ इह ति
ष्ठ ॥ निर्ऋतये नमः ॥ ४ ॥ अथ पश्चिमे वरुणमावाहयेत् ॥ वरुणः पाशभृत्सौम्यः प्रतीच्यां मकराश्रयः
॥ आवाहयामि वरुण त्वां क्षेत्रेऽस्मिन्सन्निधो भव ॥ ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते य
जमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥ २१।२ ॥ ॐ भूर्भुवः स्वः
वरुणमावाहयामि ॥ वरुण इहागच्छ इह तिष्ठ वरुणाय नमः ॥ ५ ॥ अथ वायव्ये वायुमावाहयेत् ॥

धावन्हरिणपृष्ठस्थो ध्वजधारी समीरणः ॥ वरदानुकरो धूम्रवर्णः कार्यो विजानता ॥ ॐ आनो नि
युद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् ॥ वायो अस्मिन्त्सवने मादयस्व यूयं पात
स्वस्तिभिः सदा नः २७।२८ ॐ भूर्भुवः स्वः वायुमावाहयामि० ॥ वायो इहागच्छेह तिष्ठ ॥ वायवे नमः ॥
६ ॥ उत्तरे कुबेरमावाहयेत् ॥ दशाश्वरथगः सोमो गदा० ॥
ॐ वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः प्रजावन्तः सचेमहि ३।५६ ॥ ॐ भूर्भुवः स्वः कुबेरमावाह
यामि० ॥ कुबेर इहागच्छेह तिष्ठ ॥ कुबेराय नमः ॥ ७ ॥ ईशाने ईशानमावाहयेत् ॥
ॐ तमीशानं जगतस्तस्थुषस्पतिं धि

यस्मिन्व्यमवसेक्ष्ममहेयस॥ पुषाणो यथावेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥२५।१८॥
ॐ भूर्भुवः स्वः ईशानमावाहयामि॥ ईशानइहागच्छेहतिष्ठ॥ ईशानायनमः॥८॥ ईशानपूर्वयोर्म
ध्येरुद्रमावाहयेत्॥ पंचवक्त्रं दशभुजं त्रिनेत्रं स्मितसुंदरं॥ कर्पूरगौरं चंद्रार्द्धशेखरं सुविभूषितं॥ नी
लग्रीवमनाहारं व्याघ्रचर्माविराजितं॥ कमंडल्वक्षसूत्रादिपाशशूलधरं हरं॥ उद्दंडदंडमरुखड्गांगा
मयपात्रकं॥ ॐ भूरसिरुद्रामीहनाप्यर्वनासोवभूहस्यमरहूतीसजोषाः॥ यः शर्ध्वसंतेस्तुवतेधायियुज्मः
इन्द्रज्येष्ठा अस्मार्द्ध अवन्तुदेवाः ३३।५०॥ ॐ भूर्भुवः स्वः रुद्रमावाहयामि॥ रुद्रइहागच्छे
हतिष्ठ॥ रुद्रायनमः॥९॥ निर्ऋतिपश्चिमयोर्मध्येभूमिमावाहयेत॥ ससुवर्णा महीमोक्ता दिव्याभरण

भूषिता ॥ चतुर्भुजासौम्यवपुश्चंद्रांशुसदृशांबरा ॥ रत्नपात्रंसस्यपात्रंपात्रमौषधसंयुतं ॥ पद्माकरांच
ध्यातव्यासुवोयादवनंदन ॥ ॐ स्योनापृथिवीनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ३६।१३
ॐ भूर्भुवःस्वः भूमिमावाहयामि० ॥ भूमेइहागच्छेहतिष्ठ ॥ भूम्यैनमः ॥ १० ॥ ततःशिखिप्रभृतिपंचच
त्वारिंशद्देवान्प्रत्येकमेकतन्त्रकांडानुसमयेनपदार्थानुसमयेनवाषोडशोपचारैःपंचोपचारैर्वा
प्रणवादिनमोंतेनस्वस्वनाममंत्रेणपूजयेत् ॥ तत्क्रमः ॥ ॐ शिखिनेनमः इदंपाद्यं एषोर्घः इद
माचमनीयं इदंपुनराचमनीयं इदंवस्त्रं इदमनुलेपनम् एतानक्षतान् एतानिपुष्पाणि एषधूपः
एषदीपः एतानिनानाविधानिनैवेद्यानि इदमाचमनीयम् इदंतांबूलं इदंपूगीफलम् एतांदक्षिणां

१ एवंपर्ज्जन्यायनमः एतानिपूर्वोक्तानिपाद्यादीनि २ जयंतायनमः एतानिपा० ३ कुलिशायन
मः एतानिपाद्यादीनि ४ सूर्यायनमः एतानिपा० ५ सत्यायनमः एतानि० ६ भृशायनमः एतानिपा०
७ आकाशायनमः एतानिपा० ८ वायवेनमः एतानिपा० ९ पूष्णेनमः एतानिपा० १० वितथायनमः ए
तानिपा० ११ बृहत्क्षेत्रायनमः एतानिपा० १२ यमायनमः एतानिपा० १३ गंधर्वायनमः एतानिपा०
१४ भृंगराजायनमः एतानिपा० १५ मृगायनमः एतानिपा० १६ पितृभ्योनमः एतानिपा० १७ दौवा
रिकायनमः एतानिपाद्या० १८ सुग्रीवायनमः एतानिपा० १९ पुष्पदंतायनमः २० जलाधिपतये
नमः एतानिपा० २१ असुरायनमः एतानिपा० २२ शेषायनमः एतानिपा० २३ पापायनमः एतानि-

पा०२४ रोगायनमः एतानिपा०२५ अहयेनमः एतानिपा०२६ मुख्यायनमः एतानिपा०२७ भल्लाटाय
नमः एतानिपा०२८ सोमायनमः एतानिपा०२९ नागायनमः एतानिपा०३० अदितयेनमः एतानिपा०
३१ दितयेनमः एतानिपा०३२ अद्भ्योनमः एतानिपा०३३ सावित्र्यायनमः एतानिपा०३४ जयायनमः
एतानिपा०३५ रुद्रायनमः एतानिपा०३६ अर्यम्णेनमः एतानिपा ३७ सवित्रेनमः एतानिपा०३८
विवस्वतेनमः एतानिपा०३९ विबुधायनमः एतानिपा०४० मित्रायनमः एतानिपा०४१ राजयक्ष्म
णेनमः एतानिपा०४२ पृथ्वीधरायनमः एतानिपा०४३ आपवत्सायनमः एतानिपा०४४ ब्रह्मणेन
मः एतानिपाद्यादीनि ४५ ततोमंडलबाह्येईशानेचरक्येनमः एतानिपा०१ आग्नेय्यांविदार्य्यैनमः

एतानिपा॰ २ नैर्ऋत्यांपूतनायैनमः ३ तानिपा॰ ३ वायव्येपापराक्षस्यैनमः एतानिपा॰ ४ पूर्वेस्कं
दायनमः एतानिपा॰ १ दक्षिणेऽर्यम्णेनमः एतानिपा॰ २ पश्चिमेजृंभकायनमः एतानिपा॰ ३
उत्तरेपिलिपिच्छायनमः एतानिपा॰ ४ पूर्वेइंद्रायनमः एतानिपा॰ १ आग्निकोणेऽग्नयेनमः एता
निपा॰ ३ दक्षिणेयमायनमः एतानिपा॰ २ दक्षिणेयमायनमः एतानिपा॰ ३ नैर्ऋत्यांनिर्ऋतयेनमः
एतानिपा॰ ४ पश्चिमेवरुणायनमः एतानिपा॰ ५ वायव्येवायवेनमः एतानिपा॰ ६ उत्तरेकुबेरायन
मः एतानिपाद्या॰ ७ ईशानेईशानायनमः एतानिपा॰ ८ ईशानपूर्वयोर्मध्येरुद्रायनमः एतानिपा
९ निर्ऋतिपश्चिमयोर्मध्येभूम्यैनमः एतानिपा॰ १० पूर्वेउग्रसेनायनमः एतानिपा॰ १ दक्षिणेडाम

रायनमः एतानिपाद्या० २ पश्चिमेमन्द्रात्तिलायनमः एतानिपा० ३ उत्तरेकुलिशायनमः एतानिपाद्या
दीनि ४ एवंवास्तुमंडलदेवतानांपूजनंकृत्वातदनंतरंमंडलमध्येएवमंडूकादिपीठदेवेभ्योनमः इति
पीठदेवानावाह्यसंपूज्य अनंतरंवास्तुमंडलमध्येमंडलस्योत्तरेवायथाविधिनाघटंपीठंवासंस्था
प्यतस्योपरिवास्तुप्रतिमायाअग्न्युत्तारणंकृत्वावास्तुप्रतिमांस्थापयेत् अथाग्न्युत्तारणमंत्राणि
देशकालौसंकीर्त्य अस्यांमूर्त्तौअवघातादिदोषपरिहारार्थमग्न्युत्तारणंदेवतासान्निध्यार्थंचप्रा
णप्रतिष्ठांकरिष्ये।। समुद्रस्यत्वेत्यष्टाभिर्ऋग्भिः प्रथमाहुत्तौदुग्धधारांद्वितीयाहुत्तौजलधारां
चप्रतिमायांपात्रस्थितायांदद्यात्।। समुद्रस्यत्वावकयाग्नेपरिव्ययामसि।। पावकोअस्मा

भ्यꣳ शिवो भव १६।४ हिमस्य त्वा जरायुणाग्ने परि व्ययामसि। पावकोऽअस्मभ्यꣳ शिवो भ-
व १६।५ उप ज्मन्नुप वेतसेऽवतर नदीष्वा। अग्ने पित्तमपामसि मण्डूकि ताभिरा गहि सेमं नो यज्ञं पा-
वकवर्णꣳ शिवं कृधि १६।६॥ अपामिदं न्ययनꣳ समुद्रस्य निवेशनम्। अन्याँस्ते अस्मत्तप-
न्तु हेतयः पावकोऽअस्मभ्यꣳ शिवो भव १६।७ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया। आ दे-
वान्वक्षि यक्षि च १६।८ स नः पावक दीदिवोऽग्ने देवाँ२ऽइहा वह। उप यज्ञꣳ हविश्च नः १६।९ पाव-
कया यश्चितयन्त्या कृपा क्षामन्रुरुचऽउषसो न भानुना। तूर्वन्न यामन्नेतशस्य नू रणऽआ यो घृ-
णे न ततृषाणोऽअजरः १६।१० नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्चिषे। अन्याँस्ते अस्मत्त

पन्तुहेतये: पावकोऽस्मभ्यं शिवोभव १८।११॥ इतिरीत्याऽग्न्युत्तारणंकृत्वा वास्तुंषोडशोपचा
रेणपंचोपचारेणवायथाविधिनायथाशक्तिपूजयेत् ॥ ओंभूर्भुवःस्वः वास्तुपुरुषमावाहयामि॥
ॐ भूः वास्तुपुरुषमावाहयामि॥ ॐ भुवोनमः वास्तुपुरुषमावाहयामि॥ ॐ स्वर्नमः वास्तुपुरुष
मावाहयामि॥ तदुत्तरेतत्रैववास्तोष्पतेइतिमंत्रेणरूपवास्तुंप्रतिमावाहयेत् वास्तोष्पतेइतिमंत्र
स्यवशिष्ठऋषिस्त्रिष्टुप्छंदः वास्तुर्देवतावास्तुस्थापनेविनियोगः॥ वास्तोष्पतेप्रतिजानीह्यस्मा
न्त्स्वावेशोऽअनमीवोभवानः॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदे ॐ वास्तो
ष्पतयेनमः वास्तोष्पतिमावाहयामिस्थापयामि सुवर्णस्यरूप्यस्यवाप्रतिमाकर्तव्या ॐ ह्रींनमोभ

गवन्वास्तुपुरुषमहाबलपराक्रमसर्वदेवताधिष्ठितशरीरब्रह्मपुत्रसकलब्रह्मांडधारिन्भूम्यर्पितम
स्तकपुरपत्तनप्रासादगृहवापीकूपादिसन्निवेशसान्निध्यकरविश्वंभरपरमपुरुषस्वरूपचक्रशार्ङ्ग
धनुःकरवरदाभयहस्तवास्तोनमस्ते॥ एह्येहिभगवन्वास्तोगृहेस्मिन्सर्वसिद्धये॥जानुनीकूर्प
रासक्तंदिशिवातहुताशयोरितिमंत्रेणैशानशिरसंनैर्ऋत्यपादमाग्नेयजानुकंवायव्यकूर्परमाकुंचि
तकरंशमसुत्तानंवास्तुपुरुषमावाह्यवास्तोष्पतइतिपूर्वोक्तेनमंत्रेण ॐवास्तवेनमइतिनाममंत्रे
णवाषोडशोपचारैःसंपूज्य॥ ॐम् एह्येहिभगवन्वास्तोइमंमयोपनीतंबलिंगृहाणममगृहमच्छि
द्रंकुरु सकलदुष्टेभ्योरक्षस्वाहेतिसताम्बूलदक्षिणांबलिंदत्वाप्रार्थयेत्॥यज्ञभागंप्रतीक्षस्व पू-

जांनैवचलिंमम नमोनमस्तेदेवेशममस्वस्तिकरोभव अथप्राणप्रतिष्ठा अस्यश्रीप्राणप्रतिष्ठामंत्र
स्यब्रह्माविष्णुरुद्राऋषयः ऋग्यजुःसामानिच्छंदांसि क्रियामयवपुः प्राणाख्यादेवता आंबीजं क्रौंशक्तिः
प्राणप्रतिष्ठायांविनियोगः ब्रह्माविष्णुरुद्रऋषिभ्योनमःशिरसि ऋग्यजुःसामच्छंदोभ्योनमःमुखे प्राणा
ख्यदेवतायैनमःहृदि आंबीजायनमःगुह्ये क्रौंशक्त्यैनमः पादयोः ॐकंखंगंघंङं आंपृथ्व्यप्तेजोवा
य्वाकाशात्मने आंहृदयायनमः ॐचंछंजंझंञंइंशब्दस्पर्शरूपरसगन्धात्मनेइंशिरसेस्वाहा ॐटं
ठंडंढंणंउं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मनेऊंशिखायैवौषट् ॐतंथंदंधंनंएंवाक्पाणिपादपायूपस्था
त्मनेऐंकवचायहुं ॐपंफंबंभंमं ॐ वचनदानविहरणोत्सर्गानंदात्मने औंनेत्रत्रयायवौषट् ॐयंरंलं

वंशंषंसंहंळं क्षंलंमनोबुद्ध्यहंकारचित्तात्मने नमः अस्त्राय फट् एवमात्मनि मूर्तौ च कृत्वा मूर्तिं स्पृष्ट्वा ज-
पेत् ॐ ह्रीं क्रौं यंरंलंवंशंषंसंहं देवस्य प्राणा इह प्राणाः ॐ आं ह्रीं हंसः देवस्य जीव इह स्थितः ॐ आं ह्रीं
हंसः देवस्य सर्वेंद्रियाणि ॐ आं ह्रीं हंसः देवस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य स्वस्तये सुखेन सु-
चिरं तिष्ठंतु स्वाहा अर्चाहृदयेंगुष्ठं दत्वा जपेत् अस्यै प्राणाः प्रतिष्ठंतु अस्यै प्राणाः क्षरंतु अस्यै देवत्वम-
र्चायै मामहेति च कश्चन प्राणेन सन्निरुध्य सजीवं ध्यात्वा ध्रुवा द्यौरिति त्र्यृचं जप्त्वा कर्णे गायत्रीं देवमंत्रं च ज-
पेत् ततः कर्त्ता स्वागतं देवदेवेश मद्भाग्यात्त्वमिहागतः प्राकृतं त्वमदृष्ट्वा मां बालवत्परिपालयेति पठेत्
अथ सर्वासां वास्तुमंडलदेवतानां बलिदानप्रकार उच्यते शिखिने १ पर्जन्याय २

जयंतायपीतध्वजंपैष्टसहितंकूर्मंकुलिशायपंचरत्नसहितंपिष्टं ३ सूर्यायधूम्रवर्णंवितानंपिष्टशक्तिकान्वि
तंरक्तचंदनयुतंपायसं ५ सत्यायघृतयुक्तान्नगोधूमान् ६ भृशाय ७ आकाशायशष्कुली
८ सक्तुंवायवे ९ लाजाःपूष्णे १० चणकौदनंवितथाय ११ मधुयुक्तमन्नंगृहक्षताय १२ पिशितौदनंयमा
य १३ गंधयुक्तमोदनंगंधर्वाय १४ मेषजिह्वांभृंगराजाय १५ यवान्नंमृगाय १६ तिलयुक्तमोदनंपितृभ्यः १७
पैष्टकृष्णवल्लिंचदौवारिकाय १८ अपूपान्सुग्रीवाय १९ पायसंपुष्पदंताय २० कुशयुक्तंरक्तवर्णपद्मंव
र्णवाल्लंवरुणाय २१ सुरासवंचासुराय २२ घृतोदनंशोषाय २३ यवान्नंपापाय २४ घृतयुक्तान्मोदकान्
रोगाय २५ नागकेशरंचाहये २६ भक्ष्यंमुख्याय २७ मुद्गौदनंभल्लाटाय २८ मधुयुक्तंपायसंसोमाय २९

शालितंडुलयुतंपैष्टंनागाय ३० बिल्वपक्वामादितये ३१ पूरिकांदितये ३२ क्षीरमब्धयः ३३ मरिचकृशोदकयुक्ता
न्नमोदकान् सवित्राय ३४ घृतचंदनंजयाय ३५ बिल्वफलानिरुद्राय ३६ शर्करासहितंपायसमर्यम्णे ३७
रक्तपुष्पाणिगुडश्चसवित्रे ३८ रक्तचंदनसहितंपायसंविवस्वते ३९ आज्यसहितंहारिद्रोदनंविबुधाय ४०
घृतोदनंमित्राय ४१ अपक्वंपक्वंचमांसंराजयक्ष्मणे ४२ मांससहितंकूश्मांडंपृथ्वीधराय ४३ दधिआपवत्
साय ४४ तिलाक्षतान्हविर्विविधानिभक्ष्यभोज्यानिब्रह्मणे ४५ ततोयथाशक्त्यासर्वेभ्यःकांचनं आचार्या
यब्रह्मणेचगान्दद्यात् ततईशानादिकोणक्रमेणमांसोदनंघृतसहितंलोहसहितंचचरक्यैदद्यात् १
मांसोदनसहितंहारिद्रोदनंसरुधिरंविडाल्यै०२ दध्योदनंमत्स्यखंडयुतंपूतनायै०३ मत्स्यमांससुरासवं

पायसयुक्तं पापराक्षस्यै० ४ ततः पूर्वादिदिक्षु मांसोदनं स्कंदाय० १ तिलोदकसहितान्नपूपानर्यम्
णो० २ सरुधिरं मांसं जृंभकाय० ३ रक्तयुक्तमन्नं पिलिपिच्छाय० ततो भक्ष्यभोज्यैर्दिक्पालेभ्यो बलिं
दद्यात् निरुक्तविशेषबल्यसंभवे तु सर्वासामपि वास्तुमंडलदेवतानामाज्ययुक्तपायसेन बलिं द
द्यात् तस्याप्यभावे कुशपुष्पधूताक्षतैरपि सर्वेभ्यो बलिन्दद्यात् ततश्चाचार्यः स्वकुण्डमाग
त्याज्यभागान्तं पूर्वप्रदर्शितं कर्म कृत्वा अग्निस्थापनानन्तरं पूर्वमेवोक्त चरुणा वास्तोष्पत इति
मंत्रेणाष्टोत्तरशतं जुहुयात् वास्तोष्पत इति मंत्रस्य वशिष्ठ ऋषिस्त्रिष्टुप् छंदः वास्तुदेवता वास्तुहो
मे विनियोगः वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः यत्त्वेमहे प्रति तन्नो जुष

स्वशन्नो भवद्विपदे शंचतुष्पदे        मधुसर्पिर्भ्यां यवैः कृष्णतिलैः क्षीरवृक्षसमिद्भिर्घृतसमभ्यक्ता
भिस्तदभावेऽपामार्गकुशशमीदूर्वाभिरष्टोत्तरशतमष्टाविंशतिसंख्यं वा प्रतिद्रव्यं हुत्वा वास्तोष्पते इ
ति चतसृभिर्वास्तोष्पते ध्रुवास्थूणामित्यनेन च पंचबिल्वफलानि तद्विजाभिर्वा मंत्रपंचकेन जुहुयात्
तथाहि वास्तोष्पत इति मंत्रस्य वसिष्ठ ऋषिः तिसृणां वास्तोष्पतिर्ऋषिस्त्रिष्टुभोंत्या गायत्री छंदः वा
स्तुर्देवता होमे विनियोगः ॥ वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो भवानः यत्त्वेमहे
प्रतितन्नो जुषस्व शन्नो भवद्विपदे शंचतुष्पदे स्वाहा इदं वास्तोष्पतये १ वास्तोष्पते प्रतरणो नः
एधि गयस्फानो गोभिरश्वेभिरिन्द्रो अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रतितन्नो जुषस्व शन्नो

भवाद्विपदेशञ्चतुष्पदेस्वाहा इदंवास्तोष्पतये २ वास्तोष्पते श ग्मयासंसदातेसक्षीमहिरण्व
यागातुमत्या पाहिक्षेमउतयोगेवरन्नोयूयम्पातःस्वस्तिभिःसदानःस्वाहा इदंवास्तोष्पतये ३
अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् सखासुशेवएधिनःस्वाहा इदंवास्तोष्पतये ४ वास्तो
ष्पतेध्रुवास्थूणामित्यस्यवास्तोष्पतिऋषिर्बृहतीछन्दोवास्तुदेवताहोमेविनियोगः वास्तोष्पतेध्रुवास्थूणां
सत्रंसोऽम्यानां द्रप्सोभेत्तापुरांशश्वतीनामिन्द्रोमुनीनांसखास्वाहा इदंवास्तोष्पतये ५ ततः
प्रणवाद्यैःस्वाहान्तैःशिख्यादिवास्तुदेवतानाममंत्रैर्यथाशक्तितिलैःप्रतिदैवतमष्टोत्तरशतमष्टा
विंशतिमष्टसंख्ययावाहुत्वावास्तुमध्येसंधानायाधोरम्भमधोरसंब्रवश्यामः मंत्रेणानिलैरष्टोत्तर

शतंकृत्वादिग्बलिंदद्यात् तथाहि ॐ शिखिनेनमःस्वाहा १ ॐ पर्जन्यायनमःस्वाहा २ ॐ जयं-
तायनमःस्वाहा ३ ॐ कुलिशायनमःस्वाहा ४ ॐ सूर्यायनमःस्वाहा ५ ॐ सत्यायनमःस्वाहा ६ ॐ भृ-
शायनमःस्वाहा ७ ॐ आकाशायन० ८ ॐ वायवेन० ९ ॐ पूष्णेन० १० ॐ वितथायस्वाहा ११
गृहक्षेत्रायस्वाहा १२ ॐ यमायस्वाहा १३ गन्धर्वायस्वाहा १४ भृंगराजायस्वाहा १५ मृगायस्वाहा
१६ पितृभ्यःस्वाहा १७ दौवारिकायस्वाहा १८ सुग्रीवायस्वाहा १९ पुष्पदंतायस्वाहा २० वरुणाय
स्वाहा २१ असुरायस्वाहा २२ शोषायस्वाहा २३ पापायस्वाहा २४ रोगायस्वाहा २५ अहयेस्वाहा २६
मुख्यायस्वाहा २७ भल्लाटायस्वाहा २८ सोमायस्वाहा २९ नागायस्वाहा ३० अदितयेस्वाहा ३१

दितयेस्वाहा ३२ अर्घ्यांनमःस्वाहा ३३ सावित्र्यायस्वाहा ३४ जयायस्वाहा ३५ रुद्रायस्वाहा ३६ अ
र्यमणेस्वाहा ३७ सवित्रेस्वाहा ३८ विवस्वतेस्वाहा ३९ विबुधायस्वाहा ४० मित्रायस्वाहा ४१ रा
जयक्ष्मणेस्वाहा ४२ पृथ्वीधरायस्वाहा ४३ आपवत्सायस्वाहा ४४ ब्रह्मणेस्वाहा ४५ चरक्यै
नमःस्वाहा १ विडाल्यैस्वाहा २ विदार्य्यैस्वाहा ३ पूतनायैस्वाहा ४ पापराक्षस्यैस्वाहा ५ उग्रसेनाय
स्वाहा ६ इंद्रायस्वाहा ७ महाकालायस्वाहा ८ जृंभकायस्वाहा ९ पिलिपिच्छायस्वाहा १० इंद्राय
स्वाहा ११ अग्नयेस्वाहा २ यमायस्वाहा ३ निर्ऋतयेस्वाहा ४ वरुणायस्वाहा ५ वायवेस्वाहा ६ सो
मायस्वाहा ७ कुबेरायस्वाहा ८ ब्रह्मणेस्वाहा ९ अनंतायस्वाहा १० इतिवास्तुमंडलमध्यवर्त्ति

नां देवतानां होमः अथाघोरमंत्रेण वास्तुमध्यसंधाय तिलैरष्टोत्तरशतं जुहुयात् अघोरेभ्यो ऽ
थघोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्वसर्वेभ्यो नमस्ते ऽअस्तु रुद्ररूपेभ्यः स्वाहा अथ दिक्पाल
बलिदानम् पूर्वे इंद्राय इमं दधिमाषभक्तं बलिं समर्पयामीत्यादिरीत्या वाक्यमूहनीयम् ततः
कृणुष्वपाजः पुनंतु मेति मंत्रद्वयाभ्यां त्रिसूत्र्या मंडपं संवेष्ट्य परितो जलदुग्धयोः पृथग्धाराभि-
र्धारं दद्यात् तद्यथा कृणुष्वपाजः प्रसितिन्न पृथ्वीं याहि राजेवामवाँ२ ॥ ऽइभेन ॥ तृष्वीम
नुप्रसितिं द्रूणानोस्तासि विध्य रक्षसस्तपिष्ठैः ॥ १३९ ॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ १९।३९ ॥ तदनंतरं मंडलपीठवा पूजितानां हैमी वास्तुम

निमांदधिदूर्वासर्षपधान्यशैवालगंधाक्षतायुतैः पक्वमृद्भांडे संस्थाप्य तं भांडं पिधाय चतुःषष्टिधा-
भाजितनवधावाभाजितप्रासादाग्नेयकोणे पदाद्बुत्तरे आकाशपदे जानुमात्रं गर्त्तं कृत्वा जलेनापूर्य
गंधपुष्पाणि गर्ते प्रक्षिप्य निरुक्तमृण्मयभांडं तत्र निधाय गर्त्तं तैरेव मृदा पूरयेत् मृदश्चाधिक्ये सु-
भम् ॥ ॥इति वास्तुमंडलपूजाप्रकारः॥ ॥अथ सूर्यादीनां नवग्रहाणामावाहनं ॥ रक्तपु-
ष्पाक्षतैः मध्ये वर्तुलाकारे चक्रे रविमावाहयेत् ॥ ॐ दिवाकरं सहस्रांशुं सुरासुरनमस्कृतं ॥ लोक-
नाथं विश्वनेत्रं सूर्यमावाहयाम्यहं ॥ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यं च ॥ हिर-
ण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ३३ । ४३ ॥ ॐ भूर्भुवः स्वः कलिंगदेशोद्भव काश्यप

गोत्रसूर्यइहागच्छइहतिष्ठ॥ आग्नेयामर्द्धचंद्राकारेचक्रेश्वेतपुष्पाक्षतैश्चंद्रमावाहयेत्॥ हिम
रश्मिंनिशानाथंतारकाभिःसमन्वितं॥ ओषधीनांतुराजानंसोममावाहयाम्यहं॥ ॐइमन्देवाः
असपत्नꣳसुवद्ध्वम्महतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येन्द्रियाय इममुष्य
पुत्रममुष्यैपुत्रमस्यैविशएषवोमीराजासोमोस्माकंब्राह्मणानाꣳराजा॥१०।२०॥ ॐभूर्भुवः
स्वः यमुनातीरदेशोद्भवआत्रेयसगोत्रचंद्रइहागत्यइहतिष्ठ॥ याम्यांत्रिकोणेचक्रेरक्तपुष्पाक्षतैः
भौममावाहयेत्॥ धरणीगर्भसंभूतंलोहितांगरुवर्चसम्॥ कुमारंक्रूरकर्माणंभौममावाहयाम्य
हम्॥ ॐअग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्याअयम्॥ अपाꣳरेताꣳसिजिन्वति॥३।१२॥

ॐ भूर्भुवः स्वः अवंतिदेशोद्भव भारद्वाजगोत्र भौम इहागच्छ इह तिष्ठ ॥ ईशान्यां पीतपुष्पाक्षतैर्बुध
मावाहयाम्यहं ॥ बुधं बुद्धिप्रदातारं सोमवंशविवर्द्धनम् ॥ यजमानहितार्थाय बुधमावाहयाम्यहं ॥
ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳ सृजेथामयं च ॥ अस्मिन्त्सधस्थे ऽ अध्युत्तर
स्मिन्विश्वेदेवा यजमानश्च सीदत ॥ १५ ॥ ५४ ॥ ॐ भूर्भुवः स्वः मगधदेशोद्भव आत्रेयगोत्र बुध इ
हागच्छ इह तिष्ठ ॥ उत्तरे पीतपुष्पाक्षतैः गुरुमावाहयेत् ॥ बुद्धिश्रेष्ठांगिरापुत्रो देवानां यो गुरुः स्मृ
तः ॥ तमिंद्रमंत्रिणं भक्त्या गुरुमावाहयाम्यहं ॥ बृहस्पते ऽ अति यदर्यो ऽ अर्हाद् द्युमद्विभाति क्रतु
मज्जनेषु ॥ यद्दीदयच्छवस ऽ ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ उपयामगृहीतोसि बृह

स्पतयेत्वैषतेयोनिर्बृहस्पतयेत्वा २६।३॥ ॐ भूर्भुवःस्वः सिंधुदेशोद्भव आंगिरसगोत्र बृहस्पते इहा

गच्छ इह तिष्ठ॥ पूर्वे श्वेतपुष्पाक्षतैः भृगुमावाहयेत्॥ प्रविष्टे जठरे शंभोर्निःसृतः पुनरेव यः॥ तं सुरारि

॥३५॥ गुरुं भक्त्या शुक्रमावाहयाम्यहं॥ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजाप

तिः॥ ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु १९।३५॥ ॐ भू

र्भुवःस्वः भोजकटदेशोद्भव भार्गवगोत्र शुक्र इहागच्छ इह तिष्ठ॥ पश्चिमे कृष्णपुष्पाक्षतैः शनिमावा

हयेत्॥ धर्मराजानुजं देवं भिन्नांजनसमुद्भवम्॥ छायामार्तंडसंभूतं शनिमावाहयाम्यहं॥ ॐ शन्नो ॥३५

देवीरभिष्टय आपो भवन्तु पीतये॥ शंयोरभिस्रवन्तु नः॥ ३६।१२ ॐ भूर्भुवःस्वः सौराष्ट्रदेशोद्भव

काश्यपगोत्रशने इहागच्छ इह तिष्ठ ॥ नैर्ऋत्यां धूम्रपुष्पाक्षतैः राहुमावाहयेत् ॥ चक्रेण छिन्नमू-
र्द्धानं विप्रयुनाचनिरीक्षितम् ॥ सैंहिकेयं महाकायं राहुमावाहयाम्यहं ॥ ॐ कयानश्चित्रऽआभुव
दूती सदावृधः सखा ॥ कया शचिष्ठया वृता ॥ ३६।४॥ ॐ भूर्भुवः स्वः स्वराटिनादेशोद्भव पैठीनसि
गोत्र राहो इहागच्छ इह तिष्ठ ॥ वायव्यां धूम्रपुष्पाक्षतैः केतुमावाहयेत् ॥ अंजनाभं महारौद्रं व
हुरूपमहाग्रहम् ॥ महाकायं क्रूरकर्माणं केतुमावाहयाम्यहं ॥ ॐ केतुं कृण्वन्नकेतवे पेशो मर्या
ऽअपेशसे ॥ समुषद्भिरजायथाः ॥२९।३७॥ ॐ भूर्भुवः स्वः अंतर्वेदिसमुद्भव पैठीनसिगोत्र के
तु इहागच्छ इह तिष्ठ ॥९॥ ॥ अथाधिदेवतानामावाहनम् ॥ मध्ये रविदक्षिणपार्श्वे श्वेतपुष्पा

क्षतैः रुद्रमावाहयेत् ॥ ॐ त्र्यंबकं यजामहे सुगन्धिं पुष्टिवर्धनं ॥ उर्वारुकमिव बंधनान्मृत्योर्मु
क्षीय मामृतात् ॥ त्र्यम्बकं यजामहे सुगन्धिम्पतिवेदनम् ॥ उर्वारुकमिव बन्धनादितो मुक्षीय
मामुतः ३।६०॥ शिव इहागच्छ इह तिष्ठ ॥ आग्नेय्यां चंद्रस्य दक्षिणे रक्तपुष्पाक्षतैः उमामावाहयेत् ॥
श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुं
म ऽइषाण सर्वलोकम्म ऽइषाण ॥ ३१।२२॥ उमे इहागच्छ इह तिष्ठ याम्यां भौमस्य दक्षिणे पीतपु
ष्पाक्षतैः स्कंदमावाहयेत् ॥ ॐ यदक्रन्दः प्रथमञ्जायमान ऽउद्यन्त्समुद्रादुत वा पुरीषात् ॥ श्ये
नस्य पक्षा हरिणस्य बाहू ऽउपस्तुत्यं महिजातन्ते ऽअर्वन् ॥ २९।१२॥ स्कन्द इहागच्छ इह तिष्ठ ॥ ई

शान्यांबुधदक्षिणेपीतपुष्पाक्षतैः विष्णुमावाहयेत् ॥ ॐ विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः
स्यूरसि विष्णोर्ध्रुवोसि। वैष्णवमसि विष्णवे त्वा ५।२१ ॥ विष्णो इहागच्छ इह तिष्ठ ॥ उत्तरे गुरुदक्षिणे श्वे
तपुष्पाक्षतैः ब्रह्माणमावाहयेत् ॥ ॐ ब्रह्म यज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन ऽ आवः ॥ स
बुध्न्या ऽ उपमा ऽ अस्य विष्ठाः सतश्च योनिमसतश्च विवः १३।३।५ ॥ ब्रह्मन् इहागच्छ इह तिष्ठ ॥ पूर्वे शु
क्र दक्षिणे पीतपुष्पाक्षतैः इंद्रमावाहयेत् ॥ ॐ त्रातारमिंद्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूर
मिन्द्रम् ॥ ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः २०।५० ॥ इन्द्र इहागच्छ इह तिष्ठ
॥ पश्चिमे शनिदक्षिणे कृष्णपुष्पाक्षतैः यममावाहयेत् ॥ ॐ यमाय त्वा मखाय त्वा सूर्य्यस्य त्वा तप

से ॥ देवस्त्वा सविता मद्ध्वानक्तु पृथिव्याः संꣳस्पृशस्प्याहि । अर्च्चिरसि शोचिरसि तपोसि ३७।११ यम इहागच्छ इह तिष्ठ ॥ नैर्ऋत्यां राहुं दक्षिणे धूम्रपुष्पाक्षतैः कालमावाहयेत् ॥ ॐ कार्षिरसि समुद्रस्य त्वाक्षित्या उन्नयामि ॥ समापो अद्भिरग्मत समोषधीभिरोषधीः ॥६।२८॥ काल इहागच्छ इह तिष्ठ ॥ वायव्यां केतुं दक्षिणे रक्तपुष्पाक्षतैः चित्रगुप्तमावाहयेत् ॥ ॐ चित्रावसो स्वस्ति ते पारमशीय ३।१८ ।९॥ चित्रगुप्त इहागच्छ इह तिष्ठ ॥ अथ प्रत्यधिदेवतानामावाहनं ॥ मध्ये सूर्यस्य वामे रक्तपुष्पाक्षतैः अग्निमावाहयेत् ॥ ॐ अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे ॥ देवाँ२॥ आसादयादिह २२।१७ अग्ने इहागच्छ इह तिष्ठ ॥ आग्नेय्यां चन्द्रस्य वामपार्श्वे श्वेतपुष्पाक्षतैः ॥ जलमावाहयेत् ॥ ॐ अप्स

ग्मे सधिष्व सौषधीरनुरुध्यसे । गर्भे सञ्जायसे पुनः ॥ १२।३६।२१ आप इहागच्छ इह तिष्ठ ॥ दक्षि-
णे भौम वामपार्श्वे रक्तपुष्पाक्षतैः भूमिमावाहयेत् ॥ ॐ स्योना पृथिवी नो भवानृक्षरा निवेशनी ॥ य
च्छा नः शर्म्म सप्रथाः ३६।१३।३ ॥ पृथिवी इहागच्छ इह तिष्ठ ॥ ईशान्ये बुधस्य वामे पीतपुष्पाक्षतैः विष्णु
मावाहयेत् ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥ ५।१५।४ ॥ विष्णो
इहागच्छ इह तिष्ठ ॥ उत्तरे गुरुवामे पीतपुष्पाक्षतैः इन्द्रमावाहयेत् ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्र
ꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् ॥ ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः २०।५०
॥ ५ ॥ इन्द्र इहागच्छ इह तिष्ठ ॥ पूर्वे शुक्रस्य वामे पीतपुष्पाक्षतैः इन्द्राणीमावाहयेत् ॥ ॐ आदित्यै रा

रनी सीन्द्राण्या ऽउष्णीषः ॥ पूषासिधर्म्मायदीष्वा ॥३८।३।६ इंद्राणिइहागच्छइहतिष्ठ पश्चिमेशा
नैर्ऋमेश्वेतपुष्पाक्षतैः प्रजापतिमावाहयेत् ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबे
भूव ॥ यत्कामास्तेजुहुमस्तन्नो ऽअस्तुवयंस्यामपतयोरयीणाम् २३।६५।७ ॥ प्रजापतेइहागच्छइहति
ष्ठ ॥ नैर्ऋत्यांराक्षोवामिकृष्णपुष्पाक्षतैः नागमावाहयेत् ॥ ॐ नमोस्तुसर्प्पेभ्यो येकेचपृथिवीमनु ॥
येऽअन्तरिक्षेयेदिविनेभ्यः सर्प्पेभ्योनमः १३।६।८ ॥ अष्टकुलीनागइहागच्छइहतिष्ठ ॥ वायव्यांकेतो
र्वामिश्वेतपुष्पाक्षतैः ब्रह्माणमावाहयेत् ॥ ॐ ब्रह्मयज्ञानम्प्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआ
वः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः १३।३।९ ॥ ब्रह्मनइहागच्छइहतिष्ठ ॥

अथपंचलोकपालानावाहयेत् ॥ नैर्ऋत्यांराहोरुत्तरभागेपीतपुष्पाक्षतैः गणपतिमावाहयेत् ॥ ॐ गु
णानान्त्वागणपतिꣳहवामहे प्रियाणान्त्वाप्रियपतिꣳहवामहे निधीनान्त्वानिधिपतिꣳहवाम
हे वसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् २३।१९।१॥ गणेशइहागच्छइहतिष्ठ ॥ प
श्चिमेशनिरुत्तरेरक्तपुष्पाक्षतैः दुर्गामावाहयेत् ॥ ॐ जातवेदसेसुनवामसोममरातीयतोनिदहाति
वेदः ॥ सनः पर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ २ ॥ दुर्गेइहागच्छइहतिष्ठ ॥ मध्येसूर्य्यो
त्तरेपीतपुष्पाक्षतैः वायुमावाहयेत् ॥ ॐ वातोवामनोवागन्धर्वाः सप्तविꣳशतिः ॥ तेअग्रेश्वमयु
ञ्जँस्तेअस्मिञ्जवमादधुः ९।७।३॥ वायोइहागच्छइहतिष्ठ ॥ पूर्वेशुक्रस्यपूर्वभागेनीलपुष्पाक्षतैः

आकाशमावाहयेत्॥ ॐ घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वा
हा। दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा॥ ६।१९।४॥ आकाश इहागच्छ इह तिष्ठ
॥ नैर्ऋत्यां राहोर्दक्षिणे स्वे तण्डुलाक्षतैः अश्विनावावाहयेत्॥ ॐ या वां कशा मधुमत्यश्विना सूनृता
वती। तया यज्ञं मिमिक्षतम्॥ उपयामगृहीतोस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा ७।११।५॥
अश्विनौ इहागच्छ इह तिष्ठ॥ अथ दशदिक्पालानामावाहनम्॥ पूर्वे॥ ॐ त्रातारमिन्द्रमवितारमिन्द्र
ꣳ हवे हवे सुहवꣳ शूरमिन्द्रम्॥ ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः २०।५०।९॥ इन्द्र इ
हागच्छ इह तिष्ठ॥ आग्नेय्यां॥ ॐ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः॥ यजि

ष्ठो वह्निं तमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् ॥ २१।३।२ ॥ अग्ने इहागच्छ इह तिष्ठ ॥ याम्ये ॥ ॐ यमाय त्वा मखाय त्वा सूर्य्यस्य त्वा तपसे ॥ देवस्त्वा सविता मध्वानक्तु पृथिव्याः सꣳ स्पृशस्पाहि ॥ अर्चिरसि शोचिरसि तपोसि ॥ ३७।११।३ ॥ ॐ यम इहागच्छ इह तिष्ठ ॥ नैर्ऋत्यां ॥ ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ १२।६२।४ निर्ऋते इहागच्छ इह तिष्ठ ॥ पश्चिमे ॥ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऽऋतसदनमसि वरुणस्य ऽऋतसदनमासीद ॥ ४।३६।५ ॥ वरुण इहागच्छ इह तिष्ठ ॥ वायव्ये ॥ आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिः

रूपेयाहियुजम्॥ वायोअत्रास्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः॥२७।२८।६॥ वायोइहा
गच्छइहतिष्ठ॥उत्तरे॥ ॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः॥प्रजावन्तःसचेमहि॥३।५६।७॥
कुबेरइहागच्छइहतिष्ठ॥ईशान्यां॥ ॐतमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहे
वयम्॥पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये॥२५।१८॥ ईशानइहागच्छइह
तिष्ठ॥ईशानपूर्वयोर्मध्येब्रह्मन्॥ ॐ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः॥यः
शꣳसतेस्तुवतेधायिपज्रइन्द्रज्येष्ठाअस्माँ२॥अवन्तुदेवाः॥३३।५०।९॥ ब्रह्मन्इहागच्छइ
हतिष्ठ॥नैर्ऋत्यवरुणयोर्मध्येअनन्त॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी॥यच्छानःशर्म

सप्रथाः ॥३८।१।१०॥ अनंतइहागच्छइहतिष्ठ ॥ अथमंडलमध्यस्थापितानांपितामहादीनामावा
ह्वनम् ॥ ॐ ब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्या उपमा अस्यविष्ठाः
सतश्चयोनिमसतश्चविवः ॥१३।३ मितिब्रह्माणम् ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्द्धनम् ॥ उ
र्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ त्र्यंबकंयजामहेसुगंधिंपतिवेदनम् ॥ उर्वारुकमिवब
न्धनादितोमुक्षीयमामुतः ॥३।६०॥ इतिशिवंइहागच्छइहतिष्ठ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेप
दम् ॥ समूढमस्यपांसुरे स्वाहा ॥५।१५॥ इतिविष्णुइहागच्छइहतिष्ठ ॥ ॐ गणानांत्वागणपतिं हवा
महे प्रियाणांत्वाप्रियपतिं हवामहेनिधीनांत्वानिधिपतिं हवामहेवसोमम ॥ आहमजानिग

र्भधमा त्वमजासि गर्भधम् २३।१९॥ गणपतिध्यावाहनं इहागच्छ इह तिष्ठ॥ श्रीश्च ते लक्ष्मीश्च
पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्॥ इष्णन्निषाणामुं म इषाण सर्वलोकं म
इषाण॥ ३१।२२॥ इति लक्ष्मी इहागच्छ इह तिष्ठ॥ पंच नद्यः सरस्वतीमपि यन्ति सस्रोतसः॥ सरस्व
ती तु पंचधा सो देशेऽभवत्सरित् ३४।११॥ इति सरस्वतीं इहागच्छ इह तिष्ठ॥ ॐ अम्बे अम्बिकेऽम्बालि
के न मा नयति कश्चन॥ ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् २३।१८॥ इति दुर्गाम् ॥इहागच्छ
इह तिष्ठ॥ ॐ नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुर एतारमग्नेः॥ एमेनमवृधन्नमृता अमर्त्यं
वैश्वानरं क्षैत्रजित्याय देवाः ३३।६०॥ इति क्षेत्रपालम् इहागच्छ इह तिष्ठ॥ ॐ भूताय त्वा नारातये स्व

रश्मिभिक्रव्येषन्तु ऽ॰ इन्द्राग्नी स्य्र्याः पृथिव्या भुवोन्तरिक्षुमन्त्यैभिः पृथिव्यास्सुनाभौसादयाम्यदि
त्याऽउपस्थेग्नेहव्य ऽ॰रक्ष १।१२ ॥ इति भूतानां इहागच्छ इहतिष्ठ ॥ ॐ विश्वकर्मन्हविषा वर्द्धनेन त्रा
तारमिन्द्रमकृणोरवध्यम् ॥ तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ॥१७।२४॥ उपयाम
गृहीतोसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मणे ८।४५ ॥ इति विश्वकर्माण
म इहागच्छ इहतिष्ठ ॥ अन्येषामपि मंडलमध्यस्थापितानां सर्वेषामावाहनं कुर्यात् ॥ अन्नयेस्थापिता
देवास्ते सर्वे इहागच्छंतु इहतिष्ठंतु ॥ तत्र मंत्र ॥ ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनो
त्वरिष्टं यज्ञ ऽ॰ समिमं दधातु ॥ विश्वे देवास ऽइह मादयन्तामो३म्प्रतिष्ठ ॥२।१३॥ इति समस्तदेवा

नांप्रतिष्ठास्थापनंच ॥ ॥ अथपूजा ॥ ॥ अद्येहसकलशुभप्राप्तिकामः सूर्यादिनवग्रहाणामधि
देवतानांप्रत्यधिदेवतानांपंचलोकपालानांदशदिक्पालानांसक्षेत्रपालगणेशवरुणादीनांपूजनम
हंकरिष्ये ॥ इतिप्रतिज्ञांकृत्वा ॥ पश्चात्पुष्पाक्षतचंदनधूपदीपनैवेद्यादिभिः यस्ययग्रहस्ययद्वर्ण
स्तद्वर्णानिवस्त्राणिकुसुमानि अनुलेपनानिदातव्यानिशेषेभ्यः श्वेतानिभूयः सुरभिश्चसर्वेभ्योदा
तव्यः आकृष्णेइत्यादिपूर्वोक्तंसूर्यादीन्सर्वान्मंडलमध्यस्थापितान्देवान्पूजयेत् ॥ नैवेद्यं ॥ आ
दित्यायगुडोदनंचंद्रमसेघृतपायसंभौमायगुडान्नंबुधायक्षीरोदनंगुरवेदध्योदनंशुक्रायघृतोद
नंशनैश्चरायतिलपिष्टंकृशरान्नंवा आममांसंराहवेचित्रौदनंकेतुभ्यः एवंनवग्रहान्पूजयित्वा

थिदेवतादीन्संपूजयेत् सूर्यादिनवग्रहेभ्योनमः रुद्राद्यधिदेवताभ्योनमः अग्न्यादिप्रत्यधिदेवता
भ्योनमः विनायकादिपंचलोकपालेभ्योनमः इंद्रादिदशदिक्पालेभ्योनमः हस्तेनजलमादायअनेन
पंचोपचारपूजनेननवग्रहाःप्रीयंताम् इतिरीत्याग्रहान्पूजयित्वा ईशानकोणेअक्षतपुंजोपरि
आजिघ्रकलशमित्यादिमंत्रैर्यथाविधिनाकलशंसंस्थाप्य तत्रतीर्थान्यावाह्यतत्रवरुणंपूजयेत्
ततऋत्विजःप्रतिग्रहदेवतांग्रहसमिच्चर्वाज्यैरष्टोत्तरसहस्राष्टोत्तरशताष्टाविंशतिअष्टान्यतमसं
ख्ययाकुंडेषुविभज्ययथाशक्तिहुत्वाबलिंदत्वापूर्णाहुतिंजुहुयुः अत्रमातृकाहोमंकृत्वाअनंतरंस
परिवारदेवताग्रहहोमइतिमतंमान्यानामतस्तद्रीत्याहोमःप्रदर्श्यते गणानांत्वेतिमंत्रेणगणपत

येनमः स्वाहा १ अथगौर्य्यादिषोडशमातृकाहोमः आयङ्गौःपृश्निरक्रमीदसदन्मातरम्पुरः॥पितरं
चप्प्रयन्त्स्वः गौर्य्यैनमःस्वाहा १॥हिरण्यरूपाःउषसोव्विरोकः उभाविन्द्रा उदिथः॥सूर्य्यश्च॥
आरोहणम्वरुणमित्रगर्त्तन्ततश्चक्षाथामदितिन्दितिञ्चमित्रोसिव्वरुणोसि १०।१९॥पद्मायैनमः
स्वाहा २ कदाचनस्तरीरसिनेन्द्रस्यश्चसिदाशुषे॥उपोपेन्नुमघवन्भूयःइन्नुतेदानन्देवस्यपृच्यतः
आदित्येभ्यस्त्वा ८।२॥शच्यैनमःस्वाहा३ मेधाम्मेवरुणोददातुमेधामग्निःप्रजापतिः॥मेधामिन्द्र
श्चवायुश्चमेधान्धातादददातुमेस्वाहा ३२।१६॥मेधायैनमःस्वाहा ४ ॐ तत्सवितुर्व्वरेण्यम्भर्गोदेव
स्यधीमहि॥धियोयोनःप्रचोदयात्॥सावित्र्यैनमःस्वाहा ५ ॥विज्यन्धनुःकपर्दिनोविशल्यो

बाणवाँ २॥ उता अनेशन्नस्यया १ इषव १ आभुरस्यनिषङ्गधिः ॥ विजयायैनमःस्वाहा ॥६॥
यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि १६।
२ जयायैनमःस्वाहा ॥७॥ देवानांभद्रासुमतिर्ऋजूयतान्देवानां छं रातिरभिनोनिवर्त्तताम् ॥
देवानां छं सख्यमुपसेदिमावयन्देवान १ आयुः प्रतिरन्तुजीवसे २५ । १५ देवसेनायैनमःस्वाहा
८॥ पितृभ्यःस्वधायिभ्यःस्वधानमः पितामहेभ्यःस्वधायिभ्यःस्वधानमः प्रपितामहेभ्यःस्वधा
यिभ्यःस्वधानमः अक्षन्पितरोमीमदन्तपितरोतीतृपन्तपितरःपितरःशुन्धध्वम् १९ । ३६॥
स्वधायनमःस्वाहा ९ ॥ स्वाहायज्ञंमनसःस्वाहोरोरन्तरिक्षात्स्वाहा द्यावापृथिवीभ्यां छं स्वा

ह्वाद्यातादारभेस्वाहा ४।६॥स्वाहायैनमःस्वाहा १०॥आपोऽअस्मान्मातरःशुन्धयन्तुघृतेननो
घृतप्वःपुनन्तु॥विश्वꣳहिरिप्रम्प्रवहन्तिदेवीरुदिदाभ्यःशुचिरापूतएमि॥दीक्षान्तपसोस्तनू
रसिताम्त्वाशिवाꣳशग्मापरिदधेभद्रंवर्णम्पुष्यन् ४।२॥मालेनमःस्वाहा ११॥भवतन्नःस
मनसौसचेतसावरेपसौ मायज्ञꣳहिꣳसिष्टम्मायज्ञपतिञ्जातवेदसौशिवौभवतमद्यनः ५
।३॥लोकमात्रेनमःस्वाहा १२॥यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृतम्प्रजासु यस्मा
न्नऋतेकिञ्चनकर्म्मक्रियतेतन्मेमनःशिवसङ्कल्पमस्तु ३४।३ धृत्यैनमःस्वाहा १३॥तत्वा
यामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः॥अहेडमानोवरुणेहबोध्युरुशꣳस मा

मानन्त्र्यायुः प्रमोषीः २१।२॥ पुष्टयैनमः स्वाहा १४॥ बृहस्पते परिदीया रथेन रक्षोहामित्राँ३॥ अपबाधमानः॥ प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्॥ तुष्टयैनमः स्वाहा॥१५॥ प्राणाय स्वाहा। अपानाय स्वाहा। व्यानाय स्वाहा॥ अम्बे अम्बिके अम्बालिके न मानयति कश्चन ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्॥ २३।१८ आत्मनः कुलदेव्यैनमः स्वाहा १६॥ गौर्यादि षोडशमातृभ्यो न्यूनातिरिक्तं यत्कृतं तत्सर्वं ब्राह्मणानां प्रसादात्सर्वं परिपूर्णमस्तु अनेन होमेन श्रीगणपतिसहितगौर्यादिषोडशमातरः सुप्रीताः सत्यो वरदा भवन्तु॥ ॥इति षोडशमातृकाहोमः॥ ॥अथ वसोर्धाराहोमः॥ ॥ॐ वसोः पवित्रमसि शतधारं वसोः पवित्र

मसिस्सहस्त्रधारम् ॥ देवस्त्वासविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः स्वाहा
इदं वसोर्धाराभ्यः इति वसोर्धाराहोमः ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनी-
स्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद ४।
३६ ॥ कलशस्थवरुणाय नमः स्वाहा ॥ ॥ अथ नवग्रहहोमः ॥ प्रथमं समिद्धोमं कुर्यात् ॥ अर्कः
पलाशः खदिरः अपामार्गश्च पिप्पलः ॥ उदुंबरः समी दूर्वा कुशाश्च समिधः क्रमात् ॥ अर्को ना
शयते व्याधिं पालाशो सर्वकामद ॥ खादिरी चार्थलाभाय अपामार्ग बहुप्रजा ॥ अश्वत्थी च शु
भं दद्यात् नंदद्यादुदुंबरी ॥ शमी शमयते पापं दूर्वा मंगलवर्द्धिनी ॥ कुशास्तु सिकराः प्रोक्ता इत्येताः

समिधोनव ॥ अथसूर्यायआकृष्णेनेतिमंत्रेणार्कंजुहुयात् एवमेवपूर्वश्लोकोक्तक्रमेणतत्त-
त्समिधस्तत्तन्मंत्रैःऽस्मिन्ग्रहवेदिपूजनसमयेनिरुक्तैश्चंद्रादिग्रहेभ्योपिजुहुयात् ॥ प्रतिमंत्रांते
स्वाहापदप्रक्षेपः कर्त्तव्यः अनंतरमिदंसूर्यायनममेतित्यागवाक्यमुच्चारणीयम् ॥ शाकल्यसहिताः
समिधएवहोतव्याः नकेवलंसमिधएवहोतव्याः ॥ घृताक्ताएवसमिधोहोतव्याइत्यपिकेचिद्व
दंति ॥ ग्रहहोमांतेहस्तेनजलमादायानेनयथाविधिसंपादितेनहोमेन सूर्यादिनवग्रहाः सुप्रीताः
संतोवरदाभवंत्वितिपठेत् ॥ ततोयजमानमूर्द्धाभिषेकंकुर्यात् ॥ यथाबाणप्रहाराणांकवचंभव
निवारणं ॥ तद्वद्दैवोपघातानांशांतिर्भवतुवारणमित्यनेनमंत्रेणयजमानंत्रिःसकृद्वाभिषिंचे

त॥ शांतिरस्तु पुष्टिरस्तु वृद्धिरस्तु यच्छ्रेयस्तदस्तु भूमौ जलमथ प्रक्षिपेत् यत्पापं रोगं कष्टं दारि
द्र्यं तत्सर्वं प्रणश्यतु पुनः मूर्ध्नि द्विपदेभ्यश्चतुष्पदेभ्यश्च शांतिर्भवतु ॥ ततः पूर्वोक्तप्रकारेण ग्रहा-
धिदेवताप्रत्यधिदेवतादशदिक्पालादिदेवतानामपि पूर्वोक्तैस्तत्तन्मंत्रैर्होमं कुर्यात् ॥ ततस्तन्मं
डलोक्तदेवतानां होमांते सकलहोमांते वाग्निपूजनमपि कर्तव्यम् ॥ तद्यथा ॥ ॐ अग्ने नय सुप
था राये ऽअस्मान्विश्वानि देव वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम ऽउक्तिं
विधेम ॥ एतानि पाद्यार्घ्याचमनीयानि पुनराचमनीयानि अग्नये नमः ॥ एवं गंधादिदानमपि ॥ ॥ इ-
ति ग्रहवेदिकृत्यम् ॥ ॥ अथ चतुःषष्टियोगिनीनामानि प्रणवादिनमोन्तानि लिख्यंते ॥ ॥

ॐजयायैनमः जयां आवाहयामिस्थापयामि ॐविजयायैन० विजयां२स्था०॥ॐअजयायैन०॥अ
जयांस्था०॥३॥ॐअपराजितायैनमः अपराजितांस्था०॥४॥ॐदिव्ययोगिन्यैन०दिव्ययोगिनींस्था०॥५॥ॐम
हायोगिन्यैन०महायोगिनींस्था०॥६॥ॐसिद्धयोगिन्यैन०सिद्धयोगिनींस्था०॥७॥ॐगणेश्वर्यैनमः गणेश्व
रींस्था०॥८॥ॐप्रेताशन्यैनमः प्रेताशनींस्था०॥९॥ॐडाकिन्यैन०डाकिनींस्था०॥१०॥ॐकाल्यैनमः कालीं
स्था०॥११॥ॐकालरात्र्यैनमः कालरात्रींस्था०॥१२॥ॐनिशाचर्यैनमः निशाचरींस्था०॥१३॥ॐटंकारिण्यैनमः टं
कारिणींस्था०॥१४॥ॐरुद्रवेतालिन्यैनमः रुद्रवेतालिनींस्था०॥१५॥ॐहुङ्कारिण्यैनमः हुङ्कारिणींस्था०॥१६॥ॐऊ
र्ध्वकेश्यैनमः ऊर्ध्वकेशिनींस्था०॥१७॥ॐविरूपायैनमः विरूपांस्था० ॥१८॥ॐशुष्कांग्यैनमः शुष्कांगींस्था०॥१९॥

ॐ नरभोजन्यैनमः नरभोनींत्र्या॰ ॥२०॥ ॐ फट्कारिण्यैनमः फट्कारिणींत्र्या॰ ॥२१॥ ॐ वीरभद्रायैनमः वीरभद्रां त्र्या॰ ॥२२॥ ॐ धूम्रायैनमः धूम्रांत्र्या॰ ॥२३॥ ॐ कलहप्रियायैनमः कलहप्रियांत्र्या॰ ॥२४॥ ॐ राक्षस्यैनमः राक्षसीं त्र्या॰ ॥२५॥ ॐ रक्ताक्ष्यैनमः रक्ताक्षींत्र्या॰ ॥२६॥ ॐ विश्वरूपायैनमः विश्वरूपींत्र्या॰ ॥२७॥ ॐ भयंकर्यैनमः भयं करींत्र्या॰ ॥२८॥ ॐ वीरकौमार्यैनमः वीरकौमारींत्र्या॰ ॥२९॥ ॐ चण्डिकायैनमः चंडिकांत्र्या॰ ॥३०॥ ॐ वाराह्यै नमः वाराहींत्र्या॰ ॥३१॥ ॐ मुण्डधारिण्यैनमः मुंडधारिणींत्र्या॰ ॥३२॥ ॐ भैरव्यैनमः भैरवींत्र्या॰ ॥३३॥ ॐ ध्वांक्षिण्यैनमः ध्वांक्षिणींत्र्या॰ ॥३४॥ ॐ धूम्रांग्यैनमः धूम्रांगींत्र्या॰ ॥३५॥ ॐ प्रेतवाहिन्यैनमः प्रेतवाहिनींत्र्या॰ ॥ ३६॥ ॐ खड्गिन्यैनमः खड्गिनींत्र्या॰ ॥३७॥ ॐ दीर्घलंबोष्ठ्यैनमः दीर्घलंबोष्ठींत्र्या॰ ॥३८॥ ॐ मालिन्यैनमः मालिनीं

श्रा०॥३९॥ॐ मंत्रयोगिन्यैनमः मंत्रयोगिनीं श्रा०॥४०॥ॐ कालिन्यैनमः कालिनीं श्रा०॥४१॥ॐ वीक्षिण्यैनमः वीक्षि
णीं श्रा०॥४२॥ॐ कंकाल्यैनमः कंकालीं श्रा०॥४३॥ॐ भुवनेश्वर्यैनमः भुवनेश्वरीं श्रा०॥४४॥ ॐ घोरटक्यैनमः घो
रटकीं श्रा०॥४५॥ॐ महामार्यैनमः महामारीं श्रा०॥४६॥ॐ यमदूत्यैनमः यमदूतीं श्रा०॥४७॥ॐ करालिन्यैनमः
करालिनीं श्रा०॥४८॥ॐ केशिन्यैनमः केशिनीं श्रा०॥४९॥ॐ मर्दिन्यैनमः मर्दिनीं श्रा०॥५०॥ॐ रोमजंघायैन
मः रोमजंघां श्रा०॥५१॥ॐ निवारिण्यैनमः निवारिणीं श्रा०॥५२॥ॐ विशाल्यैनमः विशालिं श्रा० ॥५३॥ॐ
कार्मुक्यैनमः कार्मुकीं श्रा०॥५४॥ॐ लोलिन्यैनमः लोलिनीं श्रा०॥५५॥ॐ अधोमुख्यैनमः अधोमुखीं श्रा०॥५६॥
ॐ मुंडाग्रधारिण्यैन :मुंडाग्रधारिणीं श्रा०॥५७॥ॐ माध्व्यैनमः माध्वीं श्रा०॥५८॥ॐ काक्षिण्यैनमः काक्षिणीं श्रा

वाहयामि ॥५९॥ ॐ प्रेतरूपिण्यैनमः प्रेतरूपिणींआ० ॥६०॥ ॐ धूर्जटिन्यैनमः धूर्जटिनींआ० ॥६१॥
ॐ घोरिण्यैनमः घोरिणींआ० ॥६२॥ ॐ करालिन्यैनमः करालिनींआ० ॥६३॥ ॐ विषलंधिन्यैनमः विषलंधि
नींआवाहयामिस्थापयामि ॥६४॥ ॥इतियोगिनीनामानि॥ ॥अथक्षेत्रपालीयपीठदेवतानांप्रणवा
दिनमोन्तानिनामानिलिख्यन्ते॥ ॐ अजरायनमः अजरंआवाहयामिस्थापयामि ॥१॥ ॐ इंद्रचोरायन०
इंद्रचोरंआ० ॥२॥ ॐ व्यापकायनमः व्यापकंआ० ॥३॥ ॐ इंद्रमूर्तयेनमः इंद्रमूर्तिंआ० ॥४॥ ॐ उक्षणा
यनमः उक्षणंआ० ॥५॥ ॐ कूष्मांडायनमः कूष्मांडंआ० ॥६॥ ॐ वरुणायनमः वरुणंआ० ॥७॥ ॐ बटु
कायनमः ॥८॥ ॐ विमुक्तायनमः विमुक्तंआ० ॥९॥ ॐ लिप्तकायनमः लिप्तकायंआ० ॥१०॥ ॐ लीलालोका

यनमः लीलालोपं त्र्प्रा०॥११॥ ॐ मेकदंष्ट्रायनमः एकदंष्ट्रंत्र्प्रा०॥१२॥ ॐ मैरावतायनमः मैरावतंत्र्प्रा०॥१३॥
ॐ मोषधीश्वायनमः मोषधींत्र्प्रा०॥१४॥ ॐ बंधनायनमः बंधनंत्र्प्रा०॥१५॥ ॐ दिव्याकरायनमः दिव्याकरं
त्र्प्रा०॥१६॥ ॐ कम्बलायनमः कंबलंत्र्प्रा०॥१७॥ ॐ क्षोभणायनमः क्षोभणंत्र्प्रा०॥१८॥ ॐ गवयवायन०
गवयवंत्र्प्रा०॥१९॥ ॐ कालायनमः कालंत्र्प्रा०॥२०॥ ॐ वल्लधरायनमः वल्लधरंत्र्प्रा०॥२१॥ ॐ मणवेनमः
मणुं त्र्प्रा०॥२२॥ ॐ चंद्रवारणायनमः चंद्रवारणंत्र्प्रा०॥२३॥ ॐ फटाटोपायनमः फटाटोपंत्र्प्रा०॥२४॥ ॐ
जटीलायनमः जटीलंत्र्प्रा०॥२५॥ ॐ मूलवेनमः ऋतवत्र्प्रा०॥२६॥ ॐ घंटेश्वरायनमः घंटेश्वरंत्र्प्रा०॥२७॥
ॐ विकटायैनमः विकटंत्र्प्रा०॥२८॥ ॐ मणिमायनमः मणिमंत्र्प्रा०॥२९॥ ॐ गुणवंधायनमः गुणवंधंत्र्प्रा०

॥३०॥ ॐ डामरायनमः डामरंस्था०॥३१॥ ॐ दंदफणायनमः दंदफणंस्था०॥३२॥ ॐ स्थविलायनमः स्थविलं
स्था०॥३३॥ ॐ दंतुरायनमः दंतुरंस्था०॥३४॥ ॐ धनदायनमः धनदंस्था०॥३५॥ ॐ नागकर्णायनमः नाग
कर्णंस्था०॥३६॥ ॐ फोत्करायनमः फोत्करंस्था०॥३७॥ ॐ महादलायनमः महादलंस्था०॥३८॥ ॐ चीर
कायनमः चीरकंस्था०॥३९॥ ॐ सिंहायनमः सिंहंस्था०॥४०॥ ॐ मृगायनमः मृगंस्था०॥४१॥ ॐ यक्षा
यनमः यक्षंस्था०॥४२॥ ॐ मेघवाहनायनमः मेघवाहनंस्था०॥४३॥ ॐ तीक्ष्णोष्ठायनमः तीक्ष्णोष्ठं-
स्था०॥४४॥ ॐ अनलायनमः अनलंस्था०॥४५॥ ॐ सुकृतवेनमः सुकृतुंस्था०॥४६॥ ॐ पुंधापायन
मः पुंधापंस्था०॥४७॥ ॐ वक्रकायनमः वक्रकंस्था०॥४८॥ ॐ वातायनमः वातंस्था०॥४९॥ ॐ या

पनायनमः स्थापनंस्था०॥५०॥इतिक्षेत्रपालीयपीठदेवतानामानि॥ ॥ ॥श्रीरस्तु॥ ॥

श्रीगणेशायनमः॥ ॥अथसर्वतोभद्रप्रयोगोलिख्यते॥ ॥विलिखेत्सर्वतोभद्रंवेदिकोपरिसुन्दरं॥तिर्यगूर्ध्वगतारेखाःकुर्यादेकोनविंशतिः॥१॥खण्डेन्दुस्त्रिपदःकोणेशृंखलाःपंचकोष्ठकाः॥एकादशपदावल्लीभद्रन्तुनवभिःपदैः॥२॥चतुर्विंशत्पदावापिविशाङ्कैःपरिधिःपदैः॥मध्येषोडशभिःकोष्ठैःपद्ममष्टदलंलिखेत्॥३॥श्वेतेन्दुःशृंखलाकृष्णाच ल्लींनीलेनपूरयेत्॥भद्रारुणासिताबाप्यःपरिधिःपीतवर्णकः॥४॥बाह्यान्तरदलैःश्वेतैः कर्णिकाःपीतवर्णकाः॥खंडेन्दुःशृंखलावापिवल्लीभद्रन्तुपंचकं॥५॥परिध्यावेष्टितंसर्वंबाह्येसत्वंरजस्तमः॥सर्वतो

नसमुद्दिष्टंसर्वतोभद्रमण्डलम् ॥६॥ मध्येब्रह्माष्टासुदिक्षुदेवाःसोमादयःस्मृताः॥ वायुसोम
योर्मध्येवसूनष्टौतुकारयेत् ॥७॥ सोमईशानयोर्मध्येरुद्राएकादशामताः॥ ईशानइन्द्रयोर्म
ध्येआदित्यान्द्वादशानलिखेत् ॥८॥ इन्द्राग्न्योर्मध्येतथात्वाश्विनौपूजयेत्ततः॥ आग्नेययम
योर्मध्येविश्वेदेवाःसपैतृकाः॥९॥ यामनैऋत्ययोर्मध्येसप्तयक्षांश्चकारयेत् ॥ नैऋत्यपश्चि
मयोर्मध्येनागभूतांश्चकारयेत् ॥१०॥ वायुपश्चिमयोर्मध्येगंधर्वाप्सरसःकुरु ॥ ब्रह्मसोमयो
र्मध्येरुद्रान्देवान्प्रपूजयेत् ॥११॥ स्कन्दंनंदीश्वरंशूलंमहादेवंप्रपूजयेत् ॥ ब्रह्मईशानयोर्मध्ये
दक्षादिसप्तकोगणः॥१२॥ ब्रह्मेन्द्रयोस्तथामध्येदुर्गांविष्णुंतथैवच ॥ ब्रह्माग्निर्मध्येचतथास्व

धांदेवींप्रपूजयेत् ॥२३॥ ब्रह्मयाम्यद्वयोर्मध्येमरुतांसप्तकोगणः ॥ ब्रह्मनैर्ऋत्ययोर्मध्येवसुविश्वौतुपूजयेत् ॥ २४॥ ब्रह्मवरुणयोर्मध्येस्प्ययांस्थानंविधीयते ॥ ब्रह्मवायुद्वयोर्मध्येमरुतांसप्तकोगणः ॥ २५॥ ब्रह्मणःपादमूलेतुमरुतांसप्तकोगणः ॥ नदीस्तत्रपूजयेत् ॥ कावेरीनर्मदाचैवयमुनाचैवसरस्वती ॥ २६॥ गंगाकृष्णातथागोदापूज्यामध्येसप्तसागराः ॥ क्षीरक्षारमधुसर्पिर्न्नारिक्षुदधिसागराः ॥ २७ ॥ ब्रह्मयज्ञानमित्यादिमंत्रैस्तास्तास्तुदेवताः ॥ गंधपुष्पादिभिपूज्यादद्याद्दियांश्चसर्वतः ॥ २८ ॥ सर्वत्रभद्रंयस्मात्स्यात्सर्वतोभद्रमीरितम् ॥ इतिसर्वतोभद्रमण्डलदेवतानांस्थापनपूजनप्रकारः ॥ अथसर्वतोभद्रमण्डलस्थापितदेवतानांपूजनम् ॥ गणानांत्वेतिमंत्रेणआग्नेय्यांगणपंन्यसेत् ॥

॥ गणानांत्वेतिमंत्रस्यप्रजापतिऋषिरनुष्टुप्छंदोगणपतिर्देवतागण
पतिस्थापनेविनियोगः॥ ॐ गणानान्त्वागणपतिᳬहवामहे प्रियाणान्त्वाप्रियपतिᳬहवामहे
निधीनान्त्वानिधिपतिᳬहवामहेवसोमम ॥ आहमजानिगर्ब्भधमात्वमजासिगर्ब्भधम् ॥२३।१९॥
श्रीश्चतेइतिमंत्रेणईशान्यांसवित्कांन्यसेत् ॥ श्रीश्चतेतिमंत्रस्यनारायणऋषिस्त्रिष्टुप्छन्दोदुर्गादेव
तादुर्गास्थापनेविनियोगः॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौ
व्यात्तम् ॥ इष्णन्निषाणामुम्मइषाणसर्व्वलोकम्मइषाण ॥३१।२२॥ मध्यस्थानेस्थितोब्रह्माब्रा
ब्रह्मन्नितिपूजयेत ॥ आब्रह्मन्नितिमंत्रस्यप्रजापतिऋषिर्यजुश्छन्दः प्रजापतिर्देवताब्रह्मस्थापने

विनियोगः॥ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यःशूर ऽइषव्योतिव्याधीमहारथो जायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिःपुरन्धिर्योषाजिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यवीरो जायतान्निकामेनिकामेनःपर्जन्योवर्षतुफलवत्योन ऽओषधयःपच्यन्तांयोगक्षेमोनःकल्पताम् ॥२।२॥ सोमस्थेचोत्तरेभागेवय ऽ सोमेतिमंत्रेणसोमंपूजयेत्॥ वयसोमेतिबन्धुऋषिर्गायत्रीछन्दः सोमोदेवतासोमस्थापनेविनियोगः॥ वय ऽ सोमव्रतेतवमनस्तनूषुबिभ्रतः॥ प्रजावन्तःसचेमहि ॥३।५६॥ ईशान्यांदिशितमीशानमितिमंत्रेणेशानंपूजयेत्॥ तमीशानमितिमंत्रस्यगौतमऋषिस्त्रि ष्टुप्छन्दःईशोदेवताईशस्थापनेविनियोगः॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हू

महे त्वेयम्॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये॥२५।१८॥ पूर्वस्यान्दिशित्रा
तारमितिमन्त्रेणदेवेन्द्रंपूजयेत्॥ त्रातारमितिमंत्रस्यगर्गऋषिस्त्रिष्टुप्छन्दः इन्द्रोदेवताइन्द्रस्थाप
नेविनियोगः॥ त्रातारमिन्द्रमवितारमिन्द्र ँ हवेहवेसुहव ँ शूरमिन्द्रम्॥ ह्वयामिशक्रम्पुरुहूत
मिन्द्र ँ स्वस्तिनोमघवाधात्विन्द्रः २०।५०॥ पूर्वदक्षिणमध्येत्वन्नोऽअग्नेतिमंत्रेणाग्निंपूजयेत्॥
त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः॥ यजिष्ठोवन्हितमः शोशुचानोविश्वा
द्वेषा ँ सिप्रमुमुग्ध्यस्मत्॥२१।३॥ याम्यांसुगन्नुःपन्थेतिमंत्रेणधर्मराजंपूजयेत्॥ सुगन्नुःपन्थे
तिप्रजापतिऋषिस्त्रिष्टुप्छन्दोयमोदेवतायमस्थापनेविनियोगः॥ सुगन्नुःपन्थाम्प्रदिशन्नऽएहि

ज्योतिष्मध्येह्यजरन्न आयुः अपैतु मृत्युरमृतन्न आगाद्वैवस्वतो नो अभयं कृणोतु स्वाहा ॥ नैऋत्यां असुन्वन्तमिति मंत्रेण निर्ऋतिं पूजयेत् ॥ असुन्वन्तमिति मंत्रस्य विरूप ऋषिस्त्रिष्टुप् छन्दो निर्ऋतिर्देवता निर्ऋतिस्थापने विनियोगः ॥ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ २१।८२ ॥ प्रतीच्यां तत्त्वायामीति मंत्रेण वरुणं पूजयेत् ॥ तत्त्वायामीति मंत्रस्य शुनःशेप ऋषिस्त्रिष्टुप् छन्दो वरुणो देवता वरुणस्थापने विनियोगः ॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥ २१।२ ॥ वायव्यां आ नो नियुद्भिरिति मंत्रेण वायुमर्चयेत् ॥ आ नो नियुद्भिरिति मंत्र

स्य प्रजापतिऋषिस्त्रिष्टुप्छन्दो वायुर्देवता वायुस्थापने विनियोगः ॥ आ नो नियुद्भिः शतिनीभिर ध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् ॥ वायो३ अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥ २७।२८ ॥ उत्तरे वयꣳ सोमव्रतेति मंत्रेण कुबेरं पूजयेत् ॥ वयꣳ सोमेति वन्धुऋषिर्गायत्री छन्दः कुबेरो देवता कुबेरस्थापने विनियोगः ॥ वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः ॥ प्रजावन्तः सचेमहि ॥ ३। ५६ ॥ ईशान्यां तमीशानमिति मंत्रेणेशानं पूजयेत् ॥ तमीशानमिति मंत्रस्य गोतमऋषिस्त्रिष्टुप्छन्दः ईशानो देवता ईशानस्थापने विनियोगः ॥ तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे व यम् ॥ पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ २५।१८ ॥ ईशानपूर्वयोर्मध्ये ब्रह्मस्य

रुद्रेतिमंत्रेणब्रह्माणंपूजयेत् ॥ ॐ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशंस
तेस्तुवतेधायिपज्रइंद्रज्येष्ठाअस्माँअवंतुदेवाः ॥३३।५०॥ वायुसोमयोर्मध्येवसवोऽष्टौप्रकीर्तिताः
॥ध्रुवोध्वरश्चसोमश्चआपश्चैवानिलोऽनलः ॥ प्रत्युषश्चप्रभासश्चवसवोष्टौप्रकीर्तिताः ॥ वसोःप
वित्रमितिमंत्रेणैषांध्रुवादीनांचपूजनं ॥ वसोःपवित्रमितिमंत्रस्यगौतमऋषिर्जगतीछन्दःवसवोदे
वतावसुस्थापनेविनियोगः ॥ वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वा
सवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥२।३॥ सोमईशानयोर्मध्येरुद्राएका
दशाःस्मृताः ॥ अजैकपादहिर्बुध्न्योविरूपाक्षोथरैवतः ॥ हरश्चबहुरूपश्चत्र्यंबकश्चसुरेश्वरः सा

त्रिनेत्रश्चजयन्तश्चपिनाकीरुद्रएवच ॥ नमस्तेरुद्रमंत्रेणरुद्रांश्चैवप्रपूजयेत् ॥ नमस्तेरुद्रइति
मंत्रस्यपरमेष्ठीऋषिर्गायत्रीछन्दोरुद्रोदेवतारुद्रस्थापनेविनियोगः ॥ नमस्तेरुद्रमन्यवऽउतोत
इषवेनमः बाहुभ्यामुततेनमः ॥१६।१॥ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तनु
वाशन्तमयागिरिशन्ताभिचाकशीहि ॥१६।२॥ ईशानइन्द्रयोर्मध्येआदित्यान्द्वादशांल्लिखेत् ॥
धातामित्रोर्यमारुद्रोवरुणःसूर्यएवच ॥ भगोविवस्वान्पूषाचसवितादशमस्तथा ॥ एकादशस्त
थात्वष्टाविष्णुर्द्वादशउच्यते ॥ अदितिर्द्यौरितिमंत्रेणआदित्यान्द्वादशांल्लिखेत् ॥ अदितिर्द्यौरि
तिमंत्रस्यप्रजापतिर्ऋषिः त्रिष्टुप्छन्दः सूर्य्योदेवतासूर्य्यस्थापनेविनियोगः ॥ अदितिर्द्यौरदि

तिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाःऽअदितिःपञ्चजनाःऽअदितिर्ज्जातमदि
तिर्ज्जनित्वम् ॥ २४ ॥ २३ ॥ इन्द्रश्चयमयोर्मध्येअश्विनातेजसेतिमंत्रेणाश्विनौःपूजयेत् ॥ अश्विना
तेजसेतिमन्त्रस्यपरमेष्ठीऋषिस्त्रिष्टुप्छन्दोश्विनौदेवतेअश्विनोःस्थापनेविनियोगः ॥ अश्वि
नातेजसाचक्षुःप्राणेनसरस्वतीवीर्य्यम्वाचेन्द्रोबलेनेन्द्रायदधुरिन्द्रियम् ॥ आग्नेययमयो
र्मध्येविश्वेदेवाःसपैतृकाः ॥ क्रतुर्दक्षोसत्यवसूकामोचधुरिलोचनौ ॥ पुरुरवामाद्रवसौवि
श्वेदेवास्त्रयोदश ॥ अग्निष्वात्ताःसोमपाश्चबर्हिषदःसुकालिनः एकशृंगोशुधश्चैवद्वितीय
स्सोमपास्तथाविश्वेदेवाआयंतुश्वताभ्यांतौचसम्पूजयेत् ॥ विश्वेदेवासःआगतेतिमंत्रेण

स्यपरमेष्ठीऋषिर्गायत्रीछन्दोविश्वेदेवादेवताविश्वेदेवस्थापनेविनियोगः ॥ विश्वेदेवासऽआ
गतशृणुताम्मऽइमꣳहवम् ॥ एदम्बर्हिर्निषीदत ॥ आयन्तुनइतिमंत्रेणआग्नेययमयोर्मध्येपि
तॄन्सम्पूजयेत् ॥ आयन्तुनइतिमन्त्रस्यविवस्वानृषिर्बृहतीछंदःपितरोदेवतापितृस्थापनेवि
नियोगः ॥ आयन्तुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयाम
दन्तोधिब्रुवन्तुतेवंत्वस्मान् ॥ यमनैऋतयोर्मध्येसप्तऋषयइतिमंत्रेणऋषीन्सम्पूजयेत् ॥
गौतमोग्निर्भरद्वाजोविश्वामित्रोथकश्यपः ॥ यमदग्निर्वसिष्ठश्चसप्तैतेऋषयःस्मृताः ॥ सप्तऋषयःप्र
तिहिताइतिमंत्रस्यगौतमऋषिर्जगतीछन्दःसप्तऋषयोदेवताःसप्तऋषिस्थापनेविनियोगः ॥ ॐ

सप्त१ऋषयःप्रतिहिताःशरीरेसप्तरक्षन्तिसदमप्रमादम् ॥ सप्तापःस्वपतोलोकमीयुस्तत्रजागृतो
१अस्वप्नजौसत्रसदौचदेवौ ॥ नैऋत्यवरुणयोर्मध्येनागभूतानिपूजयेत् ॥ अनन्तोवासुकिःशेषःक
र्कोटकस्तक्षकस्तथापद्मकश्चमहापद्मःशंखःकंबलएवचपिशाचोगुह्यकः सिद्धोभूतोभीदेवयोन
यः भूतायत्वेतिमंत्रस्यपराशरऋषिर्विराट्छन्दःनारायणोदेवताभूतस्थापनेविनियोगः ॥ भूताय
त्वानारातयेस्वरभिविख्येषन्दृँ०हन्तान्दुर्य्याःपृथिव्यामुर्वन्तरिक्षमन्वेमिपृथिव्यास्त्वानाभौसा
दयाम्यदित्या१उपस्थेग्नेहव्यँ०रक्ष ॥ १ ॥ ११ ॥ नैऋत्यपश्चिमयोर्मध्येनमोस्तुसर्पेभ्योइतिमंत्रे
णसर्पान्प्रपूजयेत् ॥ नमोस्तुसर्पेभ्यइतिमंत्रस्यप्रजापतिऋषिरनुष्टुप्छन्दःसर्पोदेवतासर्पस्थाप

नेविनियोगः॥ नमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु॥येऽअन्तरिक्षेयेदिवितेभ्यःसर्प्पेभ्योनमः॥
१३।६॥ वायुवरुणयोर्मध्येगन्धर्वाप्सरसस्तथा॥विश्वावसुश्चगन्धर्वोहाहाहूहूस्तथैवच॥घृता
चीमेनिकारंभाउर्वशीचतिलोत्तमा॥सुकेशीमञ्जुघोषाद्याः कथ्यन्तेप्सरसोबुधैः॥ अयंपुरोहरिके
शोगन्धर्वोस्त्वेतिमंत्रतः॥गन्धर्वस्त्वेति नोपूज्योसर्वकामार्थसिद्धये॥ ॐअयंपुरोहरिकेशइति
मन्त्रस्यपरमेष्ठीऋषिः ककुप्छन्दोप्सरसोदेवता अप्सरस्थापनेविनियोगः॥ अयम्पुरोहरिकेशः
सूर्य्यरश्मिस्तस्यरथगृत्सश्चरथौजाश्चसेनानीग्रामण्यौ पुञ्जिकस्थलाचक्रतुस्थलाचाप्सरसौ
दंक्ष्णवः यसनोहेतिःपौरुषेयोवधः प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मो

यश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः गन्धर्वस्त्वेतिमंत्रेणवायुसोमयोर्मध्येगन्धर्वान्सम्पूजयेत् ॥ गन्ध
र्वस्त्वेतिमंत्रस्यगौतमऋषिर्द्विपदाविराट्छन्दः गन्धर्वोदेवतागन्धर्वस्थापनेविनियोगः ॥ गन्धर्वस्त्वा
विश्वावसुःपरिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥ इन्द्रस्यबाहुरसि
दक्षिणोविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः मित्रावरुणौत्वोत्तरतःपरिधत्तां
ध्रुवेणधर्म्मणाविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः २१३ ॥ ब्रह्मेन्द्रयोर्मध्येश्री
श्चतेतिमंत्रेणदुर्गादेवींसम्पूजयेत् ॥ श्रीश्चतेतिमंत्रस्यनारायणऋषिस्त्रिष्टुप्छन्दोदुर्गादेवतादुर्गा
स्थापनेविनियोगः ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णा

न्निषाणामुष्म ३ इषाणासर्वलोकम्म ३ इषाण ३१।२२॥ ब्रह्मेंद्रयोर्मध्येत्र्यवरुद्रेतिशंकरम् ॥ स्कंदंनं
दीश्वरंशूलंमहादेवंचपूजयेत् त्र्यवरुद्रेतिमंत्रस्यपरमेष्ठीऋषिः ककुप्छंदः रुद्रोदेवतारुद्रस्थापने
विनियोगः त्र्यवरुद्रमदीमह्यवदेवत्र्यम्बकम् ॥ यथानोवस्यसस्करद्यथानः श्रेयसस्करद्यथा
नोव्यवसाययात् ब्रह्मईशानयोर्मध्येश्रियाविष्णुस्तथैवच सदसस्पतेतिमंत्रेणविष्णोरराटेति
मन्त्रतः लक्ष्मीपूज्यासदाभक्त्याविष्णुःपूज्यस्तथैवच सदसस्पतिमंत्रस्यनारायणऋषिरुष्णि
कछंदोलक्ष्मीर्देवतालक्ष्मीस्थापनेविनियोगः सदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यम् ॥ सनिं
मेधामयासिषꣳस्वाहा ॥ विष्णोरराटमसीतिमंत्रेणब्रह्मईशानयोर्मध्येविष्णुंपूजयेत् ॥ विष्णो

ररादसीतिमंत्रस्य प्रजापतिऋषिरनुष्टुपछंदः विष्णुर्देवता विष्णुस्थापने विनियोगः ॥ विष्णोरराट
मसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ॥ ब्रह्मेन्द्रयोर्मध्ये
मरुतां सप्तकोगणः शुक्रज्योतिश्चेति षडनुवाक्येन षड् रश्मीन्परिपूजयेत् ॥ शुक्रज्योतिश्चेति मं
त्रषट्कस्य पराशर ऋषिर्विराट्छन्दः मरुतो देवता मरुतां स्थापने विनियोगः ॥ शुक्रज्योतिश्च
चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च शुक्रश्च ऋतपाश्चात्यꣳहाः १७।८०॥ ईदृ
ङ्चान्यादृङ् च सदृङ् च प्रतिसदृङ् च मितश्च संमितश्च सभराः १७।८१॥ ऋतश्च सत्यश्च ध्रुवश्च
धरुणश्च धर्त्ता च विधर्त्ता च विधारयः १७।८२॥ ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च अन्ति

मित्रश्चदूरे ऽ अमित्रश्चगणः २७।८३ ईदृक्षास ऽ एतादृक्षासऊषुणः सदृक्षासः प्रतिसदृक्षास
एतनमितासश्चसम्मितासोनो ऽ अद्यसभरसोमरुतोयज्ञे ऽ अस्मिन् ॥२७।८४॥ स्वतवाँश्चप्र
घासीचसान्तपनश्चगृहमेधीच क्रीडीचशाकीचोज्जेषी २७।८५ ॥ स्वैर्दक्षैरितिमंत्रेणमारुतं
पूजयेत् ॥ स्वैर्दक्षैरितिमंत्रस्यपराशरऋषिर्विराट् छन्दः मारुतोदेवतामारुतस्थापनेविनियोगः
॥ स्वैर्दक्षैर्दक्षपितेहसीदद्देवानांसुम्नेबृहतेरणाय ॥ पितेवैधिसूनव ऽ आसुशेवास्वावेशात
न्वासंविशस्वाश्विनाद्धूर्ष्यूँसादयतामिहत्वा ॥२७।३॥ ब्रह्माग्नेययोर्मध्ये ऽ अग्नेवाजजिदितिमं
त्रेणस्वधासप्रपूजयेत् अग्नेवाजजिदितिमंत्रस्यमधुच्छन्दऋषिर्बृहतीछन्दः वैश्वानरोदेवतास्व-

धास्थापनेविनियोगः॥ ॐअग्नेवाजजिद्वाजन्त्वासरिष्यन्तंवाजजितꣳ सम्मार्ज्मि नमोदेवेभ्यः स्व
धापितृभ्यःसुयमेमेभूयास्तमस्कन्नमद्य२।७॥ ब्रह्मयाम्ययोर्मध्ये ऽन्यवाणे ऽर्धमाशानामिति
मंत्रेणमृत्युंश्चैवपूजयेत्  ॐअन्यवायो ऽर्द्धमाशानामितिमंत्रस्यसुकेतुऋषिर्जगतीछन्दः मृत्युर्दे
वतामृत्युस्थापनेविनियोगः॥ ॐअन्यवायोर्द्धमासानामृश्यामयूरःसुपर्णस्तेगन्धर्वाणामपामु
द्रोमासाकृश्यपोरोहित्कुण्डृणाचीगोलत्तिकातेप्सरसामृत्यवेसितः२८।३७ ब्रह्मयाम्ययोर्म
ध्येएवककुभमितिमंत्रेणरोगमपिपूजयेत्॥ ककुभमितिमंत्रस्यप्रजापतिऋषिर्यजुश्छन्दः रो
गोदेवतारोगस्थापनेविनियोगः॥ ककुभꣳरूपंवृषभस्यरोचतेबृहच्छुक्रःशुक्रस्यपुरोगाः सो

मः सोमस्य पुरोगाः यजे सोमादभ्यन्नामजागृविलस्मै त्वा गृह्णामि तस्यै ते सोम सोमाय स्वाहा ॥
२२।४९॥ ब्रह्मनैर्ऋत्ययोर्मध्ये वसुविष्णोंतु पूजयेत् ॥ गणानान्त्वेतिमंत्रेण पूज्या वै तौ पृथक्पृथक् ॥
गणानांत्वेतिमंत्रस्य प्रजापतिऋषिरनुष्टुप्छन्दः गणपतिर्देवता गणपतिस्थापने विनियोगः ॥ गणा
नान्त्वा गणपतिं ऽ हवामहे प्रियाणान्त्वा प्रियपतिं ऽ हवामहे निधीनान्त्वा निधिपतिं ऽ हवामहे
वसो मम ॥ आहमजानि गर्भधमात्वमजासि गर्भधम् २३।१९॥ ब्रह्मवरुणयोर्मध्ये अपांस्थानं नि
धीयते अपांत्वद्येतिमन्त्रेण अपश्चैव प्रपूजयेत् अपोद्येतिमन्त्रस्य हिरण्यस्तूप ऋषिस्त्रिष्टुप्छंदः
आपोदेवता अपांस्थापने विनियोगः ॥ आपोऽअद्यान्वचारिषं ऽ रसेन समगस्महि ॥ पयस्वा

नयन्तस्थागमन्तम्मुस्र ईं सूजुवर्चसा प्रजया च धनेन च ॥२०।२२॥ ब्रह्मवायुह्वयोर्मध्ये मरुतां सप्तको
गणः ॥ समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ इमे च सप्त मरुतो मातरिश्वा तथानलः ॥ बृहदिंद्रा
यमंत्रेण पूज्यास्त्वेते रिथापवः ॥ बृहदिंद्रायेति मंत्रस्य परमेष्ठी ऋषिर्बृहती छन्दो मरुतो देवता मरुत्
स्थापने विनियोगः ॥ बृहदिंद्राय गायत मरुतो वृत्रहन्तमम् ॥ येन ज्योतिरजनयन्नृतावृधो देवन्दे
वायजागृवि २०।३०॥ ब्रह्मणः पादमूले तु मेदिनीं तत्र पूजयेत् महीद्यौरिति मंत्रेण पृथ्वी पूज्या प्रय
त्नतः ॥ महीद्यौरिति मंत्रस्य मेधातिथिऋषिर्गायत्री छन्दः पृथिवी देवता पृथिवीस्थापने विनियो
गः ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ॥ पिपृतान्नो भरीमभिः ८।३२॥ नदीभ्य इति मंत्रे

णनदीपूज्योतरेततः॥गंगाचयमुनाचैवसरयूश्चसरस्वती कौशीवेत्रवतीगंगातापीरेवापयोष्णि
का॥कृष्णाभीमरथीतुंगभद्रास्कंदनदीतथानद्योभ्यइतिमंत्रेणपूज्याश्चोक्तस्तस्मू:॥नदीभ्यइ
तिमंत्रस्यपरमेष्ठीऋषिर्यजुश्छन्दःनद्योदेवतानदीस्थापनेविनियोगः॥नदीभ्यःपौञ्जिष्टमृक्षी
काभ्योनैषादस्पुरुषध्याक्षायरुद्रुस्यौक्रूधर्मामरोभ्योब्रात्यस्युरभ्य:उन्मत्तेभ्यसर्पदेवजने
भ्योप्रतिपदमयेभ्यःकितवमीयतायाःआकितवाप्पिशाचेभ्योविदलकारींयातुधानेभ्यः
कण्टकीकारीस्य३०॥ लवणेक्षुसुरासर्पिर्दधिक्षीरसजीवनाः॥समुद्रोसिनभस्वान्मंत्रेणाने
नचोत्तरेसप्तसागराःपूज्याःसमुद्रोसीतिमंत्रस्यप्रजापतिऋषिर्यजुश्छन्दःसमुद्रोदेवतासमुद्रस्या

पनेविनियोगः ॥ समुद्रोसिनभस्वानार्द्रदानुःशम्भूर्म्मयोभूरभिमावाहिस्वाहामारुतोसिमरुतांगणः
शम्भूर्म्मयोभूरभिमावाहिस्वाहावस्यूरसिदुवस्वाञ्छम्भूर्म्मयोभूरभिमावाहिस्वाहा १८।४५ ॥ आ
दित्यश्चंद्रमाभौमोबुधजीवसिताकेजाः ॥ सर्वेग्रहास्तुसंपूज्याराहुकेतूक्रमेणच अथाग्निंदूतमि
त्यादिमंत्रैस्तान्परिपूजयेत् अग्निंदूतमितिमंत्रस्यमेधातिथिऋषिर्गायत्रीछंदः सवितादेवतावि
तस्थापनेविनियोगः ॥ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ ॥ आसादयादिह २२।१७ ॥
अप्स्वग्निरितिमंत्रेणचंद्रंचपरिपूजयेत् ॥ अप्स्वग्निरितिमंत्रस्यप्रजापतिऋषिर्गायत्रीछंदः सोमोदे
वतासोमस्थापनेविनियोगः ॥ अप्स्वग्नेसधिष्टवसौषधीरनुरुध्यसे ॥ गर्भेसञ्जायसेपुनः १२।३६

स्योनापृथिवीतिमंत्रेभौमंचपरिपूजयेत् ॥ स्योनापृथिवीतिमंत्रस्यदध्यङ्ङाथर्वणऋषिर्गायत्रीछं
दः॥ अंगारकोदेवताअंगारकस्थापनेविनियोगः ॥ स्योनापृथिवीनोभवानृक्षरानिवेशनी ॥ यच्छानः
शर्म्मसप्रथाः ३६।१३ ॥ इदंविष्णुरितिमंत्रेणबुधंचपरिपूजयेत् ॥ इदंविष्णुरितिमंत्रस्यमेधातिथि
र्गायत्रीछंदःबुधोदेवताबुधस्थापनेविनियोगः ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढ
मस्यपाꣳसुरेस्वाहा ५।१५ ॥ ॐ महाँइंद्रेतिमंत्रेणगुरुंचपरिपूजयेत् ॥ महाँइंद्रइतिमंत्रस्यहिर
ण्यगर्भऋषिर्गायत्रीछंदोबृहस्पतिर्देवताबृहस्पतिस्थापनेविनियोगः ॥ महाँइंद्रोवज्रहस्तइति
यजुः ॥ महाँ ॥ ॐ इन्द्रोवज्रहस्तःषोडशीशर्मयच्छतु हन्तुपाप्मानंयोस्मान्द्वेष्टि उपयामगृही

तोऽसिमहेन्द्रायत्वैषतेयोनिर्म्महेन्द्रायत्वा २६।१० शुक्रज्योतिश्चमंत्रेणभार्गवंपरिपूजयेत् ॥ शुक्रज्यो
तिश्चेतिमंत्रस्यवामदेवऋषिस्त्रिष्टुप्छंदः शुक्रोदेवताशुक्रस्थापनेविनियोगः ॥ शुक्रज्योतिश्च
चित्रज्योतिश्चसत्यज्योतिश्चज्योतिष्माँश्च शुक्रश्चऋतपाश्चात्यꣳहाः १७।८० प्रजापते
तिमंत्रेणशनिंचपरिपूजयेत् ॥ प्रजापतेतिमंत्रस्यहिरण्यगर्भऋषिस्त्रिष्टुप्छंदः शनैश्चरोदेवताशनै
श्चरस्थापनेविनियोगः ॥ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहु
मस्तन्नोऽअस्तुवयꣳस्यामपतयोरयीणाम् २३।६५ आयंगौरितिमंत्रेणराहुंचपरिपूजयेत् ॥ आ
यंगौरितिमंत्रस्यसर्प्पराज्ञीऋषिर्गायत्रीछन्दोराहुर्देवताराहुस्थापनेविनियोगः ॥ आयंगौःपृश्नि

क्रमादसंदन्मातरस्सुरः ॥ पितरस्थप्रयन्त्स्वः ॥ ब्रह्मयज्ञानमंत्रेणकेतुंपूज० ब्रह्मयज्ञानम्प्रथमम्पुर-
स्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः २२
३॥ समख्यइतिमन्त्रेणपूजयेत्सप्तमातरः ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराहीचैव
माहेंद्रीचामुंडासप्तमातरः ॥ समख्यइतिमन्त्रस्यवामदेवऋषिः पंक्तिश्छन्दोमातरोदेवतामातृस्था-
पनेविनियोगः ॥ समख्येदेव्याधियासन्दक्षिणयोरुचक्षसा ॥ मामऽआयुःप्रमोषीर्म्मोऽअहन्त
ववीरंविदेयतवदेविसन्दृशि ६।२३ ॥ दुर्गांपूज्यानतोवाद्येवज्रादीन्यायुधानिच ॥ वज्रंशक्तिंचदंडं
चखड्गंपाशांकुशौतथा ॥ गदांत्रिशूलंचक्रंचपद्मंचैतेक्रमादश ॥ ॐ दुर्गायैनमः इतिमध्ये ॐ वज्रा

यनमः ॐ शक्तयेनमः ॐ दंडायनमः ॐ खड्गायनमः ॐ पाशायनमः ॐ अंकुशायनमः ॐ
गदायेनमः ॐ त्रिशूलायनमः ॐ चक्रायनमः ॐ पद्मायनमः ततोधूपदीपनैवेद्यतांबूलदक्षि
णायज्ञोपवीतपुंगीफलवासांसिसमर्प्यत्कृतेनतच्छिवादिमातिष्ठांगभूतास्मिन्कर्मणियथासं
पादितसामग्र्याकृतेनानेनपूजनेनसर्वतोभद्रमंडलस्थापितदेवताःसुप्रीतावरदाःसंतु
आयुःकर्तारःक्षेमकर्तारःशुभकर्तारःकल्याणकर्तारोभवंतु ॥ ॥इतिसर्वतोभद्रमंडल
देवतानांसमंत्रकपूजनं॥ अथतन्मंडलस्थदेवतानांनाममंत्रेणावाहनंपूजनंचोच्यते त
थाहि मध्येब्रह्मणेनमः ब्रह्माणमावाहयामिस्थापयामि १ उत्तरेसोमायनमःसोमंआ० २ ईशा

नेइशानायनमः ईशानमा॰ ३ पूर्वेइंद्रायनमः इंद्रंमा॰ ४ आग्नेय्यग्नयेनमः अग्निंमा॰ ५ दक्षि
णेयमायनमः यमंमा॰ ६ नैर्ऋत्येनैर्ऋतायनमः नैर्ऋतिंमा॰ ७ पश्चिमेवरुणायनमः वरुणं
मा॰ ८ वायव्येवायवेनमः वायुंमा॰ ९ वायुसोममध्येअष्टवसुभ्योनमः अष्टवसून्मा॰
१० सोमेशानमध्येएकादशरुद्रेभ्योनमः एकादशरुद्रान्मा॰ ११ ईशानेंद्रमध्येद्वादशादि
त्येभ्योनमः द्वादशादित्यान्मा॰ १२ इंद्राग्निमध्येअश्विभ्यांनमः अश्विनौमा॰ १३ अग्निय
ममध्येविश्वेभ्योदेवेभ्यः सपैतृकेभ्योनमः विश्वान्देवान्सपैतृकान्मा॰ १४ यमनैर्ऋति
मध्येसप्तऋषिभ्योनमः सप्तऋषीन्मा॰ १५ नैर्ऋतिवरुणमध्येभूतनागेभ्योनमः भूतना

गाना० १६ वरुणवायुमध्ये गंधर्वाप्सरोभ्योनमः गंधर्वाप्सरान्स्था० १७ ब्रह्मसोममध्ये स्कंदा
यनमः स्कंदंस्था० १८ उत्तरे ऋषभायनमः ऋषभंस्था० १९ तदुत्तरे शूलमहाकालाभ्यांनमः
शूलमहाकालौस्था० २० ब्रह्मेशानयोर्मध्ये दक्षादित्यसप्तगणेभ्योनमः दक्षादित्यसप्तग
णाना० २१ ब्रह्मेन्द्रयोर्मध्ये दुर्गायैनमः दुर्गांस्था० २२ पूर्वे विष्णवेनमः विष्णुंस्था० २३ ब्रह्माग्नि
योर्मध्ये स्वाध्यायैनमः स्वाध्यायंस्था० २४ ब्रह्मयमयोर्मध्ये मृत्युरोगेभ्योनमः मृत्युरोगाना०
२५ ब्रह्मनैर्ऋतयोर्मध्ये गणपतयेनमः गणपतिंस्था० २६ ब्रह्मवरुणयोर्मध्ये अद्भ्योनमः
अपःस्था० २७ ब्रह्मवायुमध्ये मरुद्भ्योनमः मरुतःस्था० २८ ब्रह्मणः पादमूले कर्णिकायां पृ

थिव्यैनमः पृथिवींआ० २९ तत्रैवसप्तसागरेभ्योनमः सप्तसागरान्आ० ३० तत्रादिगंगादिसप्त
सरिन्द्योनमः गंगादिसप्तसरितःआ० ३१ उत्तरेमेरवेनमः मेरुंआ० ३२ तत्परिधौ सोमादि
सन्निधौक्रमेणायुधआवाहनंगदायैनमः गदांआ० ३३ त्रिशूलायनमः त्रिशूलंआ० ३४
वज्रायनमः वज्रंआ० ३५ शक्त्यैनमः शक्तिंआ० ३६ दंडायनमः दंडंआ० ३७ खड्गायनमः ख
० ३८ पाशायनमः पाशंआ० ३९ अंकुशायनमः अंकु० ४० तद्बाह्येउत्तरादौगौतमायनमः
गौ० ४१ भारद्वाजायनमः भा० ४२ विश्वामित्रायनमः वि० ४३ कश्यपायनमः कश्य० ४४ ज
मदग्नयेनमः जम० ४५ वशिष्ठायनमः व० ४६ अत्रयेनमः अ० ४७ अरुंधत्यैनमः अरुंध०

४८ तद्बहिःपूर्वादिदिक्षु आग्नेय्यैनमः अ० ४९ वात्यैनमः वा० ५० वाराह्यैनमः वा० ५१ वै
धव्यैनमः वै० ५२ माहेश्वर्यैनमः मा० ५३ इंद्राण्यैनमः इंद्राणीमावाहया० ५४ अथवेदिमध्ये
कलशस्थापनं तस्मिन्कलशेगणेशंवरुणंचावाह्यपूजयेत् अथवाप्रधानदेवतामूर्तिंस्व
र्णमयींषोडशोपचारैः पंचोपचारैर्वातत्रावाह्यपूजयेत् शिवप्रतिष्ठायांतुलिंगतोभद्रमं
डले षोडशोपचारैः पंचोपचारैर्वा प्रधानदेवतामूर्तिंपूजयेदितिबोध्यम् ॥ ॥
अथद्वादशलिंगतोभद्रपूजनपद्धतिर्लिख्यते ॥ मनोहरंलिखेच्चक्रंलिंगैर्द्वादशभिर्यु
तं प्रागुदीच्यांपंचत्रिंशद्रेखाकार्याप्रयत्नतः कोणेन्दुःत्रिपदाश्वेताःशृंखलापंचभिःपदैः

देवताभिः सर्वस्यधातास्यमितप्रभावविशालमन्तः सततंशिवायेतिध्यात्वा ब्रह्मयज्ञा

नमितिमंत्रेणब्रह्माणमावाह्यपूजयेत् ब्रह्मयज्ञानमितिमंत्रस्यवामदेवऋषिस्त्रिष्टुप्छ

न्दः ब्रह्मादेवताब्रह्मावाहनेविनियोगः ब्रह्मयज्ञानम्प्रथमंपुरस्ताद्विसीमतः सुरुचोवेन

आवः सबुध्न्या ऽउपमा ऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः १३।३॥ उत्तरेसोमं ॐ

एह्येहियज्ञेश्वरयज्ञरक्षांविधत्स्वनक्षत्रगणेनसार्द्धं सर्वौषधीःपितृगणेनसार्द्धंगृहाणपूजां

भगवन्नमस्ते इतिध्यात्वा आप्यायस्वेतिमंत्रेणसोममावाह्यपूजयेत् आप्यायस्वेति

मंत्रस्यगौतमऋषिर्गायत्रीछन्दः सोमोदेवतासोमावाहनेविनियोगः ॐ आप्यायस्वसमे

तुतेविश्वतःसोमवृष्ण्यम् भवावाजस्यसङ्गथे १२।११२॥ ततईशानेईशानं एह्येहियज्ञे
श्वरयज्ञसिद्ध्यै गृहाणपूजांभगवन्नमस्तेइतिध्यात्वा तमीशानमितिमंत्रेणेशानमावाह्यपू
जयेत् तमीशानमितिमंत्रस्यगौतमऋषिःजगतीछन्दःईशानोदेवताईशानावाहनेविनि
योगः ॐतमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् पूषानोयथावे
दसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये २५।१८॥ पूर्वेइन्द्रम् ॥ॐ एह्येहिसर्वामरसि
द्धसाध्यैरभिष्टुतोवज्रधरामरेश संवीज्यमानोप्सरसांगणेनरक्षाध्वरंनोभगवन्नमस्ते इ
तिध्यात्वा त्रातारमितिमंत्रेणेन्द्रमावाह्यपूजयेत् ॐ त्रातारमिंद्रमिति मंत्रस्यगौतमऋषि

ष्टिष्टुप्छन्दः इन्द्रोदेवता इन्द्रावाहनेविनियोगः॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे
हवे सुहवꣳ शूरमिन्द्रम्॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः २०।५०
इन्द्रायनमः पाद्यादिभिरर्चयेत्॥ ततआग्नेयखण्डेत्रिपदंस्थितं तत्राग्निम् एह्येहि सर्वा
मरहव्यवाहमुनिप्रवीरैरभितोभिजुष्टतेजोबलैर्लोकगणेनसार्द्धंममाध्वरंरक्षनमोऽस्तुते
ग्नेइतिध्यात्वा अग्निन्दूतइतिमन्त्रेणाग्निमावाह्यपूजयेत्॥ अग्निन्दूतमितिमन्त्रस्यक
ण्वमेधातिथिऋषिर्गायत्रीछंदः अग्निर्देवताअग्न्यावाहनेविनियोगः॥ ॐ अग्निन्दूतं
पुरोदधेहव्यवाहमुपब्रुवे॥ देवाँ२ऽआसादयादिह २२।१७ अग्नयेनमः पाद्यादिभिर

र्चयेत् याम्ये चतुर्विंशतिपदस्वरूपयो गोर्ध्योस्सद्दशायो मध्ये यमं पूजयेत्‌ एह्येहि वैवस्वतध
र्मराज सर्वामरैरर्चितधर्ममूर्ते शुभाशुभानंदशुचामधीशा शिवाय नः पाहि मखं नमस्ते इति ध्या
त्वा सुगन्नपंथेति मंत्रेण यममावाह्य पूजयेत्‌ सुगन्नु पंथेति मन्त्रस्य पार्श्व पतन्नऋषिस्त्रिष्टुप्छं
दः यमो देवता यमावाहने विनियोगः॥ सुगन्नुः पन्थाम्प्रदिशन्न ऽएहि ज्योतिष्मद्ध्येह्यजरन्न ऽआ
युः अपैतु मृत्युरमृतन्न ऽआगाद्वैवस्वतो नो ऽअभयं कृणोतु स्वाहा यमाय नमः पाद्यादिभिरर्चये
त्‌ नैऋत्ये खण्डेन्दुः त्रिपदं स्वेतं तन्त्र निऋतिमावाहयेत्‌ ॐ एह्येहि रक्षोगणनायक त्वं विशाल
वेतालपिशाचसंघैः ममाध्वरं पाहि शुभादिनाथ लोकेश्वर त्वां प्रणमामि नित्यं इति ध्यात्वा

असुन्वन्तमितिमंत्रेणनिर्ऋतिमावाह्यपूजयेत् ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्या
मन्विहितस्करस्य अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु १२।६२॥ निर्ऋ
तयेनमःपाद्यादिभिरर्चयेत्॥ ततोवायोरवगडदुक्षिपदंश्वेतंतत्रवायुमावाहयेत्॥ एह्येहिय
ज्ञेममरक्षणायमृगाधिरूढःसहसिद्धसंघैः प्राणाधिपोहव्यभुजःसहायगृहाणपूजांभगवन्न
मस्तेइतिध्यात्वा॥ आनोनियुद्भिरितिमंत्रेणवायुमावाह्यपूजयेत् आनोनियुद्भिरितिमं
त्रस्यवशिष्ठऋषिस्त्रिष्टुप्छन्दःवायुर्देवतावाय्वावाहनेविनियोगः ॐ आनोनियुद्भिःशति
नीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् वायोअस्मिन्त्सवनेमादयस्वयूयम्पातस्व

स्तिभिःसदानः २७।२८ पाद्यादिभिरर्चयेत् वायुसोमयोर्मध्ये चतुष्पदं बंधुजीवपुष्पोपमं
भद्रं तत्र वसूनावाहयेत् एह्येहि वसवेशाम्महानिधे शरन्नाकरासर्वसहस्रतेजाः धनस्य रक्षा
ममयज्ञपाद्यं गृहाण पूजां भगवन्नमस्ते इति ध्यात्वा ॥ वसोः पवित्रेतिमंत्रेण वसूनावाह्य
पूजयेत् वसोः पवित्रमसीतिमंत्रस्य वशिष्ठऋषिस्त्रिष्टुप्छन्दः वसवो देवता वस्वावाहने वि
नियोगः वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् देवस्त्वा सविता पुनातु
वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः २।३॥ पाद्यादिभिरर्चयेत् तत्रैव नाममंत्रेण धु
वं १ अध्वरं २ सोमं ३ आपः ४ अनलम् ५ अनिलम् ६ प्रत्यूषम् ७ प्रभासं चावाह्य पूजयेत् ८

ततःसोमेशानयोर्मध्येकरवीरपुष्योपमंचतुष्पदंभद्रंतत्ररुद्रान्स्थापयेत् ॥ एह्येहियज्ञेश्व
रकरत्रिशूलकपालखट्वांगधरैरगसार्द्धं लोकेनविश्वेश्वरयज्ञसिद्ध्यैगृहाणपूजांभगवन्नमस्ते
इतिध्यात्वा॥ यातेरुद्रेतिमन्त्रेणरुद्रानावाह्यपूजयेत् यातेरुद्रेतिमंत्रस्यपरमेष्ठिरनुष्टुप्छ
न्दःबृहुरुद्रादेवतारुद्रावाहनेविनियोगः यातेरुद्रशिवातनूरघोरापापकाशिनी तयानस्त
न्वाशन्तमयागिरिशन्ताभिचाकशीहि १८॥२ तत्रैवनाममंत्रेणान्यानेकादशरुद्रानावाह्य
पूजयेत् तेचरुद्राः सोमेशानयोर्मध्येरुद्राएकादशाःस्मृताः अजैकपादहिर्बुध्न्योविरूपाक्षो
इंद्रवंतवीरभद्रशंभुगिरिशमहाशयअजपिनाकि अहिर्बुध्न्यकपालिदिशांपतिभर्गभवानाथीशाइत्येतान्अपिरुद्राकुर्वीतसुस्तकादौसंनीतिबोध्यम्

थैरेवतः हरश्च बहुरूपश्च त्र्यंबकश्च सुरेश्वरः सावित्रश्च जयन्तश्च पिनाकी रुद्र एव च इति श्लो
कोक्ताः ततईशानेंद्रयोर्मध्ये विष्णुमोपमं चतुष्पदं भद्रं तत्र द्वादशादित्यान्स्थापयेत् धातामित्रोर्य
मारुद्रोवरुणःसूर्यएवच भगोविवस्वान्पूषाचसवितादशमस्तथा एकादशस्तथात्वष्टाविष्णु
र्द्वादशउच्यते क्वचिदरुणसूर्यवेदांगभानुइंद्ररविगभस्तिर्यमस्वर्णरेतसदिवाकरमित्र
विष्णुरित्युक्ताज्ञेयाः एत्यद्रिपद्मासनपद्मपाणेसरक्तसिंदूरसमानवर्णसप्ताश्वरक्तांबरसूर्य-
शीघ्रं पूजांगृहीतुंमखमस्मदीयमितिध्यात्वा आकृष्णेनेतिमंत्रेणतानावाह्यपूजयेत् आकृ
ष्णेनेतिमंत्रस्यदध्यङ्ङाथर्वणऋषिःपुरउष्णिक्छन्दःसूर्योदेवतासूर्यावाहनेविनियोगः आ

कृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च हिरण्ययेनसवितारथेनादेवोयातिभुवना
निपश्यन् ३३।४३॥ पाद्यादिभिरर्च्चयेत् ॥ ततइन्द्राग्न्योर्मध्येकृतकोष्ठेपद्मेचतुष्पदंभद्रंतत्रा
श्विनौःस्थापयेत् द्विभुजौदेवभिषजौकर्त्तव्यौदेवसंयुतौ तयोरोषधयःकार्यादिव्यादक्षिणहस्त
योरितिध्यात्वा अश्विनातेजसेतिमंत्रेणयावांकशेतिमंत्रेणवा।अश्विनमावाह्यपूजयेत् अश्वि
नातेजसेतिमंत्रस्यपरमेष्ठिऋषिरनुष्टुप्छंदो।अश्विनौदेवते।अश्विनोःस्थापनेविनियोगः यावांक
शेतिमंत्रस्यमेधातिथिऋषिर्गायत्रीछन्दः अश्विनौदेवतेअश्विनावाहनेविनियोगः अश्विना
तेजसाचक्षुःप्राणेनसरस्वतीवीर्य्यम् वाचेन्द्रोबलेनेन्द्रायदधुरिन्द्रियम् अग्नियमयोर्मध्येकु

सुमपुष्पोपमंचतुष्पदंभद्रंतत्रविश्वेदेवाःसपैतृकाःस्थाप्याः ऋतूदक्षौसत्यवसूकामोचधु
र्लोचनौपुरूरवोमाद्रवसौविश्वेदेवाश्चयोदश अग्निष्वात्ताःसोमपाश्चबर्हिषदःसुकालिनः
एकशृंगोशुद्धश्चैवद्वितीयस्सोमपास्तथाविश्वेदेवान्आयन्तुश्चताभ्यांतौचसंपूजयेत् एत्योहिस
र्वामरसिद्धसाध्यैरभिष्टुतोवज्रधरामरेश संवीज्यमानोप्सरसांगणेनरक्षाध्वरंनोभगवन्नम-
स्ते इतिध्यात्वा विश्वेदेवान्आयंतुनइतिमंत्राभ्यांसपैतृकान्विश्वेदेवानावाह्यपूजयेत् विश्वेदे
वासआगतेतिमंत्रस्यपरमेष्ठीऋषिर्गायत्रीछंदोविश्वेदेवादेवताविश्वेदेवस्थापनेविनियोगः
विश्वेदेवास आगतशृणुतामइमं हवम् एदंबर्हिर्निषीदत आयन्तुनइतिमंत्रेणआग्नेयय

मयोर्मध्येपितॄन्प्रपूजयेत् आयन्तुनइतिमंत्रस्य विवस्वानृषिर्बृहतिच्छन्दःपितरोदेवतापितॄ
स्थापनेविनियोगः आयन्तुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः अस्मिंयज्ञेस्वध
यामदन्तोधिब्रुवन्तुतेवन्त्वस्मान् ततःसपैतृकान्विश्वेदेवान्पाद्यादिभिःपूजयेत् यमनिर्ऋति
मध्येमस्तूरान्नसदृशंचतुष्पदंभद्रंतत्रपश्चात्स्थापयेत् ॐ एह्येहिरक्षोगणनायकस्त्वंविशाल
वेतालपिशाचसंघैः ममाध्वरंपाहिशिवाधिनाथलंकेश्वरस्त्वंभगवन्नमस्ते इतिध्यात्वा आभि
त्यमितिमंत्रेणरक्षानावाह्यपूजयेत् आभित्यामितिमंत्रस्य वामदेवऋषिःपंक्तिछन्दःरक्षोदे
वतारक्षावाहनेविनियोगः

निर्ऋतिवरुणयोर्मध्येसिंदूरवर्णंचतुस्पदंभद्रंतत्रसर्पान्स्थापयेत् आसक्तसूत्रधरासर्पाःकुंडि
कापुच्छसंयुता एकगोत्रास्त्रिभोगावासर्पाकार्याश्चभीषणाइतिध्यात्वा आयंगौरितिमंत्रेणसर्पा
नावाह्यपूजयेत् आयंगौरितिमंत्रस्यसर्पराजऋषिर्गायत्रीछन्दःसर्पोदेवतासर्पावाहनेविनियो
गः आयङ्गौःपृश्निरक्रमीदसदन्मातरंपुरः पितरंचप्रयन्त्स्वः ३।६ पाद्यादिभिरर्चयेत् ततो
वरुणवाय्वोर्मध्येरक्तवर्णंचतुष्पदंभद्रंतत्रगंधर्वाप्सरसःस्थापयेत् आवाहयेऽहंसुरदेवसे-
व्याःस्वरूपतेजासुरवपद्मभासाः सर्वामरेशाःपरिपूर्णकामापूजांगृहीतांममयज्ञभूमौइति ॥७१॥
ध्यात्वा गंधर्वेस्त्वेतिमंत्रेणगंधर्वानावाह्यपूजयेत् गंधर्वस्त्वेतिमंत्रस्यचातुरशनासप्तऋषिर्बृ

गोगंधर्वाप्सरसोऋषिस्त्रिष्टुपूछंदोगंधर्वाप्सरसोदेवतागंधर्वाप्सरसावाहनेविनियोगः गंधर्व
स्त्वाविश्वावसुःपरिदधातु विश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः इन्द्रस्यबाहुर
सिदक्षिणोविश्वस्यारिष्ट्यैयजमानस्यपरिधीरस्यग्निरिडऽईडितः मित्रावरुणौत्वोत्तरतःपरिध
त्तान्ध्रुवेणधर्म्मणाविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ततोवस्त्वष्टसोम
योर्मध्येऽष्टाविंशतिपदंमासिसदृशांलिंगंतत्रसोमंस्थापयेत् एह्येहियज्ञेशममसोमनाथसौ
राष्ट्रदेशस्थितपार्षदैःस्वैः गौर्याचदेव्यासहयज्ञसिद्ध्यैगृहाणपूजांभगवन्नमस्ते इतिध्या-
त्वा नमःशंभवायेतिमंत्रेणसोममावाह्यपूजयेत् नमःशम्भवायचमयोभवायचनमःशंकरा

यचमयस्करायचनमःशिवायचशिवतरायच तस्मात्पूर्वोद्दिपदान्तरेत्वष्टाविंशतिपदंकृष्ण
निल्योपसंलिङ्गन्तत्रमल्लिकार्ज्जुनंस्थापयेत् एह्येहिदेवश्रीशैलवासिन्देव्याभवान्यासहमल्लि
कार्ज्जुनमदीययज्ञस्याशिवायनूनं गृहाणपूजाम्भगवन्नमस्तेइतिध्यात्वा यातेरुद्रेतिमंत्रे
णमल्लिकार्ज्जुनमावाह्यपूजयेत् यातेरुद्रशिवातनूरघोरापापकाशिनी तयानस्तन्वाशन्त
मयागिरिशन्ताभिचाकशीहि पाद्यादिभिरर्च्चयेत् तदनन्तरंसोमएकादशरुद्रमध्येत्वष्टावि
शतिपदंविष्णुक्रान्तापुष्योपसंलिङ्गन्तत्रमहाकालंस्थापयेत् एह्येहिगौर्य्याभगवन्शिवा
यतेह्यवन्तिवासिन्महाकालदेव मदीययज्ञस्याशिवायनूनंगृहाणपूजाम्भगवन्नमस्ते इ

ति ध्यात्वा मानो महान्तमिति मंत्रेण महाकालमावाह्य पूजयेत् मा नो महान्तमुत मा नो ऽर्भकं मा
न उक्षन्तमुत मा न उक्षितम् मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ततः
पाद्यादिभिरर्चनं नन्दनन्दनारन्ध्राद्दशादित्यद्वयोर्मध्ये त्र्यंशे विंशतिपदं कृज्जलमद्द्वौ शांशे कुंभस्य
भ्रमरेश्वरं स्थापयेत् देवेश्वर विश्वनाथ ॐकारवासिन् भगवान् भवान्या समेतैः स्वकीयैरपि पार्षदैः
भगवान् गृहाण पूजां भगवन्नमस्ते इति ध्यात्वा एष ते रुद्रभाग इति मंत्रेण भ्रमरेश्वरमावाह्य पूज
येत् एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहैष ते रुद्र भाग आखुस्ते पशुः पाद्यादि
भिरर्चनम् तद्दक्षिणभागे द्वाविंशति पदामिन्द्रनीलोपमं लिंगं तत्र वैद्यनाथं स्थापयेत् एत्योहि

यज्ञेममसेवैद्यनाथसर्वामरैरर्चितपादपद्म ॥ गृहाणपूजां भगवन्शिवायनः शिवासमेतायनमोऽ
स्तुतुभ्यमितिध्यात्वा नमोऽस्तुनीलग्रीवायेतिमंत्रेणवैद्यनाथमावाह्यपूजयेत् नमोऽस्तुनीलग्री
वायचशितिकण्ठायचनमः कपर्दिनेचव्युप्तकेशायचनमः सहस्राक्षायचशतधन्वनेचनमोगिरि
शयायचशिपिविष्टायचनमोमीढुष्टमायचेषुमतेचनमोह्रस्वाय   पाद्यादिभिरर्चनम् ततइं
द्राग्निन्योर्मध्येऽष्टाविंशतिपदंमहामरकतसदृशंश्यामंलिंगंतत्रभीमशंकरंस्थापयेत् एह्ये
हिभीमेशस्वयापदैर्भवान्पूजांगृह्णातुममयज्ञभूमौगौर्याभवान्यासहदेवदेवगृहाणपूजांभग
वन्नमस्ते ॥ इतिध्यात्वा ॥ नमोऽस्तुरुद्रेभ्यइतिमंत्रेणभीमशंकरमावाह्यपूजयेत् नमोऽस्तुरुद्रे

भ्योयेदिवियेषांवर्षमिषवः तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः ते-
भ्योनमोऽस्तुतेनोऽवन्तुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितमेषांजम्भेदध्मः पाद्यादि
भिरर्चनम् तदनंतरमग्नियमयोर्मध्येऽष्टाविंशतिपदंनवीननीरदवत्श्यामांलिंगंतत्रामेशंस्था
पयेत् एह्येहिरामेश्वररामनाथयाम्येणसंस्थापितमेतुमध्येमदीययज्ञस्यशिवायनूनंगृहाणपू
जांभगवन्नमस्तेइतिध्यात्वा नमःसभाभ्यःइतिमंत्रेणरामेश्वरमावाह्यपूजयेत् नमःसभाभ्यः
सभापतिभ्यश्चवोनमोनमोऽश्वेभ्योऽश्वपतिभ्यश्चवोनमोनमऽआव्याधिनीभ्योविविध्य
न्तीभ्यश्चवोनमोनमऽउगणाभ्यस्तृंहतीभ्यश्चवोनमोनमोगणेभ्यः ततःपाद्यादिभिरर्च

नमः तत्पश्चिमेऽष्टाविंशतिपदं कृष्णां लिंगं नागेशं स्थापयेत् एह्येहि नागेश्वर दारुकावने
स्थित प्रभो सुरव्यगणैर्वृतो भवान् शिव सम्मनः पाहि मदीययज्ञं गृहाण पूजां भगवन्नमस्ते इति ध्या
त्वा परितेधन्वन् इतिमंत्रेण नागेशमावाह्य पूजयेत् परितेधन्वनो हेतिरस्मान्वृणक्तु विश्वतः
अथोय ऽइषुधिस्तवारे अस्मिन्निधेहितम् पाद्यादिभिः पूजनम् पश्चिमे अनयोर्मध्ये ऽष्टाविं
शतिपदं लिंगं तत्र केदारं स्थापयेत् एह्येहि केदार हिमालये स्थित गौर्या भवान्या सह पार्षदैरपि
मदीययज्ञस्य शिवाय भूमन् गृहाण पूजां भगवन्नमस्ते इति ध्यात्वा एतत्ते रुद्रावसं तेनेति मंत्रेण
केदारमावाह्य पूजयेत् एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि अवततधन्वा पिनाकावसः कृत्ति

वासाऽस्त्वादि ॐ सन्नः शिवो नो हि पाद्यादिभिरर्चनम् ततो निर्ऋतिवरुणयोर्मध्ये द्वाविंश
तिपदं श्यामं लिंगं तत्र घृष्णेशं स्थापयेत् एह्येहि घृष्णेश्वर देवदेव शिवालये संस्थित सर्वपूज्य
गौर्या भवान्या सह पार्षदैरपि गृहाण पूजां भगवन्नमस्ते इति ध्यात्वा नमः पार्याय चेति मंत्रेण घृ
ष्णेशमावाह्य पूजयेत् नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्या
य च कूल्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च ततः पाद्यादिभिरर्चनम् तदुत्तरे
ष्वष्टादशपदं श्यामं लिंगं तत्र विश्वेशं स्थापयेत् ॐ एह्येहि विश्वेश्वर विश्वनाथ वाराणसीवा
सकृतप्रमोभवान् गौर्या भवान्या सह देवदेव गृहाण पूजां भगवन्नमस्ते इति ध्यात्वा नमः क

र्दिन इति मंत्रेणाविश्वेशमावाह्य पूजयेत् नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षा य च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वा य च ततः पाद्यादिभिरर्चयेत् ततो वरुणवाय्वोर्मध्ये अष्टादशपदं ध्यात्वा लिंगं तत्र त्र्यम्बकं स्था पयेत् ॐ एह्येहि देव श्रीत्र्यम्बकेश्वर गौर्य्या भवान्या सह पार्षदैरपि मदीययज्ञस्य शिवाय नूनं गृहाण पूजां भगवन्नमस्ते इति ध्यात्वा नमः सेनाभ्य इति मंत्रेण त्र्यंबकमावाह्य पूजयेत् नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्यो ऽरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्र हीतृभ्यश्च वो नमो नमो महद्भ्यो ऽअर्भकेभ्यश्च वो नमः ततः पाद्यादिभिः पूजनम् उत्तरवा

ध्यान्त रालेरुद्रादिगणान्स्थापयेत् कुमारञ्चतत्रैवस्थापयेत् भास्वत्कर्पूरगौरंगिरिवरतन
याप्राणनाथंमहेशंनानाभोगीन्द्रभूषंकलितशशिकलंपञ्चवक्त्रंत्रिनेत्रम् शक्तिंशूलंकपालं
सललितडमरुंबीजपूरंचसर्पान्खट्वाङ्गंचारुपद्माभयवरदयुतंधारयन्तम्भजेऽहम् इतिध्या
त्वा एषतेरुद्रभागइतिमन्त्रेणरुद्रानावाह्यपूजयेत् एषतेरुद्रभागःसहस्वस्राम्बिकयातञ्जु
षस्वस्वाहैषतेरुद्रभागः आखुस्तेपशुः यदक्रन्दइतिमन्त्रेणकुमारञ्चावाह्यअत्रैवपूजयेत्
यदक्रन्दःप्रथमंजायमानउद्यन्त्समुद्रादुतवापुरीषात्
ततःपाद्यादिभिर्द्वयोरर्चनम् ब्रह्मसोमयोर्मध्येवाप्याऋषभंस्थापयेत् ॐयज्ञोपवीति

सिंहस्थश्चैकवक्त्रश्चतुर्भुजः अक्षसूत्रं च बिभ्रत्कुंडिकां च प्रजापतिः इति ध्यात्वा ऋतवस्थेति
मंत्रेण ऋषभमावाह्य पूजयेत् ऋतवस्थेति मंत्रस्य विराड्ऋषिरनुष्टुप्छन्दः ऋषभो देवता ऋ-
षभावाहने विनियोगः

ततः पाद्यादिभिरर्चनम् तत्रैव शूलं महाकालं च नाममंत्रेणार्चयेत् ब्रह्मेशानयोर्मध्ये शं
स्थलायां महीं स्थापयेत् ॐ शुक्लवर्णा महीकार्या दिव्याभरणभूषिता चतुर्भुजा सौम्यवपुः
प्चंद्रासदृशाम्बरा इति ध्यात्वा मही द्यौरिति मंत्रेण महीमावाह्य पूजयेत् मही द्यौरिति मंत्र-
स्य मेधातिथिऋषिर्गायत्री छन्दः पृथ्वी देवता पृथिवीस्थापने विनियोगः मही द्यौः पृथिवी च

नद्रं सं युञ्जम्मिमिक्षताम् पिपृतान्नोभरीमभिः ततः पाद्यादिभिरर्चनम् ॥ प्रजापतेनत्वदेतिमंत्रे
णदक्षानावाह्यपूजयेत् ॥ प्रजापतेतिमंत्रस्याहिरण्यगर्भऋषिस्त्रिष्टुप्छन्दः शनैश्चरोदेवताशने
श्चरस्थापनेविनियोगः ॥ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहु
मस्तन्नोअस्तुवयंस्यामपतयोरयीणाम् २३।६५॥ शक्रेन्द्रमध्येवाप्यांदुर्गांस्थापयेत् एह्येहिदुर्गे
दुरितौघनाशिनिप्रचंडदैत्यौघभुजमहारिणि ॥ शिवमहेशार्द्धशरीरधारिणि स्थिराभवत्वंममय
ज्ञकारिणिइतिध्यात्वा ॥ श्रीश्चतइतिमंत्रेणदुर्गामावाह्यपूजयेत् ॥ श्रीश्चतइतिमंत्रस्यउत्तरना
रायणऋषिस्त्रिष्टुप्छन्दः दुर्गादेवतादुर्गावाहनेविनियोगः ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रे

पार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ३१।२२॥
ततःपाद्यादिभिरर्चनम् तत्रैवइदंविष्णुरितिमंत्रेणविष्णुमावाह्यपूजयेत्॥ इदंविष्णुर्विचक्रमेत्रे
धानिदधेपदम्।समूढमस्यपाꣳसुरेस्वाहा॥ ब्रह्माग्निमध्येशंखलायांस्वधांस्थापयेत् ॐपितॄ
णामपिदिव्यानांयाजिह्वात्वेनसंस्थिता वाग्धेनुस्तनरूपांतांस्वधामावाहयाम्यहम् इतिध्यात्वा
उदीरितामवरेतिमंत्रेणस्वधामावाह्यपूजयेत्॥ उदीरितामवरेतिमन्त्रस्यशंखशुक्रऋषिस्त्रिष्टुप्छ
पितृभ्यइत्यादिमंत्रेणवास्वधामावाह्यपूजनम् ॐपितृभ्यःस्वधायिभ्यःस्वधानमः पितामहेभ्यःस्वधायिभ्यःस्वधानमः प्रपितामहेभ्यःस्वधा
यिभ्यःस्वधानमः अक्षन्पितरोमीमदन्तपितरोतीतृपन्तपितरःपितरःशुन्धध्वम् १९।३६।३॥

न्दः स्वाधादेवतास्वधामावाहने विनियोगः

ततः पाद्यादिभिरर्च्चनम्॥ ब्रह्मयमयोर्मध्ये वाप्यां मृत्युं स्थापयेत् ॥ आत्मध्यानं नास्ति परं मृत्योरिति मंत्रेण मृत्युमावाह्य पूजयेत्॥ परं मृत्योरिति मंत्रस्य शंखशुक्र ऋषिस्त्रिष्टुप्छन्दः परं मृत्युर्देवता मृत्युत्र्यावाहने विनियोगः॥

ततः पाद्यादिभिरर्च्चनम्॥ ब्रह्मानिर्ऋतिमध्ये शृंखलायां गणपतिं स्थापयेत् ॐ गणेभ्यो हि विष्यवाधिप

आन्यवायोर्द्धमाशानामिति मंत्रस्य वा मृत्युमावाह्य पूजनम् आन्यवायोर्द्धमाशानामिति मंत्रस्य सुकेतु ऋषिर्जगतिछंदः मृत्युर्देवता मृत्युस्थापने विनियोगः आन्यवायोर्द्धमाशानां मृश्यो मयूरः सुवर्णस्त गन्धर्वाणामपाशुद्धो मासां कश्यपोरोहित्कुणड्डृणाचीगोल्ठान्ति कानेसरसां मृत्यवेसितः २४३७

नेसुरेंद्रब्रह्मादिदेवैरभिवन्द्यपाद गजास्यविद्यालयविश्वमूर्तेगृहाणपूजांभगवन्नमस्ते इतिध्यात्वा॥
गणानांत्वेतिमंत्रेणगणपतिमावाह्यपूजयेत्॥ ॐगणानांत्वेतिमंत्रस्यगृत्समदऋषिर्जगतीछन्दः
गणपतिर्देवतागणपत्यावाहनेविनियोगः ॐगणानान्त्वागणपतिꣳ हवामहेप्रियाणान्त्वाप्रि
यपतिꣳ हवामहेनिधीनान्त्वानिधिपतिꣳ हवामहेवसोमम। आहमजानिगर्भधमात्वमजासि
गर्भधम् ततःपाद्यादिभिरर्चनम् ब्रह्मवरुणयोर्मध्येवायव्यांकालंस्थापयेत् कालःकरालवदनो
नित्यमप्यतिभीषणः॥ पाशहस्तोदंडहस्तःसर्पहृश्चिकरोमवान् इतिध्यात्वा शन्नोदेवीतिमंत्रेण
कालमावाह्यपूजयेत् शन्नोदेवीतिमंत्रस्यअंबरीषसिंधुद्वीपऋषिर्गायत्रीछंदः आपोदेवता

आपावाहने विनियोगः ॐ शन्नोदेवीरभिष्टय आपोभवन्तुपीतये शंय्योरभिस्रवन्तुनः ३६
१२ ततःपाद्यादिभिरर्चनम् ब्रह्मवाय्वोर्मध्येशंखलायांमरुतंस्थापयेत् ॐ एह्येहि यज्ञेशसमी
क्षणायमृगाधिरूढःसहसिद्धसंघैः प्राणाधिपःकालकवेःसहायगृहाणपूजांभगवन्नमस्ते इ
तिध्यात्वा आनोनियुद्भिरितिमंत्रेणमरुतमावाह्यपूजयेत् आनोनियुद्भिरितिमंत्रस्य वशिष्ठऋ
षिस्त्रिष्टुप्छंदः मरुतोदेवता मरुतावाहने विनियोगः आनोनियुद्भिः शतिनीभिरध्वर ं सहस्रि
णीभिरुपयाहियज्ञम् वायो अस्मिन्त्सवनेमादयस्व यूयम्पातस्वस्तिभिःसदानः २७।२८
ततःपाद्यादिभिरर्चनम् ततोमध्यस्थानेब्रह्मणःपादमूलेभूमिंस्थापयेत् ॐ एह्येहि याता-

लधरामरेन्द्रनागांगनाकिन्नरगीयमान रक्षोरगेन्द्रामरलोकसंघैरनंतरसाध्वरमस्मदीय
म् इतिध्यात्वा स्योनापृथिवीतिमंत्रस्यमेधातिथिऋषिर्गायत्रीछन्दः भूमिर्देवता भूम्यावा
हनेविनियोगः स्योनापृथिवीनोभवान्नृक्षरानिवेशनीयच्छानःशर्म्मसप्प्रथाः ३६।१३ततःपा
द्यादिभिरर्चनम् तत्रैवमध्यस्थानेब्रह्मणःपादमूलेसप्तनदीःस्थापयेत् ॐ एह्येहिगंगेदुरितौ
घनाशिनिऋषारूढंबुदकुम्भहस्ते श्रीविष्णुपादाब्जसमुद्भवेत्वंपूजांगृहीतुंशुभदेनमस्ते इ
तिध्यात्वा इमंमेगंगेयमुनेइतिमंत्रेणसप्तनदीन्आवाह्यपूजयेत् इमंमेगंगेयमुनेइतिमंत्रस्य
सिंधुद्वियऋषिस्त्रिष्टुप्छन्दः सर्वानद्योदेवताः सर्वनद्यावाहनेविनियोगः इमंमेगंगेयमुनेसर

स्वतिशतद्रुस्तोमंसचतापरुष्ण्याया असिक्न्यमरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया
ततःपाद्यादिभिरर्चनम् ततोब्राह्मणःपादमूलेसप्तसमुद्रान्स्थापयेत् लवणेक्षुसुरासर्पिर्दधि
क्षीररसजीवनाः ॐ एह्येहियादोगणवारिधीनांगणेनपर्जन्यसहाप्सरोभिः विद्याधरेन्द्रा
मरगीयमानपाहित्वमस्मान्भगवन्नमस्ते इतिध्यात्वा समुद्रोसीतिमन्त्रेणसप्तसमुद्रानावा
ह्यपूजयेत् सप्तसमुद्रोसीतिमंत्रस्यप्रजापतिऋषिर्यजुश्छन्दः समुद्रोदेवता समुद्रावाहनेवि
नियोगः समुद्रोसिनभस्वानार्द्रदानुः शम्भूर्मयोभूरभिमावाहिस्वाहा मारुतोसिमरुतांगणः
शम्भूर्मयोभूरभिमावाहिस्वाहा वस्यूरसिदुवस्वाञ्छम्भूर्मयोभूरभिमावाहिस्वाहा १८।४५

ततः पाद्यादिभिरर्च्चनम् ब्रह्मरुद्रयोर्मध्ये । षड्दलवाह्ये परिस्त्वामेइतिमंत्रेणहेमान्यामेरवः
स्थाप्याः मध्ये । षड्दलमध्येत्र्प्राकृष्णेनेतिमंत्रेणरविमावाह्यपूजयेत् ॐ आकृष्णेनरजसावर्त्त
मानोनिवेशयन्नमृतंमर्त्यंच हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ३३।४३ ॐ
भूर्भुवः स्वः कलिंगदेशोद्भवकाश्यपगोत्रसूर्यइहागच्छेहतिष्ठसूर्यायनमः पाद्यादिभिरर्च्चनम्
ततोविश्वेदेवरुद्रयोर्मध्येएकादशपदरूपांनीलवर्णायां वल्यांइमंदेवाइतिमंत्रेणचंद्रमावाह्य
पूजयेत् इमन्देवा । असपत्न ७ सुवद्ध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहते जानराज्ज्यायेन्द्र
स्येन्द्रियायइममसुष्ष्यपुत्रममुष्ष्यैपुत्रमस्यैविश । एषवोमीराजासोमोस्म्माकम्ब्राह्मणानाछं

राजा १०।१८ ॐ भूर्भुवःस्वः यमुनातीरदेशोद्भव आत्रेयगोत्र चंद्र इहागच्छेहतिष्ठ चंद्रायनमः पा
द्यादिभिरर्चनम् ततोवसुविष्णुपक्षयोर्मध्येएकादशपदरूपायांवल्यांनीलायां अग्निर्मूर्द्धेतिमं
त्रेणभौममावाह्यपूजयेत् अग्निर्मूर्द्धादिवः ककुत्पतिःपृथिव्या अयम् अपाथ्ंरेताथ्ंसि
जिन्वति इन्द्रस्यत्वौजसासादयामि१३।१४ ॐ भूर्भुवःस्वः अवंतिदेशोद्भव भारद्वाजगोत्र भौ
मेहागच्छेहतिष्ठ भौमायनमःपाद्यादिभिरर्चनम् ततोदक्षादित्ययोर्मध्येएकादशपदात्मि
कायांनीलवल्यांउद्बुध्यस्वेतिमंत्रेणबुधमावाह्यपूजयेत् उद्बुध्यस्वाग्नेप्रतिजागृहीत्वमि
ष्टापूर्तेसथ्ंसृजेथामयञ्च अस्मिन्सधस्थे अध्युत्तरस्मिन्विश्वेदेवायजमानश्चसी

दत्त १५ ५४ ॐ भूर्भुवः स्वः मगधदेशोद्भव आत्रेयगोत्र बुध इहागच्छ इह तिष्ठ बुधाय नमः पाद्या
दिभिरर्चनम् ततो दक्षरुद्रयोर्मध्ये एकादशपदरेखायां नीलवल्ल्यां बृहस्पत इति मंत्रेण बृहस्पति
मावाह्य पूजयेत् बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच्छवस ऋ
तप्रजात तदस्मासु द्रविणं धेहि चित्रम् उपयामगृहीतोसि बृहस्पतये त्वैष ते योनिर्बृहस्प
तये त्वा २६।३ ॐ भूर्भुवः स्वः सिन्धुदेशोद्भव आङ्गिरसगोत्र बृहस्पते इहागच्छ इह तिष्ठ बृहस्पतये
नमः पाद्यादिभिरर्चनम् स्वधाशिवयोर्मध्ये एकादशपदरेखायां नीलवल्ल्यां अन्नात्परिस्रुत इति मं
त्रेण भृगुमावाह्य पूजयेत् अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः। ऋ

ऋतेनसत्यमिन्द्रियंविपानᳶशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु १८।७५ ॐ भू
र्भुवः स्वः भोजकटदेशोद्भव भार्गवगोत्र शुक्र इहागच्छ इह तिष्ठ शुक्राय नमः पाद्यादिभिर
र्चनम् ततोगन्धर्ववायव्योर्मध्येएकादशपदरूपा यांनीलवल्यां शन्नोदेवीतिमंत्रेणशनि
मावाह्यपूजयेत् शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये शंयोरभिस्रवन्तुनः ३६।१२ ॐ
भूर्भुवः स्वः सौराष्ट्रदेशोद्भवकाश्यपगोत्रशनेइहागच्छइहतिष्ठशनयेनमः पाद्यादिभिरर्च
नम् वसुविष्ण्वोर्मध्येएकादशपदरूपायांनीलवल्यां कयानश्चित्रेतिमंत्रेणराहुमावाह्यपू
जयेत् कयानश्चित्रऽआभुवदूतीसदावृधः सखा कयाशचिष्ठयावृता २६।४ ॐ भूर्भु

वः स्वः स्वराटिनदेशोद्भवपैठिनसिगोत्र राहो इहागच्छ इहतिष्ठ राहवेनमः पाद्यादिरर्च्चनम्
वसुसमीरयोर्मध्ये एकादशपदरूपायां नीलवल्यां केतुं कृण्वन्निति मंत्रेण केतुमावाह्य पू
जयेत् केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे समुषद्भिरजायथाः २८।३७ ॐ भूर्भुवः
स्वः अन्तर्वेददेशोद्भवपैठिनसगोत्र केतो इहागच्छ इहतिष्ठ केतवेनमः पाद्या…भिरर्च्चनम् न
तो मंडलाद्बहिः सत्त्वरजस्तमोरूपासु वप्रासु प्रथमादिक्रमेण इदं विष्णुरिति मंत्रेण विष्णुं
द्वितीये ब्रह्म यज्ञानमिति मंत्रेण ब्रह्माणं तृतीये या ते रुद्रेति मंत्रेण शिवं चावाह्य पूजये
त् इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पाᳪसुरे स्वाहा ५।१५ विष्णवेनमः

पाद्यादिभिरर्च्चनम् ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेन ऽआवः सबुध्न्या
ऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः १३।३ ब्रह्मणेनमःपाद्यादिभिरर्च्चनम् ॥
यातेरुद्रशिवातनूरघोरापापकाशिनी तयानस्तन्वाशंतमयागिरिशन्ताभिचाकशीहि
१६।२ रुद्रायनमःपाद्यादिभिरर्चयेत् तदनंतरंमंडलाद्बहिरेवपूर्वादिदिक्षुविदिक्षुचक्रमेण
वज्रादिपूजनम् पूर्वेवज्रायनमः आग्नेय्यांशक्तयेनमः दक्षिणेदण्डायनमः नैर्ऋत्यांखड्गा
यनमः पश्चिमेपाशायनमः वायव्येअंकुशायनमःउत्तरेगदायैनमः ईशानेशूलायनमः
नैर्ऋत्यवरुणयोर्मध्येपद्मायनमः ईशानइन्द्रयोर्मध्येचक्रायनमः इतिनाममन्त्रेणपूजनम्

तदनन्तरम् मंडलाद्बहिरेव प्राच्यादिदिक्षु ब्राह्म्यादिपूजनम् तथाहि० पूर्वे ब्राह्म्यैनमः आग्नेय्यां मा
हेश्वर्यैनमः दक्षिणे कौमार्य्यैनमः नैऋत्यां वैष्णव्यैनमः पश्चिमे वाराह्यैनमः वायव्ये इन्द्राण्यैनमः
उत्तरे चामुंडायैनमः ईशाने महालक्ष्म्यैनमः एवं क्रमेणैव गौतमादीनाम्पूजनम् गौतमायनमः अत्रये
नमः भरद्वाजायनमः विश्वामित्रायनमः कश्यपायनमः यमदग्नयेनमः वशिष्ठायनमः अरुन्धत्यै
नमः सर्वान्नाममंत्रेणपूजयेत् अथनाममंत्रेणापि लिङ्गतोभद्रस्थदेवतानामावाहनंपूजनंचो-
च्यते मध्ये ब्रह्मणेनमः ब्रह्माणमावाहयामि स्थापयामि उत्तरे सोमायनमः सोमंमा० ईशाने ईशा
नायनमः ईशानमा० पूर्वे इंद्रायनमः इन्द्रमा० आग्नेये अग्नयेनमः अग्निमा० दक्षिणे यमायनमः

यममा० नैर्ऋत्ये निर्ऋतयेनमः निर्ऋतिमा० पश्चिमे वरुणायनमः वरुणमा० वायव्ये वायवेनमः
वायुमा० उत्तरे कुबेरायनमः कुबेरमा० वायुसोमयोर्मध्ये वसुभ्योनमः वसूना० तत्रैव ध्रुवायनमः
अध्वरायनमः सोमायनमः अद्भ्योनमः अनलायनमः अनिलायनमः प्रत्यूषायनमः प्रभासा
यनमः सोमेशानयोर्मध्येरुद्रेभ्योनमः रुद्राना० इंद्रवंतं१ वीरभद्रं२ शम्भुं३ गिरीशं४ महायशसं५
अजं६ पिनाकिनं७ अहिर्बुध्न्यं८ कपालिनं९ दिशांपतिं१० गर्गं११ भुवनाधीशं तत्रैवावाह्यपूज
येत् ईशानेन्द्रयोर्मध्येसूर्यायनमः सूर्यमा० तत्रैव अरुणं१ सूर्यं२ वेदांग३ भानुं४ इंद्रं५ रविं६ गभ
स्तिम्७ अर्यमणं८ स्वर्णरेतसं९ दिवाकरम्१० मित्रम्११ विष्णुं चावाह्यपूजयेत् इन्द्राग्न्योर्मध्ये

चतुष्पदे भद्रेऽशिवाभ्यां नमः अश्विना० अग्नियमयोर्मध्ये चतुष्पदे भद्रे विश्वेभ्यो देवेभ्यो नमः वि-
श्वान्देवानावा० तत्रैव पितृभ्यो नमः पितॄना० यमनिर्ऋतिमध्ये चतुष्पदे भद्रे यक्षेभ्यो नमः यक्षाना०
निर्ऋतिवरुणयोर्मध्ये चतुष्पदे भद्रे सर्पेभ्यो नमः सर्पाना० वरुणवाय्वोर्मध्ये चतुष्पदे भद्रे गंधर्वाप्स-
रोभ्यो नमः गंधर्वाप्सरस्सा० वायुसोममध्ये द्वादशपदे कृष्णलिंगे सोमनाथाय नमः सोमनाथमा०
तस्मात्पूर्वे द्विपदांतरे द्वादशपदे कृष्णे मल्लिकार्जुनाय नमः मल्लिकार्जुनमा० सोमरुद्रमध्ये द्वा-
दशपदे कृष्णे महाकालाय नमः महाकालमा० द्वादशादित्यरुद्रयोर्मध्ये द्वादशपदे कृष्णे अमरेश्व-
राय नमः अमरेश्वरमा० तस्माद्दक्षिणभागे द्वादशपदे कृष्णे वैद्यनाथाय नमः वैद्यनाथमावाह०

इंद्राग्निन्योर्मध्ये ॥ द्वादशपदे कृष्णे भीमशंकरायनमः भीमशंकरमावाह० अग्नियमयोर्मध्ये ॥
द्वादशपदे कृष्णे रामेशायनमः रामेशमा० तत्पश्चिमे ॥ द्वादशपदे कृष्णे नागेशायनमः नागेशमा० य
मनिर्ऋतिमध्ये ॥ द्वादशपदे कृष्णे केदारायनमः केदारमा० निर्ऋतिवरुणयोर्मध्ये ॥ द्वादशपदे कृ
ष्णे घुश्मेशायनमः घुश्मेशमा० तदुत्तरे ॥ द्वादशपदे कृष्णे विश्वेश्वरायनमः विश्वेश्वरमा० वरुणवा
य्योर्मध्ये ॥ द्वादशपदे कृष्णे त्र्यंबकायनमः त्र्यंबकमा० तदुत्तरे व्याप्त्यां रुद्रादिगणेभ्योनमः रुद्रादि
गणाना० ब्रह्मसोमयोर्मध्ये वायव्यां ऋषभायनमः ऋषभमा० तत्रैव शूलायनमः महाकालायन
मः ब्रह्मेशानयोर्मध्ये शंखपालायां भूम्यैनमः भूमिमावा० तत्रैव दक्षेभ्योनमः द० ब्रह्मेन्द्रमध्ये वाप्यां

दुर्गायैनमः दु० तत्रैवविष्णवेनमः वि० ब्रह्माग्निमध्येशंखवल्लायांस्वधायैनमः स्व० ब्रह्मयमयो
र्मध्येवाप्यांमृत्यवेनमः मृ० रोगायनमः रोगं० ब्रह्मनिर्ऋतिमध्येगणपतयेनमः ग० ब्रह्मवरुणयो
र्मध्येवाप्यांकालायनमः का० ब्रह्मवाय्वोर्मध्येशंखवल्लायांमरुद्भ्योनमः म० ब्रह्मणःपादमूलेमध्ये
अनंतायनमः अ० तत्रैवमध्येसप्तनदीभ्योनमः न० ब्रह्मणःपादमूलेसप्तसमुद्रेभ्योनमः स० ब्रह्मरु
द्रमध्ये२ष्टदलवाप्यांहेमाद्रयेनमः हे० मध्येऽष्टदलपीतेसूर्यायनमःसू० मध्येएकादशपदवल्ल्यांचंद्रा
यनमः चं० वसुविष्णुपक्षयोर्मध्येएकादशपदवल्ल्यांभौमायनमः भौ० दक्षादित्ययोर्मध्येएकादशप
दवल्ल्यांबुधायनमः बु० दक्षरुद्रयोर्मध्येएकादशपदात्मिकायांवल्ल्यांबृहस्पतयेनमः बृ० स्वधाश्वि

न्योर्मध्येएकादशपदरूपायांवल्यांशुक्रायनमः शु० गंधर्ववाय्वोर्मध्येएकादशपदवल्यांशन्यैन
मः श० वसुविष्णुभूतायांमध्येएकादशपदवल्यांकेतवेनमः के० मंडलाद्बहिः प्रथमसत्वरूपायांप
प्रायांविष्णवेनमः वि० द्वितीयायांरजोगुणात्मिकायांत्रयायांब्रह्मणेनमः ब्र० तमोरूपायांतृतीया
यांरुद्रायनमः रु० मंडलाद्बहिरेवपूर्वादिक्षुविदिक्षुचवज्रायनमः आ० शक्तयेनमः द० दंडायनमः
नै० खड्गायनमः पश्चिमेपाशायनमः वा० अंकुशायनमः उत्तरेगदायैनमः ग० ईशानेशूलायनमः
नैऋत्यवरुणयोर्मध्येपद्मायनमः ईशानेंद्रयोर्मध्येचक्रायनमः एवंक्रमेणपूर्वेब्राह्म्यैनमः आ०
माहेश्वर्यैनमः द० कौमार्यैनमः नै० वैष्णव्यैनमः प० वाराह्यैनमः वायव्ये इंद्राण्यैनमः उत्तरेचामुंडा

थैनमः ईशानेमहालक्ष्म्यैनमः एवंक्रमेणैव पूर्वेगौतमायनमः आग्नेय्यामत्रयेनमः दक्षिणेभरद्वा
जायनमः नैऋत्येविश्वामित्रायनमः पश्चिमेकश्यपायनमः वायव्येयमदग्नयेनमः उत्तरेवशिष्ठा
यनमः ईशानेऽरुंधत्यैनमः ॥ ॥इतिद्वादशलिंगतोभद्रपूजनम् ॥ ॥

इतिश्रीगौडवंशोद्भवनान्दकचंद्रात्मजरामलालपंडितविरचितेप्रतिष्ठासंग्रहेमंडपमध्यवेदिपूजनप्रकारो
पवर्णनंनामाद्वितीयःकिरणः अथमूर्तिस्नानप्रकारोनिरूप्यते तत्रादौजलयात्राप्रकारोनिरूप्यते.

श्रीगणेशायनमः अथमंडपपूजनं तत्रादौभूम्यादीनांपूजनं तत्रपूर्वंयथाविधिनाग
णपतिंसंपूज्य अनंतरंपृथिव्यादीनांपूजनंकुर्यात् प्रक्षालितपाणिपादः शिखांबध्वाआच
म्यकुशोत्तरेयज्ञियदारुमयेआसनेप्राङ्मुखउपविश्यगणपतिंशिवंचनत्वादेशकालौसंकी
र्त्यकरिष्यमाणमंडपांगांनिर्विघ्नतासिद्ध्यर्थंपृथिवीकूर्मानंतादीनांपूजनमहंकरिष्ये एवंसंक
ल्प्य कूर्मपृष्ठोपरिस्थितां शुक्लवर्णांचतुर्भुजांशंखचक्रपद्मशूलधरांसुप्रसन्नांपृथिवींध्या
त्वापुष्पांजलिमादायावाहयेत् आगच्छसर्वकल्याणिवसुधेलोकधारिणीपृथिवी ब्रह्मदत्ता
सिकाश्यपेनाभिवंदिता रत्नाकरेविष्णुनात्वंधृताचाराहरूपिणाआगच्छवरदेधात्रियज्ञेस्मिन्सु

भदायिनी इतिभूमिमावाह्यभूम्यैनमः इतिपुष्पांजलिंक्षिपेत् ततोभूम्यैआसनंसमर्पयामि भू
म्यैपाद्यंस० भूम्यैअर्घ्यंस० भूम्यैआचमनंस० भूम्यैस्नानंस० भूम्यैपुनराचमनीयंस० भूम्यैचंदनंस० भू
म्यैपुष्पंस० भूम्यैधूपंस० भूम्यैदीपंस० भूम्यैनैवेद्यंस० भूम्यैपुनराचमनीयंस० प्रदक्षिणांस० एवंसंपू
ज्यसंस्तुत्यनमस्कुर्यात् शेषमूर्द्धिस्थितांरम्यांनानासुखप्रदायिनीं विश्वधात्रींमहापुण्यांविश्वस्य
जननींपरां यज्ञभागप्रतीच्छस्वरक्षार्थंप्रणमाम्यहं तवोपरिष्यामिमंडपंशुभलक्षणं क्षंतव्यंचतत्
यादेवीसानुकूलाभवभव भूमेत्वंरत्नगर्भासिसप्तसागरसंस्थिता बीजानीविविधानीहप्ररोहं
तिसदात्वयि नानाकर्मसुकुशलेपृशेषस्यशिरसिस्थिता धरणीकाश्यपीक्षोणीरसाविश्वंभराचमू ज

गत्प्रतिष्ठे वसुधे त्वं हि मातर्नमोस्तु ते उद्धृतासि वराहेण कृष्णेन शतबाहुना दंष्ट्राग्रे लीलया देवी य
ज्ञार्थं प्रणमाम्यहं मातर्भूमिरगान्माता सर्वाधारा हरिप्रिया भूयाम्य पुत्रैः पशुभिर्योनो द्वेष्टि सः स
भिधूतं निर्विघ्नं मम कर्मेदं यथा स्यात्त्वं तथा कुरु एवं संप्रार्थ्य स्वाभीष्टमानां भूमिं स्वीकृत्य दशाद्वा
दश चतुर्दश षोडशाष्टादश सहस्रान्यतममानमितं चतुरस्रं मंडपं विधाय पुनस्तमेव नवधा विभज्य
मंडपस्तंभखातस्थानानि निश्चित्य दर्भैः खातस्थानानि मार्जयेत् इदं मंडपचतुरस्रादिसंपादनं पूर्व
मेव विधायानंतरं तदंगपूजनमिति प्रयोगसौकर्यं स्योना पृथिवीति मंत्रस्य मेधातिथिऋषिः परउष्णि
क् छंदः पृथिवी देवता मार्जने विनि० स्योना पृथिवि नो भवानृक्षरा निवेशनी यच्छा नः शर्म सप्रथाः

३६।१३ इत्यनेनमंत्रेणसर्वाणिखातस्थानानिसंमार्ज्य सिञ्चतिपरिषिञ्चन्त्युक्षिञ्चन्ति पुनन्ति
चसुरायैव द्वौमदेकिन्वोद्वेदातिकृन्वः२७।२८अनेनमंत्रेणसर्वत्रपंचगव्यैः पंचामृतैःसिंचेत् सर्वत्रै
रगंधाद्यैःसंपूज्यअर्घ्यपात्रे जलपुष्पाक्षतानिकृत्वाहस्ताभ्यांपात्रमादायअर्घ्यंदद्यात् तत्रमंत्राः वसुधेपू
जितासित्वंविष्णुनाशंकरेणच पार्वत्याचैवगायत्र्यास्कंदवैश्रवणादिभिः इंद्राद्यैःपूजितासित्वसधर्मावि
जिगीषया सौभाग्यंदेहिपुत्रांश्चधनंधान्यंशुभांप्रीतिं गृहाणार्घ्यमिमंदेविकर्मसिद्धिंप्रयच्छमे इत्यर्घ्यंदत्वा
पुष्पांजलिमादाय उपचारानिमांस्तुभ्यंददामिपरमेश्वरी भक्त्यागृहाणदेवेशित्वामहंशरणागतः ततःपा
यसायूपसत्त्वादिद्रव्यंपात्रेकृत्वासंस्थाप्यसपरिवारायैभूम्यै इमंबलिंसमर्पयामिनमस इतिबलिंदद्यात्

ततःखनित्रपूजा त्वष्ट्राविनिर्मितःपूर्वंलोकानांहितकाम्यया पूजितोसिखनित्रत्वंसिद्धिदोभवमेधुना ततःसूत्रा
धारंसंपूज्य नमामिविश्वकर्माणंसर्वसूत्रप्रवर्त्तकं मंडपादिप्रसिध्यर्थंसर्वसिद्धिसमृद्धिदं अंगुलनिर्माणंपूज
येत् अंगुलादिप्रमाणार्थंनिर्मितोविश्वकर्मणा अतस्त्वांपूजयामीहमंडपेष्टंप्रसाधय ततःखननांगमाधारश
क्त्यादीनांपूजनं आधारशक्त्येनमः कूर्मायनमः अनंतायनमः पृथिव्यैनमः वास्तुपुरुषायनमः स्वस्वदिक्षुइं
द्रादीन्पूजयेत इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० कुबेराय० ईशानाय० अनंताय० ब्रह्मणे० ततो
बलिमुपनीयवास्तुपुरुषायेमंबलिंस० द्वितीयंबलिमुपनीयइंद्रादिदिक्पतिभ्य इमंबलिंसमर्पयामि ततःपृथि
व्यैपुष्पांजलिः त्वंदेविखननार्थैतुपूजांगृहाणमेमखे पूजनाच्छेषकूर्मार्भ्यांशुद्धांवृद्धिंप्रयच्छमे ततः समाचा

रात्तिलकं आशिषो नैगमाः ततो मध्यस्तंभचतुष्टयांतरा इष्टकाभिर्वेदिः कार्या तत्रेष्टकानां पूजापूर्वकं प्रार्थना य
था पूजासाधनसामग्रीमानीयोपविश्याचम्य प्राणानायम्य देशकालौ संस्मृत्वा इष्टकादिभिर्वेदिकरणार्थं इष्टकानां
प्रार्थनापूर्वकं पूजनमहं करिष्ये इति संकल्प्य पुष्पांजलिः स्थः सन् प्रार्थयेत् नंदिनी देवि वासिष्ठे वसुभिः पूजिता
सती जये भार्गवदायादे प्रजानां जयमावह पूर्णे गिरिशदायादे पूर्णकामान् कुरुष्व मे भद्रे काश्यपदायादे कुरु भद्रां
मतिं मम प्रजापतिसुते देवि चतुरस्रे महीसुते सुभगे सुव्रते देवि गृहे भार्गव रम्यतां अव्यंगे चाक्षते पूर्णे नमोस्त्वंगि
रसः सुते इष्टदेव प्रतिष्ठा सुत्वां प्रतिष्ठापयाम्यहं देशाधिप पुर क्षेत्र गृहस्वामि सुसौख्यदा मनुष्यपशुहस्त्यश्वधन
वृद्धिकरी भव इति संप्रार्थ्य चंदनादिभिः संपूज्य नैवेद्यादि बलिदानांतं कुर्यात् अथ पूर्वोच्चारिततिथौ इष्टका

नांपूजनकृतस्यविधेः संर्वपरिपूर्णमस्तु ततोवेदिकोणेषुइष्टकाप्रक्षेपः ततस्तांचतुरस्त्रांसमांवेदिं विस्तारात्रिः
चतुःपंचसप्तनवैकादशान्यतमभागोच्छितांविदध्यात् मंडपस्येशानभागेहोमानुसारेणयथेक्तंकुंडंकार्य्यंईशानभा
गेचेद्वेदितदामध्यभागेकुंडं ततोयजमानोपमंडपस्यपश्चिमद्वारेप्राङ्मुखउपविश्यगुरुगणपतिशिवान्नत्वादेश
कालौसंकीर्त्यश्रीमहारुद्रप्रीतयेमंडपस्तंभद्वारतोरणात्रिशूलदिक्पालध्वजपताकावेदिस्तंभानांस्थापनप्रतिष्ठा
पूर्वकंपूजनमहंकरिष्ये ततोमध्यवेद्यामाग्नेयादिस्तंभचतुष्टयेपुनस्तथैववाह्यवेद्यामाग्नेयादिद्वादशस्तंभेषुस्योना
पृथिवीतिखननं स्योनापृथिवीनोभवानृक्षरानिवेशनी यच्छानःशर्म्मसप्रथाः ३६। १३ ततःसिंचंतीत्यनेनज
लसेकः सिञ्चन्तिपरिषिञ्चन्त्युत्सिञ्चन्तिपुनन्तिच सुरायैवभ्रवैमदेकिन्त्वोवदतिकिन्त्वः २०।२८ ततोदधिकाण्व-

इतिदधिसेचनम् दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः सुरभिनोमुखाकरत्प्रणऽआयूंषितारिष
त् २३।३२ ततः धानावंतइतियवप्रक्षेपः(धानावन्तङ्करम्भिणम्) धानावन्तङ्करम्भिणमपूपवन्तमुक्थिनम् इन्द्रप्रा
तर्जुषस्वनः २०।२९ हिरण्यगर्भ इतिहिरण्यम् हिरण्यगर्भःसमवर्त्तताग्रे भूतस्यजातः पतिरेकऽआसीत् ।सदा
धारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम १३।४ काण्डात्काण्डादितिदूर्वाप्रक्षेपः। काण्डात्काण्डात्प्ररो
हन्ती परुषः परुषस्परि एवानोदूर्वेप्रतनुसहस्रेणशतेनच १२।२० उर्ध्वऊषुणःइतिस्तम्भरोपणम् उर्ध्वऊषु
णः उर्ध्वऊषुणऽऊतयेतिष्ठादेवोनसविता ऊर्ध्वोवाजस्यसनितायदञ्जिभिर्वाघद्भिर्विह्वयामहे १०।४२ व
सोःपवित्रमसीतिस्तम्भसूत्रबंधनम् वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम्।देवस्त्वास

वितापुनातुवसोः पवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ १३ ॥ एवमेवसर्वेषांषोडशस्तंभानांस्थापनं ततोमध्य
स्तंभचतुष्टयमाग्नेयादितत्तन्नामभिः स्थापयामि ॥ आग्नेय्यांविजयंस्थापयामि नैर्ऋत्यांकेदारंस्थापयामि वा
यव्यांश्रीमंतंस्थापयामि ॥ ऐशान्यांशुभद्रंस्थापयामि बाह्यवेद्यामग्न्याग्नेयादिक्रमेणैवस्थापनं आग्नेय्यांध
नदंस्थापयामि कल्याणंस्था॰ शुभंस्था॰ शांतंस्था॰ मनोरमंस्था॰ ऋद्धिंस्था॰ सिद्धिंस्था॰ विचित्रंस्था॰ महा
यशसंस्था॰ मंगलंस्था॰ गुणंस्था॰ जयंस्था॰ एवंषोडशस्तंभान्संस्थाप्य ततोग्निमीळेइतिमंत्रेणब
हुमंगलनामानं पूर्वद्वारंस्थापयामि अग्निमीळेपुरोहितं यज्ञस्यदेवमृत्विजम् अग्निं होतारंरत्न
धातमम् इषेत्वेतिमंत्रेण धर्मिष्ठानामानं दक्षिणद्वारंस्थापयामि इषेत्त्वोर्ज्जेत्त्वावायवस्थदेवोवः सवि

तापआर्पयतुश्रेष्ठतमायकर्म्मणे॥ ऽआप्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽई
शतमाघशᳬ सोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि १।१ अग्नऽआयाहिवीतये इतिज
यसाभिधंपश्चिमद्वारंस्थापयामि अग्नऽआयाहिवीतयेगृणानोहव्यदातयेनिहोतासत्सिबर्हिषि शन्नोदेवी
रितिमंत्रेणकल्याणनामानं उत्तरद्वारंस्थापयामिशन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये शंय्योरभिस्रवन्तु
नः ३६।१२ एवंद्वाराणिसंस्थाप्य एभिरेवमंत्रैश्चतुर्द्दिक्षुतोरणानिस्थापयेत् पूर्वेसुभद्रनामकंअश्वत्थंतोरणं
स्थापयामि तस्यमस्तकेमंगलाख्यंवैष्णवंत्रिशूलंस्थापयामि एवंदक्षिणेविकटाख्यंऔदुंबरंतोरणंस्था
पयामि तस्यमस्तकेशत्रुघ्ननामकंरौद्रंत्रिशूलंस्थापयामि पश्चिमेभीमाख्यंप्लाक्षंतोरणंस्थापयामि तस्य

मस्तके पुत्रमदनामानं ब्राह्म्यं त्रिशूलं स्थापयामि उत्तरे सुप्रभाख्यं वटतोरणं स्थापयामि तस्य मस्तके उ
त्तमाभिधं सौम्यं त्रिशूलं स्थापयामि एवं तोरणानि संस्थाप्य वेदिनां स्थापनं कुर्यात् मध्यवेदिं शिवप्रदां स्था
पयामि एवमेवापरवेदिनामपि स्थापनं ज्ञेयम् अनंतरं पूर्वादिदिक्षु ब्रह्मविष्णुरुद्रदेवांश्च पूजयेत् पूर्वे ब्रह्म
यज्ञानमिति मंत्रेण ब्रह्माणमावाह्य पूजयेत् ब्रह्म यज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः स
बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः १३।३ दक्षिणे इदं विष्णुरिति मंत्रेण विष्णुमावा
ह्य पूजयेत् इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पांसुरे स्वाहा ५।१५ पश्चिमे त्र्यंबकमिति
मंत्रेण रुद्रमावाह्य पूजयेत् त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् उर्वारुकमिव बन्धनान्मृत्योर्मुक्षी

युमामृतेः ३।६० एवंरुद्रंसंपूज्यप्रार्थयेत् पंचवक्त्रवृषारूढत्रिलोचनसदाशिव चंद्रमौलेमहादेवमम स्वस्तिकरोभव ततोदेवमंत्रेण देवानावाह्यपूजयेत् ततः आधार इतिमंत्रेणआपआवाह्यपूजयेत् आधारःसर्वभूतानामायोजीवनहेतवः प्रवर्त्तंतेशुभंयांतिस्तादेव्यःशुभदास्तुनः ततोइष्टकाइष्टकादेवतानावाह्यपूजयेत् तासांअभिधानानि पूर्वस्यांशिवांस्थापयामि इन्द्रायनमः आग्नेय्यांगंगांस्थापयामि अग्नयेनमः दक्षिणेमहापुण्यांस्थापयामि यमायनमः नैर्ऋत्यांविशालांस्थापयामि निर्ऋतयेनमः पश्चिमेसरस्वतींस्थापयामि वरुणायनमः वायौतुष्टिंस्थापयामि ईशानायनमः एवंसांगं मंडपस्थापनंकृत्वाऋत्विग्भिराचार्येनसहितोयजमानोगृहस्तंशांतिसूक्तंपठन् पश्चिमद्वारेस्थित्वा चतुर्भुजांशु

कुवर्णां कूर्म्मपृष्ठोपरिस्थितां पद्मशंखचक्रशूलधरां सुप्रसन्नां ध्यात्वा आगच्छ सर्वकल्याणि वसुधे लो
कधारिणी पृथिवी ब्रह्मदत्तासि काश्यपेनाभिवंदिता उद्धृतासि वराहेण कृष्णेन शतबाहुना दंष्ट्राग्रे-
लीलया देवि यज्ञार्थं प्रणमाम्यहं इत्यर्घ्यं दत्वा कलशं गृहित्वा गीतवाद्यादीनां सह भद्रं कर्णेभिरित्यादि
मंत्रं पठन् मंडपं प्रदक्षिणीकृत्य तेनैव पश्चिमद्वारेण मंडपं प्रविशेत् भद्रं कर्णेभिः शृणुयाम देवा भ
द्रं पश्येमाक्षभिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः २५।२१ ततः
आचार्यः सर्षपानादाय अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशं सर्वेषामविरोधेन ब्रह्मकर्म समार
भेत् पूर्वे रक्षतु गोविंदः आग्नेय्यां गरुडध्वजः याम्यां रक्षतु वाराही नारसिंहस्तु नैर्ऋते वारुण्यां केश

वोरक्षेद्वायव्यांमधुसूदनः उत्तरेश्रीधरोरक्षेदीशानेतुगदाधरः ऊर्ध्वंगोवर्धनोरक्षेदधस्ताच्चत्रिविक्रमः
एवंदशदिशोरक्षेद्वासुदेवोजनार्दनः शंखोरक्षतुयज्ञाग्रेपृष्ठेरक्षस्तथैवच वामपार्श्वेगदारक्षेद्दक्षि
णेतुसुदर्शनः ब्रह्माणंमाधवोरक्षेत्वाचार्यंपातुमाधवः अच्युतोवतुऋग्वेदंयजुर्वेदमधोक्षजः कृष्णो
थसामगंरक्षेदाथर्वकंचमाधवः उपद्रष्टानुयोविप्रःतंरुद्रोवतुसर्वदा यजमानंसपत्नीकंकमलाक्ष
श्चरक्षतु रक्षाहीनंतुयत्स्थानंतत्सर्वंरक्षताद्धरिः वेदमंत्रैश्चकर्तव्यारक्षासूत्रैश्चसर्षपैः गणानांत्वागु
णपतिर्ठ॰हवामहे प्रियाणांत्वाप्रियपतिर्ठ॰हवामहेनिधीनांत्वानिधिपतिर्ठ॰हवामहेवसोमम आहम
जानिगर्भधमात्वमजासिगर्भधम् २३।१८ ओंजातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः सनः

पर्षतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः इत्युक्त्वासर्षपान्विकीर्य देवाआयांतुयातुधानाअपयांतु-
विष्णोदेवयजनंरक्षस्वेति रक्षांकृत्वा पंचगव्येनमंडपप्रोक्षणंकुर्यात तत्क्रमः गायत्र्यागोमूत्रेणप्रोक्ष
णं ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् ३६।३ गंधद्वारामिति
गोमयेनप्रोक्षणं गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् आप्या
यस्वेतिक्षीरेणप्रोक्षणं आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे १२।
११२ दधिक्राव्णेतिदध्नाप्रोक्षणं दधिक्राव्णोअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमु-
खाकरत्प्रणआयूंषितारिषत् २३।३२ शुक्रमसीत्याज्येनप्रोक्षणं शुक्रमसिचन्द्रमस्यमृतमसि

वैश्वदेवमसि ४।१८ देवस्यत्वेतिकुशोदकेनप्रोक्षणं देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहु-
भ्यांपूष्णोहस्ताभ्याम् सरस्वत्यै वाचोयन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि १८।३७ ततो
अंजलौपुष्पानादाय ब्रह्माद्यास्तंभदेवायेद्वारतोरणसंस्थिताः पताकासुचयेदेवाध्वजायेषुचसंस्थि
ताः आवाहयामितान् सर्वान् यज्ञरक्षार्थहेतवे गृह्णंतुपूजनंसर्वेक्रतुरक्षंतुसर्वतः इतिमंत्रंपठित्वा
अस्मिन्मंडपेस्तंभद्वारतोरणत्रिशूलपताकाध्वजानांदेवानावाहयामित्यावाह्य अक्षतानादाय म
नोजूतिरितिमंत्रेण मंडपप्रतिष्ठांकुर्यात् मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनो
त्वरिष्टंयज्ञꣳसमिमंदधातु विश्वेदेवासइहमादयन्तामो३म्प्रतिष्ठ २।१३ ततोद्यसमस्तपुण्य

प्रतिष्ठा कालावयवयोगेषु एवं ग्रहगुणविशेषणविशिष्टायां तिथौ अस्मिन्मंडपस्तंभद्वारतोरणत्रिशूलपता-
९ काध्वजानां देवास्तत्रतत्र सुप्रतिष्ठितावरदाभवंतु इति अक्षतान् प्रक्षिपेत् ततो मध्यवेदिकास्थपीठे
कलशं संस्थाप्य अंबिकासहितं श्रीरुद्रं षोडशोपचारैरभ्यर्च्य मंडपस्तंभदेवानां पूजनं कुर्यादिति केचित्
वस्तुतस्तु मंडपपूजनानंतरं वेद्यादिदेवानां पूजनं तदनंतरं मध्यवेदिस्थकलशोपरि प्रधानदेवतापूजनं विशे-
षम् ४ टि षोडशोपचार पूजनप्रकारस्तु वेदोक्तमार्गेण पुराणोक्तमार्गेण च प्रदश्यते आवोदे-
वासऽईमहे वामम्प्रयत्यध्वरे ॥ आवोदेवासऽआशिषोयज्ञियासोहवामहे ४।५ इत्यनेन मंत्रेणावा- ९
हनम् ॥ एषोह देवः प्रदिशोनुसर्वाः पूर्वोहजातः सऽउगर्भेऽअन्तः सऽएवजातः सजनिष्यमाणः

प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ३२।४ इत्यनेन देवस्य सम्मुखकरणम् पुरुषऽएवेदꣳ सर्वं यद्भू
तं यच्च भाव्यम् उतामृतत्वस्येशानो यदन्नेनातिरोहति ३१।२ इत्यनेन पाद्यम् एतावानस्य महिमा
तो ज्यायाँश्च पूरुषः पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि ३१।३ इत्यनेनार्घ्यम् वरु
णस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्यऽऋतसदन्न्यसि वरुणस्यऽऋतसद
नमसि वरुणस्यऽऋतसदनमासीद ४।३६ इत्यनेन स्नानम् पयः पृथिव्याम्पयऽओषधीषु पयो दि
व्यन्तरिक्षे पयो धाः पयस्वतीः प्रदिशः सन्तु मह्यम् १८।३६ इत्यनेन मन्त्रेण पयःस्नानम् ततः शु
द्धोदकेन स्नानम् दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः॥ सुरभिनो मुखाकरत्प्रणऽआ

आयूᳬषि तारिषत् २३। ३२ इत्यनेन दधिस्नानम् पुनर्वरुणस्येत्यनेन शुद्धोदकेन स्नानम् घृतङ्
घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा दिशः प्रदिशऽआदिशो-
विदिशऽउद्दिशो दिग्भ्यः स्वाहा ६। १९ इत्यनेन घृतस्नानम् पुनस्तथैव शुद्धोदकेन स्नानम् अपा-
ᳬरसमुद्वयसᳬ सूर्य्ये सन्तᳬ समाहितम् अपाᳬरसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृही-
तोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ९। ३ इत्यनेन शर्करास्नानम् पुनः शुद्धोद-
कस्नानम् मधुवाताऽऋतायते मधु क्षरन्ति सिन्धवः॥ माध्वीर्न्नः सन्त्वोषधीः १३। २७ इत्यनेन मधुस्ना-
नम्॥ पुनस्तथैव शुद्धोदकस्नानम्॥ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः सरस्वती तु पञ्चधा सो दे

शोभेवत्सरित् ३४।११ इत्यनेनपञ्चामृतस्नानम् पुनः पूर्ववत्शुद्धोदकस्नानम् ब्रह्मयज्ञानम्प्रथम
म्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः १३
३ इत्यनेनयज्ञोपवीतम् वसोः पवित्रमसिद्यौरसिपृथिव्यसिमातरिश्वनोघर्मोसिविश्वधाऽअसि
परमेणधाम्नादृꣳहस्वमाह्वार्म्मातेयज्ञपतिर्ह्वार्षीत् १।२ इत्यनेनवस्त्रम् ॥ युञ्जन्तिब्रध्नमरुषञ्चर
न्तम्परितस्थुषः रोचन्तेरोचनादिवि २३।५ युञ्जन्त्यस्यकाम्याहरीविपक्षसारथे शोणाधृष्णूनृवा-
हसा २३।६ आभ्यांमन्त्राभ्यांगन्धम् अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत अस्तोषतस्वभानवोवि-
प्रानविष्ठयामतीयोजान्विन्द्रतेहरी ३।५१ इत्यनेनाक्षतान् श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वे

नक्षत्राणिरूपमश्विनौव्यात्तम् इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ३१।२२ इत्यने
नपुष्पम् ॥ नमोबिल्मिनेचकवचिनेचनमोवर्म्मिणेचवरूथिनेचनमः श्रुतायचश्रुतसेनायच
नमोदुन्दुभ्यायचाहनन्न्यायचनमोधृष्णवे १६।३५ इत्यनेनबिल्वपत्रम् काण्डात्काण्डात्प्ररोहन्ती
परुषःपरुषस्परि एवानोदूर्वेप्रतनुसहस्रेणशतेनच १३।२० इत्यनेनदूर्वाम् धूरसिधूर्वधूर्वन्त
न्धूर्वतंयोस्मान्धूर्वतितन्धूर्वयंवयन्धूर्वामः देवानामसिवह्नितमꣳसस्नितमम्पप्रितमञ्जुष्ट
तमन्देवहूतमम् १।८ इत्यनेनधूपन ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहासूर्योज्योतिर्ज्योतिः
सूर्यःस्वाहा अग्निर्वर्च्चोज्योतिर्वर्च्चःस्वाहासूर्योवर्च्चोज्योतिर्वर्च्चःस्वाहा ज्योतिःसूर्यः

सूर्य्योज्ज्योतिः स्वाहा ३।८ इत्यनेनदीपम् ॥ यजमानहस्तप्रक्षालनंचदीपदानानंतरंकर्तव्यम् ॥
नाभ्याऽआसीदन्तरिक्षꣳ शीर्ष्णोद्यौः समवर्तत ॥ पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथालोकाँ२ ॥ ऽअ
कल्पयन् ३१।१३ इत्यनेननैवेद्यम् यत्पुरुषेणहविषादेवायज्ञमतन्वत वसन्तोस्यासीदाज्यं
ग्रीष्मऽइध्मः शरद्धविः ३१।१४ इतिमंत्रेणाचमनम् याः फलिनीर्य्याऽअफलाऽअपुष्पाया-
श्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः १२।८९ इत्यनेनपूगीफलम् हिरण्य
गर्ब्भः समवर्त्तताग्ग्रे भूतस्यजातः पतिरेकऽआसीत् सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहवि
षाविधेम १३।४ इत्यनेनदक्षिणाम् येतीर्थानिप्प्रचरन्ति सृकाहस्तानिषङ्गिणः तेषाꣳ सहस्र

योजुनेवुधन्वीनितन्वासि १६।६१ इत्यनेनप्रदक्षिणां यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणि
प्रथमान्यासन् तेहनाकम्महिमानःसचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः ३१।१६ इत्यनेनपुष्पांजलि
नंदद्यात् अथपुराणोक्तरित्यापिपार्वतीसहितंरुद्रपूजनमुच्यते पृथक्पृथक्स्थापनीयंकलशेप्रतिमाद्व
यं आपोहिष्ठादिभिर्मंत्रैस्तथात्र्यम्बकैरपि अभिषिच्यप्रयत्नेनपूजयेत्प्रतिमाद्वयं ध्यायेत् ततोमहा
देवमुमादेहार्धधारिणं मुक्तामालापरीतांगंदुकूलपरिवेष्टितं पञ्चाननमुमाकान्तमनलेन्दुरविप्रभं
चंद्रार्धशेखरंनित्यंजटामुकुटमण्डितं त्रिपुंड्रलेखाविलसद्भालभागमनामयंभस्मोद्धूलितसर्वांगंरुद्रा
क्षाभरणान्वितं मन्दस्मितमनाधारमाधारंजगतांप्रभुं देवैरनन्तैरनिशंस्तूयमानमनेकधा देवात्मकं

देववन्द्यंविष्णुब्रह्मादिवंदितं विष्णुनेत्रार्चितारक्तपादपङ्कजमुत्तमं अप्रतिछन्दमछन्दंसर्ववृन्दारका
र्चितं सर्वोत्तममनाद्यन्तंसर्वदेवनिवेदितं सत्यंरुद्रंपरब्रह्मपुरुषंकृष्णपिंगलं ऊर्द्ध्वरेतंविरूपाक्षंविश्वरू
पंचिदात्मकं निष्कलंनिर्गुणंशान्तंनिरवद्यंनिरंजनं अप्रमेयंजगन्मध्येस्थितिसंहारकारणं विश्वबा
हुंविश्वपादंविश्वाक्षंविश्वभूभुवं विश्वंनारायणाराध्य मक्षरंपरमंपदं विश्वतःपरमंनित्यंविश्वस्येशा
मनामयं एवंध्यात्वामहादेवंसर्वदेवोत्तमोत्तमं ध्यायेत्ततःपरंगौरीमादिविद्यामनामयां ॥ लक्ष्मीसे
वितपादाब्जांशचीसेवितपादुकां सरस्वत्यादिभिर्नित्यंस्तूयमानपदाम्बुजां अधरोष्ठाधरीभूतपक्क
बिम्बफलामुमां मुखकान्तिकलोपेतपूर्णचंद्रमनामयं तिरस्कृतालिमालांतामलकावलिभिः सदा

पीनवक्षोजनिर्भूतचक्रवाकवरांगनां निरंतिरस्कृतांभोजांनयनाभ्यामानिन्दितां सीमन्ताधिकृताशेष
कामभङ्गामहर्निशां भ्रूकुटीकृताशेषकामभङ्गमनाकुलां बाहुनालकलोद्भूतहेममालाविलासिनीं रो
मावलितिरोभूतभ्रमलभ्रमरालिकां नाभिरन्ध्रतिरोभूतनद्यावर्तसुवर्तुलां उन्नमोरुतिरोभूतरंभास्त
म्भांशुभावहां पादयुग्मप्रभाकान्तिनिर्जितारुणपङ्कजां ब्रह्मेंद्रोपेन्द्रजननींमहेशार्द्धांगभागिनीं महे-
शाश्लिष्टवामांगांवरदाभयदांसदा प्रसन्नवदनांशान्तांस्मितपूर्वाभिभाषिणीं पूर्णचन्द्रदुकूलाद्यांनाना
भरणभूषितां स्तूयमानांसदादेवैर्यज्ञैर्दानैश्चकोटिशः एवंध्यात्वाततःसम्यक्उपचारान्प्रकल्पयेत् ततः
पुष्पाणिसंगृह्यशिवमावाहयेच्छिवां महादेवदयासिंधोविष्णुब्रह्मादिवंदिते आवाहयामिदेवत्वांप्रसी

दपरमेश्वर लक्ष्म्यादिदेववनितापरिसेवितसुपादुके आवाहयामिदेवित्वांप्रसीदपरमेश्वरि इत्या
वाहनम् गृहाणसोमविश्वात्मन्नासनंरत्ननिर्मितं अनन्तासनविश्वेशकरुणासागरप्रभो उमेसोमध
राश्लिष्टेसामार्धकलशेश्वरे नानारत्नसमाकीर्णमासनंप्रतिगृह्यतां आसनं पाद्यंगृहाणगौरीशहेमपा
त्रस्थितंनवं गृहाणदेविपाद्यंत्वंवेदवेदाङ्गसंस्कृते पाद्यं अर्घ्यंगृहाणदेवेशसपुष्पंगन्धसंयुतं शिवानन्त
गुणग्रामसर्वाभीष्टप्रदायक गृहाणार्घ्यंशिवेनित्यंसर्वावयवशोभिनि शिवप्रियेशिवाकारेनित्यंभक्तवर
प्रदे अर्घ्यं गृहाणाचमनंशम्भोशुचिर्भूतंशिवप्रियः गृहाणाचमनंदेविशुचिर्भूतेशिवप्रिये आचमनं
मधुपर्कंगृहाणेशसर्वदामधुपर्कद मधुपर्कप्रदानेनप्रीतोममहेश्वर मधुपर्कमिदंदेविस्वीकुरुप्रियशा

ङ्करे मधुपर्कप्रदानेनसुप्रीताभवशोभने मधुपर्कं शंभो पञ्चामृतस्नानंस्वीकुरुष्वकृपानिधे सर्वतीर्थम
यंस्नानंनित्यशासनपावन शिवेपंचामृतस्नानंस्वीकुरुष्वसदाप्रिये सृष्टितीर्थोत्तमेशुद्धेतीर्थराजनिषेवि
ते पंचामृतस्नानं शंभोःशुद्धोदकस्नानंस्वीकुरुष्वसुरोत्तम प्रसीदपरमंभक्तंपाहिमांकरुणानिधे शि
वेशुद्धोदकस्नानंस्वीकुरुष्वशिवप्रिये प्रसीददेविदीनोहंपाहिमांशरणागतं स्नानं सोत्तरीयंगृहाणे
शदुकूलमिदमुत्तमम् पाहिमांकृपयादेवकरुणाकरशङ्कर सोत्तरीयंगृहाणेदंदुकूलंशंकरप्रिये प्र-
सीदपाहिमांदीनमनन्यशरणांशिवे वस्त्रं उपवीतंगृहाणेशशंभोसर्वामरोत्तम उपवीतंगृहाणत्वंशि
वसंश्लिष्टविग्रहे उपवीतं गृहाणचंदनंरम्यंसुगंधेनविराजितं प्रसीदपार्वतीनाथशरणागतवत्सल

गृहाणचंदनंदेविचंद्रभागविराजितं विश्वविश्वात्मकेपाहि विश्वनाथप्रियेसदा गंधं रक्तचंदनसंमि
श्रैरक्षतैःपूजयाम्यहं सर्वभूतहितार्थायभूताध्यक्षायतेनमः इत्यक्षतानि गृहाणाभरणानीशानिराशान
यमाश्रयं विश्वाभरणविश्वेशरत्नाभरणभूषितं गृहाणाभरणान्येवसर्वाभरणभूषिते सर्वप्रियेजग
द्वंद्येजगदानंददेशिवे आभरणानि गृहाणबिल्वपत्राणिसमोदानिशिवप्रिये सुगन्धबिल्वमन्दारम
लिकासमलंकृते बिल्वपत्राणि दशांगंगुग्गुलंधूपंसगोघृतमनुत्तमं गृहाणपार्वतीनाथप्राणतर्पणा-
मादरात् दशांगंगुग्गुलंधूपंसद्योघृतमनुत्तमं गृहाणभक्तवरदेलक्ष्मीदेव्यादिसेविते धूपं कार्पासव
र्तिसंयुक्तंगोघृतेनसमन्वितं गृहाणचन्द्रसूर्याग्निप्रभाधामनमोस्तुते साज्यन्तिवर्तिविस्फुर्तिदीपमीशानव

ल्पुषा गृहाणचंद्रसूर्याग्निमण्डलादिकसुप्रभे दीपं शंभोगोघृतसंयुक्तंपरमान्नंमनोहरं सशर्करंगृहाणेशां
वेपरमान्नप्रदायिनि नैवेद्यं शंभोगृहाणगंधाद्यमिदमाचमनीयकं कृताचमनदेवेशस्वतःशुद्धशिवापते शि
वेगृहाणगन्धाद्यमिदमाचमनीयकं शुद्धेशुद्धिप्रदेदेवीशिवभूषितविग्रहे आचमनीयं शंभोगृहाणतांबूलं
युगकर्पूरसंयुतं,प्रसीदभगवन्शंभोसर्वज्ञामितविक्रम शिवेगृहाणतांबूलमेलाकर्पूरसंयुतं प्रसीदसस्मि
तेदेविसोमालिंगितविग्रहे तांबूलं निराजनंगृहाणेशबहुदीपविराजितं स्वप्रकाशप्रकाशात्मन् प्रकाशि
तदिगंबरम् नीराजनंगृहाणांवेसूर्य्यनीराजितप्रभे इत्यनेननीराजनम् गृहाणपरमेशानसरत्नेछत्र-
चामरे दर्पणंव्यजनंत्वीशसर्वदुःखविनाशक गृहाणोमेसुराराध्येसरत्नेछत्रचामरे दर्पणंव्यजनंचाद्यो

विद्याधरेनमोस्तुते छत्रचामरादि इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्म
निजन्मनि इत्यनेनपूगीफलम् हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतःशा-
न्तिंप्रयच्छमे इत्यनेनदक्षिणाम् प्रदक्षिणनमस्कारान्गृहाणपरमेश्वरि नतंनंचमहादेवीशिवनाथप्रि
येशिवे इतिप्रदक्षिणानमस्काराः एवंप्रयत्नतःकार्यंशिवयोःपूजनंशिवं शिवानींचप्रयत्नेनपूर्वोक्तमपिपू
जनं उक्तमन्त्रसमुच्चार्य्ययथापूर्वंयथाक्रमं शिवायःनमःशिवंपूजयामि आवाहनीतिमन्त्रस्तु भवा-
न्याःपरिकीर्तितः कपर्दिनेकपर्दंपूजयामि भाललोचनायभालं सोमसूर्याग्निलोचनाय त्रिनेत्राणि
सुश्रोत्राय श्रोत्राणि घ्राणगंधाय घ्राणानि स्मृतिदन्ताय दन्तान् श्रुति जिह्वाय जिह्वां०

कण्ठं कपोलाय कपोलानि ज्ञानोष्ठाय ओष्ठान् नीलकण्ठाय कण्ठं भूरिवक्षसे वक्षांसि हि-
रण्यबाहवे बाहू विश्वोदराय उदरं विश्वोरवे ऊरू विश्वजंघाय जंघां विश्वपादे पादान् विश्व
नखाय नखान् सर्वात्मकाय सर्वांगं पूजयामि शिवायै शिरः पूजयामि पृथुवेण्यै वेणीं सीमंतं
कुंकुमभालायै भालं० सोमसूर्याग्निलोचनायै लोचनानि स्तुतिस्तोत्रायै श्रोत्राणि गंधप्रियायै घ्रा
णं० सुभगकपोलायै कपोलं कुड्मलदंतायै दंतान् विद्याजिह्वायै जिह्वां० बिंबोष्ठायै ओष्ठौ० वृ
त्तकंठायै कण्ठं० पृथुलकुचायै कुचौ० विश्वगर्भायै उदरं सुभगकट्यै कटिं० दिव्योरुदेशायै ऊरू०
वृत्तजंघायै जंघां० लक्ष्म्यासेवित पादुकाय पादौ० महेश्वरप्रियायै नखान् शोभनविग्रहायै सर्वां

गंपूजयामि इत्यंगपूजाः अथषोडशस्तंभपूजाः तत्रयजमानः प्राङ्मुखउपविश्यप्राणानायम्यदेशा
कालौस्मृत्वाश्रीमहारुद्रादिदेवताप्रीतयेमंडपस्तंभदेवानांद्वारतोरणत्रिशूलपताकाध्वजासहितानां-
दिक्पतीनांचपूजनमहंकरिष्ये इतिसंकल्प्य मध्यवेद्याईशानस्तंभे एह्येहिविप्रेंद्रपितामहेश हं
साधिरूढत्रिदशैकवंद्य श्वेतोत्पलाभासकुशांबहस्त गृहाणपूजांभगवन्नमस्ते हंसपृष्ठसमारूढ
देवतागणपूजित ईशकोणस्थितंस्तंभमलंकुरुजगत्पते ॐभूर्भुवःस्वः ब्रह्मन्निहागच्छ ब्रह्मण
स्पते इतिऋक् ब्रह्मणस्पतेत्वमस्ययन्तासूक्तस्यबोधितनयंचजिन्व विश्वन्तद्भद्रंयदवन्तिदे
वाबृहद्वदेमविदथेसुवीराः॥ यइमाविश्वाविश्वकर्मायोनःपितान्नपतेन्नस्यनोदेहि ३४।५८ ब्र

ह्मयज्ञानमितियजुः ब्रह्मयज्ञानंप्रथमम्पुरस्ताद्विसीमुतःसुरुचोवेनऽआवः सबुध्न्याऽउपमाऽअस्य
विष्ठाःसतश्चयोनिमसतश्चविवः १३। ३ ब्रह्म प्राइतिसाम॥ ब्रह्मयज्ञानमित्यनेनैवमंत्रेण॥ ब्रह्म
णः स्थापनं। ब्रह्मणेनमः। इहतिष्ठ। गंधंपुष्पंधूपंदीपं। नैवेद्यं। एतानिगंधपुष्पधूपदीपनैवेद्यांतानि
ब्रह्मणेनमः। एवंसंपूज्यप्रार्थयेत्॥ वेदाधारायदेवायज्ञानगम्यायसूरये कमंडल्वक्षमालाचस्रुवह
स्तायतेनमः। ततः प्रार्थना। कृष्णाजिनांबरधरः। पद्मासनचतुर्मुख जटाधरजगद्धातःप्रसीद कमं
डलोद्भवसावित्र्यैनमः। वास्तुदेवतायैनमः। ब्राह्म्यैनमः। गंगायैनमः स्तंभमालभ्य उर्ध्वऊषणइति
पठेत्॥ उर्ध्वऽऊषणऽऊतयेतिष्ठादेवोनसविता॥ उर्ध्वोवाजस्यसनितायदञ्जिभिर्वाघद्भिर्विह्वयाम

हे ११।४२ स्तंभशिरसिनागमात्रेनमः आयंगौरीतिमंत्रेणसारवाबंधनानिपूजयेत् आयङ्गौः पृश्निरक्र

मीदसदन्मातरंपुरः पितरंच प्रयन्त्स्वः ३।६ यतोयतः समीहसे इतिमंत्रपाठः ॥ यतोयतः समीहसे

ततोनो अभयंकुरु ॥ शन्नः कुरु प्रजाभ्योभयन्नः पशुभ्यः ६।२२ अथआग्नेयमध्यस्तंभे ॥ आ

वाहयेत्तंगरुडोपरिस्थितंरमाढ्यदेहंसुरराजवंदितं ॥ कंसांतकंचक्रगदाब्जहस्तंभजामिदेवंवसुदेवसू

नुं ॥ पद्मासनंहृषीकेशंकंसचाणूरमर्दनं ॥ आगच्छभगवन्विष्णो अस्मिन्सन्निधोभव ॥ भूर्भुवःस्वः

विष्णो इहागच्छ इहतिष्ठ ॥ विष्णोर्नुकंवीर्याणीतिऋक् ॥ विष्णोर्नुकंवीर्याणिप्रवोचंयः पार्थिवा

निविममेरजांसि ॥ यो अस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवेत्वा ५।१८

इदंविष्णुरितियजुः॥इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम्। समूढमस्यपांसुरेस्वाहा ५।१५॥
इदादमेइतिसाम॥नमस्तेसर्वदेवेशनमस्तेपुरुषोत्तम॥नमस्तेसर्वलोकायविष्णवेतेनमोनमः॥इ
तिनत्वाप्रार्थयेत्॥देवदेवजगन्नाथविष्णोयज्ञपतेविभो। पाहिदुःखांबुधेरस्माद्भक्तानुग्रहकारक
लक्ष्म्यैनमः। आदित्यनंदायैनमः। वैष्णव्यैनमः॥ ततोनिर्ऋतिमध्यस्तंभे॥ एह्येहिगौरीशपिनाक
पाणेशशांकमौलेवृषभाधिरूढ॥देवाधिदेवेशमहेशनित्यंगृहाणपूजांभगवन्नमस्ते॥ गंगाधरमहा
देवपार्वतीप्राणवल्लभ। आगच्छभगवन्नीशस्तंभेस्मिन्सान्निध्योभव। भूर्भुवःस्वः शंकरइहाग
च्छइहतिष्ठ। परिनोरुद्रस्येतिऋक्॥परिणोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्मतिरघायोः॥

अवोस्थिरामघवेद्भ्यस्तनुष्ष्वमीढ्वस्तोकायतनेयायमृड १६।५० नमः शंभवायचेतियजुः ॥ नमः शम्भवायेचमयोभुवायेचनमः शङ्करायेचमयस्करायेचनमः ॥ शिवायेचशिवतरायच १६।४१ आवोराजेतिसाम ॥ नमस्तेस्त्वायतेइतिस्थापनं ॥ शंकरायनमः । इत्यादिपूजनं । वृषभवाहायदेवाय पार्वतीपतयेनमः । वरदायार्द्धकायायनमश्चंद्रार्द्धमौलिने । इतिनमस्कारः । प्रार्थना ॥ पंचवक्त्र वृषारूढ त्रिलोचनसदाशिव । चंद्रमौले महादेवममस्वस्तिकरोभव । गौर्यैनमः ॥ माहेश्वर्यैनमः ॥ शोभनायैनमः ॥ ततोवायव्यमध्यस्तंभे ॥ एह्येहि ऐरावतगजाधिरूढ सहस्रनेत्रत्रिदशैकराजा ॥ शचीपतेशक्र सुरेशनित्यंगृहाणपूजांभगवन्नमस्ते ॥ शचीपतेमहाबाहोसर्वाभरणभूषित ॥ आगच्छभगवन्निंद्रत्वं

भेस्मिन्सन्निधोभव ॥ इन्द्रइहागच्छ ॥ त्रातारमिंद्रमितिऋक् ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनो मघवाधात्विन्द्रः २०।५० महांइन्द्रोवज्रहस्त इति यजुः महा २।ऽ इन्द्रोवज्रहस्तः षोडशीशर्मयच्छतु ॥ हन्तुपाप्मानंयोस्मान्द्वेष्टि ॥ उपयामगृहीतोसि महेन्द्रायत्वैषते योनिर्महेन्द्रायत्वा २६।१० इंद्रंनारइतिसाम ॥ इंद्रमहंवाणिजमितिस्थापनं । इंद्रायनमः । इतिपूजनं ॥ पुरंदरनमस्तेस्तु ॥ वज्रहस्तनमोस्तुते । शचीपतेनमस्तुभ्यं । नमस्तेमघवाहन ॥ इतिनमस्कारः ॥ प्रार्थना ॥ देवदेवगजारूढपुरंदरशतक्रतो । वज्रहस्तमहाबाहोवांछितार्थप्रदोभव ॥ इंद्राण्येनमः । आनंदायैनमः । विभूत्यैनमः । ततोबाह्यद्वादशस्तंभेषुईशानकोणा

दारभ्यद्वादशास्तंभानिपूजयेत् । आवाहयेत्तंद्विभुजंदिनेशंसप्ताश्ववाहंद्युमणिंग्रहेशं ॥ सिंदूरवर्णप्र-
तिभावभासंभजामिसूर्यंकुलवृद्धिहेतोः । पद्महस्तमहाबाहोसप्तश्वेताश्ववाहन ॥ आगच्छभगव-
न्भानोस्त्वंभेस्मिन्सान्निधोभव । भूर्भुवःस्वःसूर्यइहागच्छ ॥ चित्रंदेवानामितिऋक् ॥ चित्रन्देवा
नामुदगादनीकञ्चक्षुर्मित्रस्यवरुणस्याग्नेः आप्राद्यावापृथिवीऽअन्तरिक्षꣳसूर्यआत्मा-
जगतस्तस्थुषश्चस्वाहा ७।४२॥ आकृष्णेनरजसेतियजुः ॥ आकृष्णेनरजसावर्त्तमानो
निवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ।३३।४३। उदुत्यमि
तिसाम ॥ उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः ॥ दृशेविश्वायसूर्यꣳस्वाहा ।७।४१। अद्यम

स्यकेतवइतिस्थापनं ॥ अदृश्रमस्यकेतवोविरश्मयोजनाँ२ ॥ अनु भ्राजंतोअग्नयोयथा ॥ उ
पयामगृहीतोसिसूर्य्यायत्वाभ्राजायैषतेयोनिः सूर्य्यायत्वाभ्राजाय ॥ सूर्य्यभ्राजिष्ठभ्राजिष्ठस्त्वंदेवे
ष्वसिभ्राजिष्ठोहंमनुष्येषुभूयासम् ।८।४०। सूर्यायनमः इतिपूजनं ॥ नमःसवित्रेजगदेकचक्षुषे।
जगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयायत्रिगुणात्मधारिणेविरंचिनारायणशंकरात्मने । इतिनम-
स्कारः । पद्महस्तरथारूढपद्मासनसुमंगल । कृपांकुरुदयालोत्वंग्रहराजनमोस्तुते ॥ प्रार्थना ॥ गौ
र्य्यैनमः ॥ भूत्यैनमः ॥ सावित्र्यैनमः ॥ मंगलायैनमः ॥ ईशानपूर्वयोरांतरालस्तंभे ॥ आवाहयत्तंगणरा-
जदेवंरक्तोत्पलाभासमशेषवंद्यं ॥ विघ्नांतकंविघ्नहरंगणेशंभजामिरौद्रंसहितंचसिध्या । लंबोदरमहा

कायगजवक्त्रचतुर्भुज ॥ आगच्छत्वंजगन्नाथस्तंभेस्मिन्सन्निधोभव ॥ भूर्भुवःस्वः ॥ गणपतयेइह
गच्छ ॥ गणानांत्वाइतिऋक् ॥ गणानान्त्वा गणपतिᳬहवामहे प्रियाणान्त्वाप्रियपतिᳬहवामहे
निधीनान्त्वानिधिपतिᳬहवामहेवसोमम । आहमजानिगर्भधमात्वमजासिगर्भधम् ।२३।१९। गणा
नांत्वाइत्येवयजुः ॥ आतूनआइतिसाम ॥ गणास्त्वोपगायंतुइतिस्थापनं ॥ गणपतयेनमः पूजनं ॥ नम
स्तेब्रह्मरूपायविष्णुरूपायतेनमः ॥ नमस्तेरुद्ररूपायकरिरूपायतेनमः ॥ इतिनमस्कारः ॥ लंबोदरम
हाकायसततंमोदकप्रिय ॥ गौरीसुतगणेशत्वंविघ्नराजप्रसीदमे ॥ प्रार्थना ॥ सरस्वत्यैनमः ॥ विघ्नहारि
ण्यैनमः ॥ जयायैनमः ॥ ततःपूर्वाग्न्योरंतरालस्तंभे ॥ एह्येहिदंडायुधधर्मराजकालंजनाभासविशालᳬ

नेत्र ॥ विशालवक्षस्थलरुद्ररूपगृहाणपूजांभगवन्नमस्ते ॥ चित्रगुप्तादिसंयुक्तदंडमुद्गरधारक ॥ आगच्छभगवन्धर्मस्तंभेस्मिन्संन्निधोभव ॥ भूर्भुवःस्वः ॥ यमइहागच्छ ॥ यस्मिन्वृक्षेइतिऋक् ॥ यमायत्वाइतियजु ॥ यमायत्वामखायत्वासूर्य्यस्यत्वातपसे देवस्त्वासवितामद्ध्वानक्तुपृथिव्याः सुसंस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ३७ । ११ ॥ नाकेसुपर्णइतिसाम ॥ यमोमृत्युरयमराइतिस्थापनं ॥ यमायनमः पूजनं ॥ ईषत्पीनननमस्तेस्तु दंडहस्तनमोस्तुते ॥ महिषस्थनमस्तेस्तुधर्मराजनमोस्तुते ॥ इतिनमस्कारः ॥ धर्मराजमहाकायदक्षिणाधिपतयेनमः ॥ रक्षेक्षणमहाबाहोममपीडांनिवारय ॥ प्रार्थना ॥ पूर्वसंध्यायेनमः ॥ जन्यैनमः ॥ क्रूरायेनमः ॥ नियंत्र्यैनमः ॥ ततोवाय्वाग्निकोणस्तंभे ॥

एह्येहि नागेंद्र धराधरेश सर्वामरैर्वंदितपादपद्म ॥ नानाफणामंडलराजमान गृहाण पूजां भगवन्नमस्ते ॥ आशीविषसमोपेत नागकन्याविराजित ॥ आगच्छ नागराजेंद्र त्वं भोस्मिन्सन्निधो भव ॥ नागराज इहागच्छ ॥ कालकोनामसर्प इति ऋक् ॥ नमोस्तु सर्पेभ्य इति यजुः ॥ नमोस्तु । सर्पेभ्यो ये के च पृथिवीमनु ॥ ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ १३ । ६ । अभात्यिमाहे इति साम ॥ स्वध्वं स्वर्भिक्रणौ इति स्थापनं ॥ नागराजाय नम इति पूजनं ॥ नमः खेटकहस्तेभ्यो अब्धिभोगेभ्यो नमो नमः ॥ नमो भीषणदेहेभ्यः खड्गधृग्भ्यो नमो नमः ॥ इति नमस्कारः ॥ प्रार्थना ॥ खड्गखेटकधराः सर्वाः फणामंडलमंडिताः ॥ एकभोगाः साक्षसूत्रा वरदाः संतु मे सदा ॥ मध्यमसंध्यायै नमः ॥ धरायै नमः ॥ पद्मायै नमः ॥ महापद्मायै नमः

॥ आग्नेयदक्षिणयोरंतराले स्तंभे ॥ आवाहयामि देवेशं षण्मुखं कृत्तिकासुतं ॥ रुद्रतेजः समुत्पन्नं देव
सेनासमन्वितं ॥ मयूरवाहनं शक्तिपाणिं वै ब्रह्मचारिणं ॥ आगच्छ भगवन्स्कंद स्तंभेऽस्मिन् सन्निधौ
भव ॥ भूर्भुवः स्वः ॥ स्कंद इहागच्छ ॥ बलित्थापर्वतानामिति ऋक् ॥ यदक्रंदीरिति यजुः ॥ यदक्रन्दः
प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्य पक्षाहरिणस्य बाहूऽउपस्तुत्यंमहिजातं
तेऽअर्वन् ।२८।१२॥ राजान इति साम ॥ अभीरिव मन्य इति स्थापनं ॥ स्कंदाय नमः ॥ इति पूजनं ॥ नमः
स्कंदाय शैवाय घंटाकुक्कुटधारिणे ॥ पताकाशक्तिहस्ताय षण्मुखाय नमो नमः ॥ इति नमस्कारः ॥ मयूरवा
हन स्कंद गौरीसुत षडानन ॥ कार्तिकेय महाबाहो दयाकुरु दयानिधे ॥ इति प्रार्थना ॥ पश्चिमसंध्यायै नमः ॥

॥दक्षिणेनैऋत्यांतराल स्तंभे ॥ आवाहयामि देवेशं भूतानां देहधारिणं ॥ सर्वधार महावेगं मेघवाह
नमीश्वरं ॥ गंधर्वैः सहगंतारं त्रैलोक्यांतरचारिणं ॥ आगच्छ भगवन्वायो स्तंभेस्मिन् सन्निधो भव ॥
भूर्भुवः स्वः वायो इहागच्छ ॥ वायव वाया इति ऋक् ॥ तववायवृतस्पते इति यजुः ॥ नवेत्वा वृतस्पते त्वष्टुर्जा
मातरद्भुत ॥ अवांसि स्यावृणीमहे ॥ २७।३४ ॥ वात आवातु इति साम ॥ आनोनियुद्भिरिति स्थापनं ॥
आनोनियुद्भिः शतिनीभिरध्वरं सहस्त्रिणीभिरुपयाहि यज्ञम् ॥ वायो अस्मिन्त्सवने मादयस्व
यूयम्पात स्वस्तिभिः सदा नः ॥ २७।२८ ॥ वायवे नमः पूजनं ॥ नमो धरणीपृष्ठस्य समीरण नमोस्तुते ॥ धू
म्रवर्ण नमस्ते स्तु शीघ्रगामी नमोस्तुते ॥ इति नमस्कारः ॥ यावद्धरणिपृष्ठस्य ध्वजहस्त समीरण ॥ दंड

हस्तमृगारूढवरंदेहिवरप्रद ॥प्रार्थना ॥ वायव्यैनमः ॥ गायत्र्यैनमः ॥ मध्यमसंख्यायैनमः ॥ ततोनिर्ऋ
तिस्तंभे ॥ आवाहयामि देवेशं शांकरजनीपतिं ॥ क्षीरोदधिसमुद्भूतंहरमौलिविभूषणं ॥ सुधाकरंद्विजा
धीशंत्रैलोक्यमेहकारकं ॥ ओषध्याप्यायनकरंसोमकंदर्पवर्द्धनं ॥ आगच्छ भगवन्सोमत्वंभोस्मिन्सान्नि
धोभव ॥ भूर्भुवःस्वः ॥ सोमइहागच्छ ॥ आप्यायस्वेतिऋक् ॥ आप्यायस्व समेतुते विश्वतः सोमवृ
ष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥१२।११२॥ इदमेवयजुः ॥ चन्द्रमाअप्स्वन्तराइतिसाम इमंदेवाअसपत्नमि
तिस्थापनं ॥ इमन्देवाऽअसपत्नꣳसुवद्ध्वम्महतेक्षत्राय महतेज्यैष्ठ्यायमहतेजानराज्ज्यायेन्द्रस्ये
न्द्रियाय ॥ इममुमुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकम्ब्राह्मणानाꣳराजा ॥

१०।१८॥सोमायनमइतिपूजनं॥ अत्रिपुत्रनमस्तेस्तुनमस्तेशशलांछन॥ श्वेतांबरनमस्तेस्तुतारापं-
तिनमोस्तुते॥ इतिनमस्कारः॥ अत्रिपुत्रनिशानाथद्विजराजनिशाकर॥ सोमत्वंसौम्यभावेनग्रहपीडांनि
राकुरु॥ प्रार्थना॥ सावित्र्यैनमः॥ अमृतकलायैनमः॥ विजयायैनमः॥ पश्चिमसंध्यायैनमः॥ ततोनि
ऋतिपश्चिमयोर्मध्यस्तंभे॥ आवाहयामिदेवेशंसलिलस्याधिपंप्रभुं शंखपाशधरंसौम्यंवरुणंयाद
सांपतिं॥ कुंभारथसमारूढंमणिरत्नसमन्वितं॥ आगच्छदेववरुणस्तंभेस्मिन्सन्निधोभव॥ भूर्भु
वःस्वः॥ वरुणइहागच्छ॥ तत्वायामीतिऋक्॥ तत्वा॥ यामिब्रह्मणावन्दमानस्तदाशास्तेय-
जमानोहविर्भिः॥ अहेडमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः॥२१॥२॥इमंमेवरु

ऐतियजुः॥ इमम्मे वरुणश्रुधीहवमद्याचमृडया ॥ त्वामवस्युराचके ॥२१।१॥ यदाकदाइतिय
जुः॥तत्वायामीतिपूर्वोक्तेनैवमंत्रेणस्थापनं॥ वरुणायनमः॥पूजनं॥ वरुणायनमस्तेस्तुनमः स्फ
टिकदीप्तये॥नमस्तेश्वेतहारायजलेशायनमोनमः॥ इतिनमस्कारः॥ शंखस्फटिकवर्णाभश्वेतहा
रांबरावृत॥पाशहस्तमहाबाहोदयांकुरुदयानिधे॥ प्रार्थना॥ वारुण्यैनमः॥पाशधारिण्यैनमः॥
बृहस्पत्यैनमः॥ ततोपश्चिमवायव्यांतरालस्तंभे॥ अष्टवसून्आवाहयेत्॥ ध्रुवोध्वरश्चसोमश्चआ
पश्चैवानिलोनलः॥ प्रत्युषश्चप्रभासश्चवसवोष्टौप्रकीर्त्तिताः॥ आवाहयामिदेवेशान्वसूनष्टौम
हाबलान्॥सौम्यमूर्त्तिधरान्देवान्दिव्यायुधकरान्वितान्॥शुद्धस्फटिकसंकाशान्॥नानावसुवि

राजितान् ॥ अश्वारूढान् दिव्यवस्त्रान् ॥ सर्वालंकारविभूषितान् ॥ आवाहयामित्वंभेस्मिन् वसवो

षोसुखावहान् ॥ भूर्भुवःस्वर्वसवइहागच्छ ॥ सुगावोदेवाइतिऋक् ॥ सुगावोदेवाः सदनाऽअकर्म्म

यऽआजगमेदᳫंसवनञ्जुषाणाः ॥ भरमाणा वहमाना हवीᳫंष्यस्मे धत्त वसवो वसूनि स्वाहा ॥१८

॥ वसवस्त्वाकृण्वन्तुइतियजुः ॥ वसवस्त्वा कृण्वन्तु गायत्रेणच्छन्दसाङ्गिरस्वद्ध्रुवासि पृथिव्यसि

धारयामयि प्रजाᳫं रायस्पोषङ्गौपत्यᳫं सुवीर्य्यᳫं सजातान्यजमानायरुद्रास्त्वाकृण्वन्तु त्रैष्टुभेन-

च्छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसि धारयामयि प्रजाᳫं रायस्पोषङ्गौपत्यᳫं सुवीर्य्यᳫं सजाता

न्यजमानायादित्यास्त्वाकृण्वन्तु जागतेनच्छन्दसाङ्गिरस्वद्ध्रुवासि द्यौरसि धारयामयि प्रजाᳫं-

रायस्पोषंङ्गोपत्यꣳ सुवीर्य्यꣳ सजातान्यजमानायविश्वैर्देवा वैश्वानराः छन्दवन्त्वानुष्टुभे
नच्छन्दसाङ्गिरस्वद्ध्रुवासिदिशोसिधारयास्मियिप्रजाꣳ रायस्पोषंङ्गोपत्यꣳ सुवीर्य्यꣳ सजातान्य
जमानाय ॥ १० । ५० ॥ इदंवसाꣳ इतिसाम ॥ वसोःपवित्रमितिमंत्रेणाष्टवसूनांस्थापनं ॥ वसोः पवित्रम
सिशतधारं वसोः पवित्रमसि सहस्रधारम् ॥ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सु-
प्वा कामधुक्षः ॥ १ । ३ ॥ वसुभ्योनमः ॥ पूजनं ॥ नमस्करोमि देवेशान् नानावसुविराजितान् ॥ शु
द्धस्फटिकसंकाशान्दिव्यायुधकरान्वसून् ॥ इतिनमस्कारः ॥ दिव्यवस्त्रा दिव्यदेहाः पुष्पमालाविभु
षिताः ॥ वसवोष्टौ महाभागाः वरदाः संतु मे सदा ॥ प्रार्थना ॥ विनतायैनमः ॥ श्रेण्यैनमः ॥ भूत्यैनमः ॥

गारिम्नेनमः॥ततोवायव्यस्तंभे॥आवाहयामिदेवेशंधनदंपदपूजितं॥महाबलंदिव्यदेहंनरयानगतं
विभुं॥दिव्यमालांबरधरंगदाहस्तमहाभुजं॥आगच्छयक्षराजस्त्वंस्तंभेस्मिन्सान्निधोभव॥धनद
इहागच्छ॥सोमोधेनुमितिऋक्॥सोमोधेनुꣳसोमोऽअर्वन्तमाशुꣳसोमोवीरङ्कर्मण्यन्ददा-
ति॥सादन्यंविदथ्यꣳसभेयम्पितृश्रवणंयोददाशदस्मै॥३४।२१॥इदमेवयजुः॥हꣳस
इतिसाम॥हꣳसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत्॥नृषद्वरसदृतसद्व्योमस
दब्जागोजाऋतजाऽअद्रिजाऽऋतम्बृहत्॥१०।२४॥सोमोराजाइत्यनेनबयꣳसोमवतेइत्यनेन
वास्थापनं॥वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः प्रजावन्तःसचेमहि॥३।५६॥धनदायनमःपूज-

न ॥ यक्षराजनमस्तेस्तु नमस्तेनरयानग ॥ पीतांबरनमस्तेस्तु गदापाणेनमोस्तुते ॥ इतिनमस्कारः ॥
दिव्यदेहधनाध्यक्षपीतांबरगदाधर ॥ उत्तरेशमहाबाहोवांछितार्थफलप्रद ॥ प्रार्थना ॥ आदित्यैनमः
॥ रुधिर्न्यैनमः ॥ सिनिवाल्यैनमः ॥ ततोवायव्योत्तरयोरंतरालस्तंभे ॥ आवाहयामिदेवेशंगुरुंत्रिदश
पूजितं ॥ हेमगोरोचनावर्णपीनस्कंधंसुवक्षसं शंखंचकलशंचैवपाणिभ्यामिहबिभ्रतं ॥ बृहस्पते
समागच्छस्तंभेस्मिन्सन्निधोभव ॥ बृहस्पतइहागच्छ ॥ इंद्रआसान्नेताइतिऋक् ॥ इन्द्रऽआसान्ने
ताबृहस्पतिर्दक्षिणायज्ञः पुरऽएतुसोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्रम् ॥
१७।४०॥ बृहस्पतेअतियदर्य्यइतियजुः ॥ बृहस्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥

यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥ उपयामगृहीतोसिबृहस्पतयेत्वैष
तेयोनिर्बृहस्पतयेत्वा ॥ २६ । ३ ॥ इन्द्रश्चासान्नेता ॥ इदमेवसाम ॥ अर्यमाणंबृहस्पतिमित्यनेनमंत्रे
णबृहस्पतेअतियदर्यइत्यनेनवास्थापनं ॥ बृहस्पतयेनमः ॥ पूजनं ॥ ब्रह्मपुत्रनमस्तेस्तुपीतध्वजनमो
स्तुते ॥ त्रिदशार्चितदेवेशांगिरसिधूम्रवनमोस्तुते ॥ इतिनमस्कारः ॥ पूजितोसियथाशक्त्यादंडहस्तबृह-
स्पते ॥ कुरुग्रहाभिभूतस्यशांतिदेवगुरोकुरु ॥ प्रार्थना ॥ पूर्णमास्यैनमः ॥ सावित्र्यैनमः ॥ उत्तरेशानयो
रंतरालस्तंभे ॥ आवाहयामिदेवेशंविश्वकर्माणमीश्वरं ॥ मूर्त्तामूर्त्तकरंदेवंसर्वकर्त्तारमीश्वरं ॥ त्रैलो
क्यसूत्रकर्त्तारंद्विभुजंसर्वदर्शिनं ॥ आगच्छविश्वकर्मस्त्वंस्तंभेस्मिन्सान्निधोभव ॥ भूर्भुवःस्वः

विश्वकर्मन्निहागच्छ ॥ विश्वकर्मन्हविषाइतिन्यासः ॥ विश्वकर्मन्हविषावर्द्धनेनत्रातारमिन्द्रमकृ-
णोरवध्यम् ॥ तस्मैविशः समनमन्तपूर्वीरयमुग्रोविहव्योयथासत् ॥ १७।२४॥ इदमेवयजुः
॥ उपयामगृहीतोसीतिस्थापनं ॥ उपयामगृहीतोसीन्द्रायत्वाविश्वकर्मण एषतेयोनिरिन्द्रायत्वावि-
श्वकर्मणे ॥ ८।४५॥ विश्वकर्मणेनमः पूजनं ॥ नमामिविश्वकर्माणं द्विभुजं सर्वदर्शिनं ॥ त्रैलोक्यसू-
त्रकर्त्तारंमहाबलपराक्रमं ॥ इतिनमस्कारः ॥ प्रसीदविश्वकर्मंस्त्वंशिल्पिशास्त्रविशारद ॥ सदंडपाणि-
द्विभुजतेजोमूर्त्तिधरप्रभो ॥ प्रार्थना ॥ सिनीवाल्यैनमः ॥ वास्तुदेवतायैनमः ॥ सावित्र्यैनमः ॥ ततःपुष्पां-
जलिंगृहीत्वा ॥ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः शर्वेभ्यःशर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥

इतिमंत्रेणमंडपेपुष्पांजलिंविकिरेत् ॥ इतिषोडशस्तंभपूजा ॥ ॐनागमात्रेनमः। इतिबलिकाकाष्ठानिपू
जयेत् ॥ ॐ सर्वेभ्योनमः ॥ इतिशारणोद्धृपनानिपूजयेत् ॥ ततःपश्चिमद्वारेणनिर्गत्यपूर्वादिक्रमतोद्वार
तोरणपूजामारभेत् ॥ अथद्वारतोरणपूजा मंडपस्यपुरोद्वारादूर्ध्वस्तंभयोरुपरिन्यस्ततोरणस्यपार्श्वेय
थाविधिनाकलशद्वयंसंस्थाप्य ॥ ऊर्ध्वऊषुणइतिमंत्रेणतद्भूमावुपाकृषेत् ॥ ऊर्ध्वानकिसुण्यऽअत्रामुचहू
तीसुदार्धःसखा। ऊर्ध्वाशाचिष्टपाघुना ॥ २६।४॥ बृहस्पतेअतियदर्यइतिमंत्रेणबृहस्पतिमावाहये
त् ॥ बृहस्पतेऽअतियदर्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु । यद्दीदयच्छवसऽऋतप्रजाततदस्मा
स्मासुद्रविणन्धेहिचित्रम् ॥ उपयामगृहीतोसिबृहस्पतयेत्वैषतेयोनिर्बृहस्पतयेत्वा ॥ २६।३॥ बृह

स्पतयेनमः ॥ राहवेनमः ॥ इतिचंदनादिभिःसंपूज्यकलशेऋग्वाद्योरिरितिमंत्रेणऋग्वेदमावाहयेत् ॥ ऋ
ग्वायनमः इतिपूजनं ॥ अथतोरणस्यवाहनं ॥ प्राचींदिशंसमाश्रित्यसुदृढंनामतोरणं ॥ महावीर्यंमहाका
यंइंद्रायुधसमप्रभं ॥ अस्मिन्महोत्सवेयज्ञेऋत्वूनांप्रवरेशुभे ॥ एह्येहित्वंश्रवत्सऋग्वेदाधिष्ठितइंद्रदे
वत्यमहातोरणयेनंयज्ञंरक्षसर्वविघ्नन्निवारय ॥ अथतोरणध्यानम् ॥ पूर्वस्यांदिशियज्ञस्यसुदृढंनाम
तोरणं ॥ शुक्लवस्त्रपरिछन्नंशुक्लमाल्यविभूषितं ॥ महावीर्यंमहाकायंसिंदूरसदृशप्रभुं ॥ इतिध्यात्वा ॥ सु
दृढतोरणायनम ॥ इतिपाद्यादिभिपूजनं ॥ ततः कृतयुगायनम ॥ इतिकृतयुगमावाह्यपूजयेत् ॥ अग्नि
मीलेइतिमंत्रेणऋग्वेदंमावाह्यपूजयेत् ॥ अग्निमीलेपुरोहितंयज्ञस्यदेवमृत्विजम् ॥ अग्निर्होतारंर

त्वधातवम् ॥ ऋग्वेदः पद्मपत्राक्षोगायत्र्यसोमदेवतः अत्रिगोत्रस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभवेतिध्या
नम् ॥ दक्षिणसाखायांधात्रेनमः॥ इत्यावाह्य पूजयेत् ॥ उत्तरशाखायांविधात्रेनम ॥ इत्यावाह्यपूजये-
त् ॥ उर्ध्वगणेशायनम ॥ इत्यावाह्यपूजयेत् ॥ अधोदेहल्यांद्वारश्रियैनम इत्यावाह्यपूजयेत ॥ देहली
मध्यभूमौवास्तुपुरुषायनम ॥ इतिवास्तुपुरुषमावाह्यपूजयेत् ॥ त्रातारमितिमंत्रेणइंद्रमावाह्यपूजयेत्
॥ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्र७स्वस्तिनो
मघवाधात्विन्द्रः ॥२०।५०॥ अथत्रिशूलपूजा ॥ मंगलाभिधत्रिशूलायविष्णुदेवतायनमः ॥ इदंविष्णुरिति
मंत्रेणविष्णुमावाह्यपूजयेत् ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपा७सुरेस्वाहा ॥५।

१५॥ अथत्रिशूलश्रृंगेषुप्रदक्षिणक्रमेणआदित्यन्यासः प्रथमेशृंगेइंद्रंद्वितीयेशृंगेधातारं तृतीयेशृं
गेभगं॥ एवंसंपूज्यप्रार्थयेत्॥ पूजयामीहदेवेशशिवोभववरप्रद॥ रिपून्निवारयाशुत्वंयज्ञरक्षाकरोभ
व॥ इतिपूर्वतोरणपूजा॥ अथदक्षिणतोरणपूजा॥ तत्रकलशंसंस्थाप्य॥ तत्रस्योनापृथिवीतिमंत्रेणपृथि
वीमावाह्यपृथिव्यैनमः॥ इतिपूजयेत्॥ स्योनापृथिवीनोभवानृक्षरानिवेशनी॥ यच्छानःशर्म्मसप्रथाः॥
३६।१३॥ आकृष्णेनेतिसूर्यमावाह्यपूजयेत्॥ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्त्यं
च॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन्॥ ३३।४३॥ अग्निर्मूर्द्धादिवइतिमंत्रेणमंगलमा
वाह्यपूजयेत्॥ अग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्याअयम्॥ अपांरेतांसिजिन्वतिइन्द्रस्य

त्वौजसासादयामि ॥१३।१४॥ अथ तोरणध्यानं ॥ दक्षिणां दिसमाश्रित्य विकटं नाम तोरणं ॥ महावी
र्यं महाकायं भिन्नांजनसमप्रभं ॥ एह्येहि अस्मिन् औदुंबरतोरणं यज्ञं रक्ष सर्वविघ्नान्निवारय इत्यावाह्य
॥ इषेत्वेति मंत्रेण तोरणमाल्भ्य विकटतोरणाय नमः इति पूजयेत् ॥ इषेत्वोर्ज्जेत्वा वायवस्थ देवोवः स-
विता प्रार्प्पयतु श्रेष्ठतमाय कर्म्मण ऽआप्यायध्वमघ्न्या ऽइन्द्राय भागं प्रजावतीरनमीवा ऽअयक्ष्मा
मावस्तेन ऽईशत माघशंसो ध्रुवा ऽअस्मिन् गोपतौ स्यात बह्वीर्य्यजमानस्य पशून्पाहि ॥ १।१ विंध्या
द्रये नमः ॥ त्रेतायुगाय नमः ॥ यमाय त्वेति यमं आवाह्य पूजयेत् ॥ यमाय त्वा मखाय त्वा सूर्य्यस्य त्वा तपसे ॥
देवस्त्वा सविता मध्वानक्तु पृथिव्याः सꣳस्पृशस्पाहि ॥ अर्च्चिरसि शोचिरसि तपोसि ॥ ३७।११॥ दक्षि

णशाखायांधात्रेनमः॥ वामशाखायांविधात्रेनमः॥ उत्तरांगेगणेशायनमः॥ अधोदेहल्यांश्रियै नमः॥ देहलीमध्यभूमौवास्तुपुरुषायनमः॥ अथत्रिशूलपूजा॥शत्रुघ्ननाम्नेरुद्रदैवतायत्रिशूलायनमः॥ मानस्तोकेतिमंत्रेणरुद्रमावाह्यपूजयेत्॥ मानस्तोके॥ तनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः॥मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तःसदमित्वाहवामहे॥१६। त्रिशूलस्यांगेषुप्रदक्षिणक्रमेणपूष्णेनमः॥मित्रायनमः॥ वरुणायनमइत्यादित्यन्यासः॥ एवंसंपूज्यप्रार्थयेत्॥ वृषभस्कंधसमारूढशूलहस्तवरप्रद॥ यजमान्वारयाम्युत्वंपूजितोसिमयाप्रभो॥ इतिदक्षिणतोरणपूजा॥ अथपश्चिमतोरणपूजा॥तत्रकलशद्वयंसंस्थाप्य॥अन्नात्परिस्रुतइतिशुक्रमावाह्यपूजये-

न्॥ अन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः॥ ऋतेन सत्यमिन्द्रियं विपानं
शुक्रमन्धस ऽइन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु॥ १८।७५॥ उद्बुध्यस्व इति मंत्रेण बुधमावाह्य पूजयेत्॥ उ
द्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳसृजेथामयञ्च॥ अस्मिन्त्सधस्थे ऽअध्युत्तरस्मिन्विश्वेदेवा
यजमानश्च सीदत॥ १५।५४॥ अथ ध्यानं आवाहनं च॥ प्रतीचीं दिशमाश्रित्य सुभीम नाम तोरणं॥ महा
वीर्यं महाकायं सुवर्णसदृशप्रभं॥ एह्येहि सामवेदाधिष्ठित प्लक्षतोरण वरुणदैवत्य॥ एनं यज्ञं रक्ष सर्ववि-
घ्नान्निवारय॥ आ नयाहीति मंत्रेण तोरणालंभः॥ अग्न ऽआयाहि वीतये गृणानो हव्यदातये नि होता स-
त्सि बर्हिषि॥ भीमाख्यतोरणाय नमः इति पूजनं॥ हेमकूटचलाय नमः॥ द्वापरयुगाय नमः॥ दक्षिणसाखायां

धात्रेनमः॥ वामसारवायांविधात्रेनमः॥ उत्तरांगेगणेशायनमः॥ अथोदेहल्यांद्वाःश्रियैनमः॥देह
लीमध्येवास्तुपुरुषायनमः॥ अथत्रिसूलपूजा॥ पुत्रप्रदाभिधब्रह्मदैवतायत्रिशूलायनमः॥त्रिशूल
शृंगेषुप्रदक्षिणक्रमेण॥ आदित्यान्पूजयेत्॥ ॐअर्यम्णेनमः॥ ॐअंशवेनमः॥ ॐविवस्वतेनमः॥
ब्रह्मयज्ञानमितिमंत्रेणब्रह्माणमावाह्यपूजयेत्॥ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो
वेनआवः॥ सबुध्न्या उपमा अस्यविष्ठाः सतश्चयोनिमसतश्चविवः॥१३।२॥ एवंसंपूज्यप्रार्थ
येत्॥ हंसपृष्ठसमारूढकमंडलुधरप्रभो॥यज्ञभागान्वारयाशुत्वंपूजितोसिमयाप्रभो॥इतिपश्चिमतोर
णपूजा॥ अथोत्तरतोरणपूजा॥ तत्रकलशद्वयंसंस्थाप्य॥ इमंदेवाइतिमंत्रेणसोममावाह्यपूजयेत्

॥ इमन्देवा ऽअसपत्नꣳ सुवद्ध्वम्महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियो
य। इममुमुष्य पुत्रममुष्यै पुत्रमस्यै विश ऽएष वोमी राजा सोमो स्माकं ब्राह्मणानाꣳ राजा ॥
१०।१८॥ शन्नोदेवीरिति मंत्रेण शनिमावाह्य पूजयेत् ॥ शन्नोदेवीरभिष्टय ऽआपो भवन्तु पीतये ॥ शं
य्योरभिस्रवन्तु नः ॥३६।१२॥ अथ तोरणध्यानमावाहनं च ॥ उत्तरां दिशमाश्रित्य सुप्रभं नाम तोरणं ॥
महावीर्यं महाकायं शुद्धस्फटिकसन्निभं ॥ एह्येहि अथर्वाधिष्ठित न्यग्रोधतोरण सोमदैवत एनं यज्ञं रक्ष
सर्वविघ्नान्निवारय ॥ शन्नोदेवीति मंत्रेण तोरणालंभः ॥ शन्नोदेवीरभिष्टय ऽआपो भवन्तु पीतये ॥
शंय्योरभिस्रवन्तु नः ॥३६।१२॥ सुप्रभतोरणाय नमः ॥ इति पूजनं ॥ हिमाचलाय नमः ॥ कालिंदुगाय नमः

॥ सोमायनमः ॥ दक्षिणशाखायांधात्रेनमः ॥ वामशाखायांविधात्रेनमः ॥ उत्तरांगेगणेशायनमः ॥ अ
धोदेहल्यांद्वारश्रियेनमः ॥ देहलीमध्येवास्तुपुरुषायनमः ॥ अथत्रिशूलपूजा ॥ उत्तमनाम्नेसोमदेवता
यत्रिशूलायनमः ॥ त्रिशूलस्यांगेषु प्रदक्षिणंसोममावाह्यपूजयेत् ॥ हंसः शुचिषद्वसुरन्तरिक्षसद्धो
तावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतम्बृहत् ॥
१०।२४॥ एवंसंपूज्यप्रार्थयेत् ॥ नरयानसमारूढ गदाहस्तवरप्रद ॥ आभिचारयाशुलंपूजितोसिम
याप्रभो ॥ देवास्त्वोरणरूपेणसंस्थितायज्ञमंडपे ॥ विघ्नविध्वंसनार्थंवैरक्षार्थंत्वद्वारस्यच ॥ इतिसंप्रा
र्थनमस्कुर्यात् ॥ इतितोरणपूजा ॥ अथसदिक्पालाद्वारपूजा ॥ अथपूर्वद्वारदेवताआवाहनं ॥ आ

याहिवज्रसंघातपूर्वद्वारकृपाधिप ॥ ॐऋग्वेदाधिपतेनाम्नासुशोभननमोस्तुते ॥ द्वारशाखयोर्ध्रुवंध्र
ध्वरंचेतिवसुद्वयंमावाह्यपूजयेत् ॥ शृंगेषुशाखयोश्चवस्त्राणिबध्वा ॥ साखामूलयोर्धान्यपुंजोपरिवा
रिपूर्णौमिशांतसिशिरलामानो ॥ जातबीजांकुरसरानपिहितौकलशौआजिघ्रेतिमंत्रेणप्रतिष्ठाप्यगं
धादिनापूज्यद्वारदेशेइंद्रमावाह्यपूजयेत् ॥ ॐइंद्रसुरपतिश्रेष्ठोवज्रहस्तोमहाबलः ॥ सनूयज्ञाधिपोदे
वस्तस्मैनित्यंनमोनमः ॥ इंद्रायाहिचित्रभानोरितिमंत्रेणपीतांपताकांपीतंध्वजंचआलभ्यत्रातारमिन्द्रमि
तिमंत्रेणतोरणोपरिनिधानं ॥ इन्द्रायाहिचित्रभानोसुताऽइमेत्वायवः ॥ अण्वीभिस्तनोपुतासः ॥ २०
॥ २८ ॥ त्रातारमिन्द्रमवितारमिन्द्रंहवेहवेसुहवंशूरमिन्द्रम ॥ ह्वयामिशक्रंपुरुहूतमिन्द्रंस्वस्ति

नौमुघवोधात्विन्द्रः॥२०।५०॥ योमेदंडइतिसर्वत्रदंडो छत्रयणम्॥ योमेदण्डः पराल्मनद्दैहायशोधि
भूम्यान्तमहंपुनरादद आयुषेब्रह्मणेब्रह्मवर्चसाय॥ मंगलनाम्नेगणेशाधिष्ठिताय पूर्वद्वारायनमः
॥साखयोर्गंगायैनमः। यमुनायैनमः॥ द्वारशाखयोरेव ॥ॐ भूर्लोकायनमः॥ॐ भुवर्लोकायनमः॥
आदित्यायनमः॥ सोमायनमः॥ दक्षिणशाखायांधात्रेनमः॥ वामशाखायांविधात्रेनम॥ उत्तरांगेग
णेशायनमः॥ अधोदेहल्यांद्वारश्रियैनमः॥ देहलीमध्येवास्तुपुरुषायनमः॥ ध्वजेकुमुदायनमः॥प
ताकायां॥ॐ हैतुकायनमः॥ॐ क्षेत्रपालायनमः॥तत्रैवब्रह्मणेनमः॥रुद्रायनमः॥ देवेभ्योनमः॥सि
द्धेभ्योनमः॥ विद्याधरेभ्योनमः॥ पन्नगेभ्योनमः॥ द्वारशाखयोर्नं॥ दिनेनमः॥ महाकालायनमः॥ इति-

द्वारयोः ॥ एवंद्वारंसंपूज्य द्वारस्थितकलशे द्वारे वा ॥ इन्द्रमावाहयेत् ॥ एह्येहिसर्वामरसिद्धसाध्यैरभि
ष्टुतोवज्रधरोमहेशः ॥ संवीज्यमानोप्सरसांगणेन ॥ रक्षाध्वरंनोभगवन्नमस्ते ॥ भोइन्द्रइहागच्छ ॥
इहतिष्ठ इतित्वावाह्य ॥ ॐ इंद्रंपरेवरेमध्यमासः ॥ इन्द्रंयांतोवसितय ॥ इन्द्रंक्षियंतउतयुध्यमाना ॥ इन्द्रं
नरोवाजयंतेहवंते इत्यनेन इन्द्रंसन्निधानं ॥ ततः त्रातारमिंद्रमितिमंत्रेण ॥ इन्द्रायसामगायत ॥ इतिमंत्रे
णवा ॥ इन्द्रस्यसर्वोपचारैःपूजनं ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳ शूरमिन्द्रम् ॥ ह्व
यामिशक्रंपुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः ॥ २०५० ॥ इन्द्रायसामगायत ॥ विप्रायबृहतेबृ
हते ॥ धर्मकृतेविपश्चिते ॥ विवस्वते ॥ अथबलिदानम् ॥ इन्द्रायसांगायसपरिवारायसशक्तिकाय ॥

इमंघृतोदनबलिंसमर्प्पयामि ॥ भोइन्द्रअस्ययजमानस्यसकुटंबस्यसपरिवारस्यआयुःकर्त्ताक्षे
मकर्त्ता॥ तुष्टिकर्त्ता॥ पुष्टिकर्त्ता॥ वरदोभव॥ इतिबलिंसमर्प्य आचमेत्॥ अथनमस्कारः॥ इंद्रःसुर
पतिश्रेष्ठोवज्रहस्तोमहाबलः॥ शतयज्ञाधिपोदेवस्तस्मैनित्यंनमोनमः॥ इतिनत्वाप्रार्थयेत्॥ सचीप
तिगजारूढवज्रहस्तसुराधिप॥ पूर्वविकाशंयुस्माभिरक्षणीयंप्रयत्नतः॥ इतिप्रार्थनं॥ अग्निमीळेति
मंत्रेणऋग्वेदमावाह्यपूजयेत्॥ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम्॥ अग्निर्ठि॰ होतारंरत्नधातमम्
॥ ऋग्वेदः पद्मपत्राक्षोगायत्र्यः सोमदैवतं॥ अत्रिगोत्रस्तुविप्रेन्द्रऋत्विकुलंमेमखेभवेतिध्यानम्॥ ऋग्वे
दप्रतिनिधिलेनऋग्वेदीयंब्राह्मणंगंधादिनापूजयेत्॥ तत्रपूर्वद्वारिस्थीसूक्तंपावमानंचसोमसूक्तंचमंगलं

पौरुषंरुद्रसूक्तंचवामदेव्यंतथैवचेति॥ब्राह्मणद्वकर्तृकोद्वारपालजप॥इतिपूर्वद्वारपूजा॥अथाग्ने
यकोणेगत्वा॥तत्रकलशंसंस्थाप्य॥ पुंडरीकायनम॥इतिसंपूज्य॥ छागस्थंमग्निवर्णंध्यात्वाकलशे
आवाहयेत्॥ एह्येहिसर्वामरहव्यवाह मुनिप्रवर्यैरभितोभिजुष्ट॥तेजोवनीलोकगणेनसार्द्धंममा-
ध्वरंपाहिकवयेनमस्ते॥ भोअग्नेइहागच्छेहतिष्ठत्यावाह्य॥ अग्निस्तिग्मेतिमंत्रेणअग्निंप्रपूजयेत्॥
अग्निस्तिग्मेनशोचिषायासद्विश्वन्न्यत्रिणम्॥अग्निर्नोवनतेरयिम्॥१७।१६॥अथनमस्कारः॥
सर्वदेवमयोदेवोरक्तोवन्हिर्महाबलः॥सप्तजिव्होमहावीर्यस्तस्मैनित्यंनमोनमः॥ आग्नेयःपुरुषोरक्तः
सर्वदेवमयोव्ययः॥ धूम्रकेतुरजोध्यक्षस्तस्मैनित्यंनमोनम॥ इतिनमेत्॥ ततअग्नआयाहीतिमंत्रेण

रक्तध्वजपताकालंभः॥ त्वंनोअग्नेइतिमंत्रेणध्वजपताकोच्छ्रयः॥ अग्नऽआयाहिवीतयेगृणानोहव्यदात
येनिहोतासत्सिबर्हिषि॥ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः यजिष्ठोवह्नितमःशो
शुचानोविश्वाद्वेषाᳪंसिप्रमुमुग्ध्यस्मत्॥२१।३॥ धामंतेइतिमंत्रेणध्वजपताकयोःपूजनं॥ धामन्तेवि
श्वम्भुवनमधिश्रितमन्तःसमुद्रेहृद्यन्तरायुषि॥ अपामनीकेसमिथेयऽआभृतस्तमश्याममधुमन्
तन्तऽऊर्मिम्॥१७।९९॥ ध्वजेकुमुदायनमः॥ योमेदंड॥इतिमंत्रेणदंडालंभः॥ त्रिपुरन्नायक्षेत्रपाला-
यनमः॥ नमस्तेत्वग्निरूपायपिंगलायमहात्मने॥ चंडायचंडरूपायरक्षत्वंहव्यबाहन॥ इतिनत्वा अग्निं
दूतमितिमंत्रेणघृतोदनबलिदानं॥ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे॥ देवाँ॥ऽआसादयादिह

॥२२।१७॥ अग्नयेसांगाय सपरि वाराय इमं बलिं समर्पयामि॥ भोअग्नेदिशंरक्ष बलिंभक्ष॥ अस्यय
जमानस्य सकुटुंबस्यसपरि वारस्य॥ आयुकर्त्ता॥ क्षेमकर्त्ता॥ तुष्टिकर्त्ता॥ पुष्टिकर्त्ता॥ वरदोभवेत्युक्त्वा॥
आचम्यदक्षिणद्वारंपूजयेत्॥ इत्याग्नेयकोणकृत्यं॥ अथदक्षिणद्वारपूजा॥ नमस्तेधर्मराजाय त्रेतायु
गाधिपायच॥ यजुर्वेदाधिदेवाय सुभद्रद्वाररक्षिणे॥ इत्यनेन द्वारदेवताआवाहनं॥ धर्म्मिष्ठाभिधायश्री
धान्याधिष्ठितायदक्षिणद्वारायनमः॥ सारवयोर्वस्त्राणिबध्वा॥ शारवामूलयोधान्यपुंजोपरिपर्जन्य-
अशोकनामानौकलशौपूर्ववत्संस्थाप्य॥ गंधादिनापूजयेत्॥ तत्रैवामनायनमः॥ गोदावर्यैनमः॥
कृष्णायैनमः॥ रुद्रायनमः॥ द्वारसारवयोः॥ ॐस्वर्लोकायनमः॥ ॐ महर्लोकायनमः॥ ॐ भौमायन

मः॥ ॐ बुधायनमः॥ ऊर्ध्वं यजुर्वेदायनमः॥ दक्षिणशाखायांचंडायनमः॥ वामशाखायां प्रचंडायनमः॥ तत्रैव धात्रेनमः॥ विधात्रेनमः॥ उत्तरांगेगणपतयेनमः॥ अधोदेहल्यां द्वारश्रियैनमः॥ देहलीमध्ये वास्तुपुरुषायनमः॥ तत्रैव गायत्र्यैनमः॥ श्रियैनमः॥ सरस्वत्यैनमः॥ दक्षिण वामशाखयो गणेशायनमः॥ वृषभायनमः॥ अस्यास्व क्षेत्रपालायनमः॥ एवंद्वारंसंपूज्य द्वारदेशे यमंश्यामंदंडहस्तंमाहिषारूढं ध्यात्वा॥ आवाहयेत्॥ एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चितधर्ममूर्ते॥ शुभाशुभानंद सुचामधीश रक्षाध्वरंनो भगवन्नमस्ते॥ भोयम इहागच्छेहतिष्ठेत्यावाह्य यमायत्वेतिमंत्रेण यमंसर्वोपचारैरर्चयेत्॥ यमायत्वामखाय त्वासूर्यस्य त्वातपसे॥ देवस्त्वासवितामध्वानक्तु पृथिव्याः संस्पृशस्पाहि॥ अर्चिरसिशोचिरसितपो

सि॥ ३७।११॥ अनेनैवमंत्रेणश्यामध्वजपताकालंभः॥ यमायत्वांगिरस्वते इतिमंत्रेणतोरणोपरिनि
धानं॥ यमायत्वाङ्गिरस्वतेपितृमतेस्वाहा स्वाहा धर्म्मायस्वाहा धर्म्मः पित्रे॥३८।१॥ योमेदंडइतिदं
डालंभः योमेदण्डः परापतद्वैहायसोधिभूम्यान्तमहं पुनरादद आयुषेब्रह्मणेब्रह्मवर्चसाय॥ दंडहस्तो
यमोदेवोधर्मराजोमहाबलः॥ आवाहयेद्धर्मराजंतस्मैनित्यंनमोनमः॥ इतिनत्वाप्रार्थयेत्॥ महामहिषमा
रूढदंडहस्तमहाबल॥ आवाहयामि यज्ञेस्मिन्पूजेयंप्रतिगृह्यतांमितिप्रार्थ्य॥ सुगन्तुपंथामितिगृह्यसू
क्तमंत्रेणमाषभक्तबलिदानं॥सुगन्तुपंथांप्रदिशन्नएहिज्योतिष्मध्येह्यजरन्नआयुः॥ अपैतुमृत्युरमृतंम
आगाद्वैवस्वतोनोअभयंकृणोतुस्वाहा॥इतिपठित्वा॥ यमायसांगायसायुधायसशक्तिकायइमंबलिंसम

र्पयामि ॥ इत्युक्त्वा भोयमदिशांरक्षबलिंभक्ष अस्य यजमानस्य सकुटुंबस्य आयुः कर्ता ॥ क्षेमकर्ता ॥
तुष्टिकर्ता ॥ पुष्टिकर्ता ॥ वरदोभवेत्युक्त्वा प्रार्थयेत् ॥ वैवस्वतमहादेवनमस्तेधर्मसाक्षिक ॥ शिवाज्ञापिहितो
देवदिशंरक्षभवानिह ॥ इतिसंप्रार्थ्य आचमेत् ॥ ततः इषेत्वेतिमंत्रेणयजुर्वेदं पूजयेत् ॥ इषेत्वोर्ज्जेत्वोवा
यवस्थदेवोवः सविताप्रार्प्पयतुश्रेष्ठतमायकर्म्मणऽआप्यायद्ध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽ
अयक्ष्मामावस्तेनऽईशतमघशंसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ १ ॥ १ ॥
इतिपठित्वा यजुर्वेदं ॥ प्रतिनिधित्वेन यजुर्वेदीयंब्राह्मणंगंधादिनापूजयेत् ॥ अथयजुर्वेदध्यानं ॥ कातरा
क्षोयजुर्वेदस्त्रैष्टुभोविष्णुदैवतः ॥ काश्यपेयस्तुविप्रेंद्रकाविकृतंमेमखेभवेतियजुर्वेदध्यानं ॥ ततआनोभ

द्वानुवाकस्य ॥ आशुःशिशानकस्तथा ॥ यद्देवात्रीणिचपठेत्ततोद्वौच पुनंतुमां ॥ आभिधाआसिसमैवदी

र्घायुस्तेऋचंपठेत् ॥ आप्यायस्वषट् नमोस्तुसर्पेभ्यः ॥ आकृष्णेननमः ॥शंभवेत्येकां ॥ एकाग्निर्दैवताक्रमात्

॥ त्रातारमिंद्रमित्येकां सोमंराजानमेकया ॥ अभयतेमहाँ इंद्रः ऋचंवाचंसमग्रंपठेत् ॥ अथेमानिमंत्राणिक्र-

मेणप्रदर्श्यंते ॥ आनोभद्राः क्रतवोयन्तुविश्वतोदब्धासोअपरीतासउद्भिदः ॥ देवानोयथासदमिद्वृधे

असन्नप्रायुवोरक्षितारोदिवेदिवे ॥ २५ । १४ । १ ॥ आशुः शिशानोवृषभोनभीमोघनाघनः क्षोभणश्च-

र्षणीनाम् ॥ संक्रन्दनोऽनिमिषएकवीरः शतꣳसेनाअजयत्साकमिन्द्रः ॥ १७ । ३३ । १ ॥ अथयद्देवाइत्या

दित्रीणिमंत्राणि ॥ यद्देवादेवहेडनन्देवासश्चकृमावयम् ॥ अग्निर्मातस्मादेनसोविश्वान्मुञ्चत्वꣳ

हंसः ॥२०।१४॥ यदि दिवा यदि नक्तमेनाꣳसि चकृमा वयम् ॥ वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्व
ꣳहसः ॥२०।१५॥ यदि जाग्रद्यदि स्वप्नऽएनाꣳसि चकृमा वयम् ॥ सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्व
ꣳहसः ॥२०।१६॥ अथ पुनंतु मामित्यादीनि अष्टमंत्राणि ॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः पुनन्तु वि
श्वा भूतानि जातवेदः पुनीहि मा ॥१९।३९॥ पवित्रेण पुनीहि मा ॥ शुक्रेण देव दीद्यत् ॥ अग्ने क्रत्वा क्रतू
ꣳ॥ऽरनु ॥१९।४०॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ॥ ब्रह्म तेन पुनातु मा ॥१९।४१॥ पवमानः सोऽ
अद्य नः पवित्रेण विचर्षणिः ॥ यः पोता स पुनातु मा ॥१९।४२॥ उभाभ्यां देव सवितः पवित्रेण सवेन च ॥
मां पुनीहि विश्वतः ॥१९।४३॥ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः तया

मदन्तः सधमादेषु वय ७ं स्याम पतयो रयीणाम् ॥ ११।४४ ॥ ये समानाः समनसः पितरो यमरा
ज्ये । तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ ११।४५ ॥ ये समानाः समनसो जीवा जीवेषु
मामकाः ॥ तेषा ७ं श्रीर्मयि कल्पतामस्मिँल्लोके शत ७ं समाः ॥ ११।४६ ॥ अथ यन्नाभि धासि इत्या-
दीनि सप्तमंत्राणि ॥ नाभिर्या ऽ असि भुवनमसि यन्तासि धर्त्ता ॥ सत्वमग्निं वैश्वानर ७ं सप्रथसङ्ग
च्छ स्वाहाकृतः ॥ २१।३ ॥ स्वगा त्वा देवेभ्यः प्रजापतये ब्रह्मन्नश्वम्भन्त्स्यामि देवेभ्यः प्रजापतये
तेन राध्यासम् ॥ तम्बधान देवेभ्यः प्रजापतये तेन राध्नुहि ॥ २१।४ ॥ प्रजापतये त्वा जुष्टम्प्रोक्षामी
न्द्राग्निभ्यान्त्वा जुष्टम्प्रोक्षामि वायवे त्वा जुष्टम्प्रोक्षामि विश्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामि सर्वेभ्य

प्रतिष्ठा ॥ स्त्वा देवेभ्यो जुष्टम्प्रोक्षामि योऽअर्व्वन्तञ्जिघांसति तमभ्यमीति वरुणः। परो मर्त्तः परः श्वा ॥ मं.ड.पू.

२१ ॥२१।५॥ अग्नये स्वाहा ॥ सोमाय स्वाहा ॥ अपाम्मोदाय स्वाहा ॥ सवित्रे स्वाहा ॥ वायवे स्वाहा ॥ वि-
ष्णवे स्वाहा ॥ इन्द्राय स्वाहा ॥ बृहस्पतये स्वाहा ॥ मित्राय स्वाहा ॥ वरुणाय स्वाहा ॥२१।६॥ हिङ्का-
राय स्वाहा ॥ हिङ्कृताय स्वाहा क्रन्दते स्वाहा ॥ अवक्रन्दाय स्वाहा ॥ प्रोथते स्वाहा ॥ प्रप्रोथाय स्वा-
हा ॥ गन्धाय स्वाहा ॥ घ्राताय स्वाहा ॥ निविष्टाय स्वाहा उपविष्टाय स्वाहा ॥ सन्दिताय स्वाहा ॥ वल्-
गते स्वाहा ॥ आसीनाय स्वाहा ॥ शयानाय स्वाहा ॥ स्वपते स्वाहा ॥ जाग्रते स्वाहा ॥ कूजते स्वाहा ॥ प्रबुद्धाय ॥ २१
स्वाहा ॥ विजृम्भमाणाय स्वाहा ॥ विचृत्ताय स्वाहा ॥ सꣳहानाय स्वाहोपस्थिताय स्वाहा ॥ अयनाय स्वा

हा ॥ अयणाय स्वाहा ॥ २१ । ७ ॥ यते स्वाहा ॥ धावते स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा ॥ शूकाराय स्वाहा ॥ शूकृताय स्वाहा ॥ निषण्णाय स्वाहोत्थिताय स्वाहा ॥ जवाय स्वाहा ॥ बलाय स्वाहा ॥ विवर्तमानाय स्वाहा ॥ विवृत्ताय स्वाहा ॥ विधून्वानाय स्वाहा ॥ विधूताय स्वाहा ॥ शुश्रूषमाणाय स्वाहा ॥ शृण्वते स्वाहेक्षमाणाय स्वाहेक्षिताय स्वाहा ॥ वीक्षिताय स्वाहा ॥ निमेषाय स्वाहा ॥ यदत्ति तस्मै स्वाहा ॥ यत्पिबति तस्मै स्वाहा ॥ यन्मूत्रं करोति तस्मै स्वाहा ॥ कुर्वते स्वाहा ॥ कृताय स्वाहा ॥ २१ । ८ ॥ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ २१ । ९ ॥ अथ यदि दीर्घायुस्त्वे इत्यादेकमन्त्रं ॥ दीर्घायुस्त्व ऊषधे पनिता यस्मै च त्वा खनाम्यहम् ॥ अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥

॥१२।१००॥ अथआप्यायस्वेत्यादीनिषट्मंत्राणि ॥ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम्
॥ भवावाजस्यसङ्गथे ॥१२।११२॥ सन्ते पयांसिसमुयन्तुवाजाः संवृष्ण्यान्यभिमातिषाहः
॥ आप्यायमानोऽअमृतायसोमदिविश्रवांस्युत्तमानिधिष्व ॥१२।११३॥ आप्यायस्व ॥ मदिन्त
मसोमविश्वेभिरंशुभिः भवानःसप्रथस्तमःसखावृधे ॥१२।११४॥ आतेवत्सोमनोयमत्पर
माच्चित्सधस्थात् ॥ अग्नेत्वाङ्कामयागिरा ॥१२।११५॥ तुभ्यन्ताऽअङ्गिरस्तमविश्वाःसुक्षितयःपृ
थक् ॥ अग्नेकामाययेमिरे ॥१२।११६॥ अग्निःप्रियेषुधामसुकामोभूतस्यभव्यस्य ॥ सम्राडेको
विराजति ॥१२।११७॥ अथनमोस्तुसर्प्पेभ्य ॥ इतिमंत्रं ॥ नमोस्तु ॥ सर्प्पेभ्योयेकेचपृथिवीमनु येऽअ-

न्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥१३।६॥ अथ आकृष्णेन इत्यादि मंत्रः ॥ आकृष्णेन रजसा व
र्त्तमानो निवेशयन्नमृतं मर्त्यं च ॥ हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन् ॥३३।४३
॥ अथ नमः संभवाय चेत्येकमंत्रः ॥ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय
च नमः शिवाय च शिवतराय च ॥१६।४१॥ अथाग्निर्देवता इत्यादि मंत्रः ॥ अग्निर्देवता वातो देवता
सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वे देवा देवता बृ-
हस्पतिर्देवतेन्द्रो देवता वरुणो देवता ॥१४।२०॥ अथ त्रातारमिंद्रमित्यादि मंत्रः ॥ त्रातारमिन्द्रमवि
तारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् ॥ ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥२०।

५७॥ अथसोमᳬ राजानमितिमंत्रं॥सोमᳬ राजानमवसेग्निमन्वारभामहे॥आदित्यान्विष्णुᳬ सूर्य्यम्ब्रह्माणञ्च बृहस्पतिᳬ स्वाहा॥१।२६॥ अथमहाइंद्रइतिमंत्रं॥महाँ२ इन्द्रो वज्रहस्तः षोडशीशर्म्मयच्छतु॥हन्तुपाप्मानंयोस्मान्द्वेष्टि उपयामगृहीतोसिमहेन्द्रायत्वैषतेयोनिर्म्महेन्द्रायत्वा॥२६।१०॥ अथऋचंवाचमित्यादीनिसप्तयाणिचतुर्विंशतिमंत्राणि॥ऋचंवाचम्प्रपद्येमनोयजुःप्रपद्येसामप्राणम्प्रपद्येचक्षुःश्रोत्रम्प्रपद्ये॥वागोजःसहौजोमयिप्राणापानौ॥३६।१॥ यन्मे।छिद्रञ्चक्षुषोहृदयस्यमनसोवातितृण्णम्बृहस्पतिर्म्मेतद्दधातु॥शन्नोभवतुभुवनस्ययस्पतिः॥३६।२॥ भूर्भुवःस्वः तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि॥धियोयोनः प्र-

चोदयात् ॥ ३६ । ३ ॥ कया नश्चित्र ऽआ भुवदूती सदावृधः सखा ॥ कया शचिष्ठया वृता ॥ ३६ । ४ ॥ क
स्त्वा सत्यो मदानाम्मᳫंहिष्ठो मत्सदन्धसः ॥ दृढा चिदारुजे वसु ॥ ३६ । ५ ॥ अभी षु णः सखीनामविता
जरितॄणाम् ॥ शतम्भवास्यूतिभिः ॥ ३६ । ६ ॥ कया त्वन्न ऽ ऊत्याभि प्र मन्दसे वृषन् ॥ कया स्तोतृभ्य ऽ
आ भर ॥ ३६ । ७ ॥ इन्द्रो विश्वस्य राजति ॥ शन्नो ऽ अस्तु द्विपदे शञ्चतुष्पदे ॥ ३६ । ८ ॥ शन्नो मित्रः शं व
रुणः शन्नो भवत्वर्य्यमा ॥ शन्न ऽ इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥ ३६ । ९ ॥ शन्नो वातः पव
ताᳫं शन्नस्तपतु सूर्य्यः ॥ शन्नः कनिक्रदद्देवः पर्ज्जन्यो ऽ अभि वर्षतु ॥ ३६ । १० ॥ अहानि शम्भवन्तु नः
शᳫं रात्रीः प्रति धीयताम् ॥ शन्न ऽ इन्द्राग्नी भवतामवोभिः शन्न ऽ इन्द्रावरुणा रातहव्या ॥ शन्न ऽ इन्द्रा

पूषणा वाजसातौ शमिन्द्रासोमा सुविताय शंयोः॥ ३६।११॥ शन्नो देवीरभिष्टय आपो भवन्तु पीतये॥
शंयोरभिस्रवन्तु नः॥ ३६।१२॥ स्योना पृथिवि नो भवानृक्षरा निवेशनी॥ यच्छा नः शर्म सप्रथाः॥
३६।१३॥ आपो हि ष्ठा मयोभुवस्तान ऊर्जे दधातन॥ महे रणाय चक्षसे॥ ३६।१४॥ यो वः शिवतमो र-
सस्तस्य भाजयतेह नः उशतीरिव मातरः॥ ३६।१५॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ॥
आपो जनयथा च नः॥ ३६।१६॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः
शान्तिः॥ वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः
सा मा शान्तिरेधि॥ ३६।१७॥ दृते दृꣳह॥ मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्॥ मित्रस्या

हं चक्षुषा सर्वाणि भूतानि समीक्षे ॥ मित्रस्य चक्षुषा समीक्षामहे ॥ ३६ । १८ ॥ दृते दृꣳह मा ॥
ज्योक्ते सन्दृशि जीव्यासं ज्योक्ते सन्दृशि जीव्यासम् ॥ ३६ । १९ ॥ नमस्ते हरसे शोचिषे नमस्ते ऽ
अस्त्वर्चिषे ॥ अन्याँस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यꣳ शिवो भव ॥ ३६ । २० ॥ न
मस्ते ऽअस्तु विद्युते नमस्ते स्तनयित्नवे ॥ नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥ ३६ । २१ ॥ य
तो यतः समीहसे ततो नो ऽअभयं कुरु ॥ शन्नः कुरु प्रजाभ्यो ऽभयन्नः पशुभ्यः ॥ ३६ । २२ ॥ सुमित्रि
या न ऽआप ऽओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु यो ऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः ॥ ३६ । २३ ॥
तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम शरदः शतञ्जीवेम शरदः शरदः शतꣳ शृणुयाम श

रदःशतꣳशृणवामशरदःशतमदीनाःस्यामशरदःशतम्भूयश्चशरदःशतात्॥३६।२४॥इति
दक्षिणद्वारपूजा॥अथनैर्ऋत्यांगत्वातत्रकलशंसंस्थाप्य॥कुमुदायनमः॥इतिसंपूज्य॥नरारूढं
खड्गहस्तंनिर्ऋतिमसुन्वंतयजमानइतिमंत्रेणावाहयेत्॥असुन्वन्तमयजमानमिच्छस्तेनस्ये
त्यामन्विहितस्करस्य॥अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु॥१२।६२॥ए
ह्येहिरक्षोगणनायकस्त्वंविशालवेतालपिशाचसंघैः ममाध्वरंयाहिपिशाचनाथलोकेश्वरस्त्वांभगव
न्नमस्ते ॐनिर्ऋतेइहागच्छइहतिष्ठत्यावाह्यनिर्ऋतयेनमः॥इतिसंपूज्यनमस्कारंकुर्यात्॥सर्वप्रेता
धिपोदेवोनिर्ऋतिर्नीललोहितः॥करेखड्गधरोनित्यंनैर्ऋतायनमोनमः॥अथप्रार्थना॥निर्ऋतिखड्ग

हस्तंचसर्वलोकैकपावनं॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां॥ यंतेदेवीनिर्ऋतिरितिमंत्रे
णकृष्णध्वजपताकालंभः॥ एषतेनिर्ऋतेभागइतिमंत्रेणध्वजपताकोछ्रयः॥ यन्तेदेवीनिर्ऋतिराब
बन्धपाशंग्रीवास्वविचृत्यम्॥ तन्तेविष्याम्यायुषोनमध्यादथैतम्पितुमद्धिप्रसूतः॥ नमोभूत्यै
येदञ्चकार॥१२।६५॥ एषतेनिर्ऋतेभागस्तञ्जुषस्वस्वाहाग्निनेत्रेभ्योदेवेभ्यःपुरःसद्भ्यःस्वाहा
यमनेत्रेभ्योदेवेभ्योदक्षिणासद्भ्यःस्वाहाविश्वदेवनेत्रेभ्योदेवेभ्यःपश्चात्सद्भ्यःस्वाहामित्रावरु
णनेत्रेभ्योवामरुन्नेत्रेभ्योवादेवेभ्यऽउत्तरासद्भ्यःस्वाहासोमनेत्रेभ्योदेवेभ्यऽउपरिसद्भ्योदुवस्व
द्भ्यःस्वाहा॥९।३५॥ मोषुणइंद्रेतिमंत्रेणकृष्णवत्सन्मांघृतसहितबलिंदद्यात्॥ मोषूणऽइन्द्रात्रपृत्सु

देवैरस्तिहिष्मांतेऽस्मिन्नवयाः सुहस्त्रिद्यस्यमीदुषोयुष्माहविष्मंतोमरुतोवन्दतेगीः ॥ ३ ॥ ४६ ॥ इतिमंत्रंपठित्वा ॥ निर्ऋतयेसांगायसशक्तिकायसायुधायेमंबलिंसमर्पयामि ॥ भोनिर्ऋतेदिशांरक्षबलिंभक्षअस्ययजमानस्यसकुटुंबस्यसपरिवारस्य ॥ आयुःकर्ता ॥ क्षेमकर्ता ॥ तुष्टिकर्ता ॥ पुष्टिकर्ता ॥ वरदोभवेत्युक्त्वा आचमेत् ॥ ध्वजेवामनायनमः ॥ योमेदंड इतिदंडालंभ ॥ अग्निजिह्वारक्षेत्रपालायनमः ॥ राक्षसेभ्योहिरक्षार्थंभवानत्रप्रतिष्ठितः ॥ निर्विघ्नांयज्ञभूमिंत्वंकुरुष्वशववाहनं ॥ इतिप्रार्थयेत् ॥ इतिनैर्ऋत्यादिकृत्यं ॥ अथपश्चिमद्वारपूजा ॥ नमोस्तुकामरूपायपश्चिमद्वारपायच ॥ सामवेदाधिपत्वंहिनाम्नाकल्याणकारक ॥ अनेनद्वारदेवताआवाहनं ॥ द्वारशाखयोः

अनिलायनमः ॥ अनलायनमः ॥ इतिवसुद्वयंनाममंत्रैःपूजयेत् ॥ शृंगेषुशाखयोर्वस्त्राणिवध्वा ॥
शाखामूलयोर्धान्यपुंजोपरिभूतसंजीवन ॥ अमृतनामानौकलशौपूर्ववत्स्थाप्य ॥ अंजनायनमः
॥ कलशद्वयेरेवायैनमः ॥ ताप्यैनमः ॥ इतिसंपूज्य ॥ जयसाभिधाय अच्युताधिष्ठितायपश्चिम
द्वारायनमः ॥ इदंविष्णुरितिमंत्रेणविष्णुतआवाह्यपूजयेत् ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपद
म् ॥ समूढमस्यपांसुरेस्वाहा ॥ ५ ॥ १५ ॥ द्वारशाखयोर्धात्रेनमः ॥ विधात्रेनमः ॥ किरीटिनेनमः ॥ स्कं
दायनमः ॥ इतिद्वारयोः ॥ द्वारशाखयोरेव ॥ ॐ जनलोकायनमः ॥ ॐ तपोलोकायनमः ॥ बृहस्पतयेन
मः ॥ शुक्रायनमः ॥ उर्द्धसामवेदायनमः ॥ द्वारशाखयोरेव ॥ ॐ नर्मदायैनमः ॥ ॐ गोदावर्य्यैनमः ॥ उ

त्तरां गे गणेशायनमः ॥ अधो देहल्यां द्वारश्रियैनमः ॥ देहलीमध्ये वास्तुपुरुषायनमः ॥ एवं संपूज्य पा
सहस्तं शुक्लवर्णं किरीटिनं वरुणं ध्यात्वा ॥ कलशे आवाहयेत् ॥ पासहस्तात्मको देवो जलराड्याधिपो म
हान् ॥ निम्नगामीति विख्यातो वरुणायनमोनमः ॥ एत्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरो
भिः ॥ विद्याधरैंद्रामरगीयमानयाहित्वमस्मान् भगवन्नमस्ते ॥ भो वरुण इहागच्छ इह तिष्ठेत्यावाह्य ॥ तत्वा
यामीति मंत्रेण वरुणं सर्वोपचारैः प्रपूजयेत् ॥ तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो ह
विर्भिः ॥ अहेडमानो वरुणेह वोध्युरुशꣳस मान आयुः प्रमोषीः ॥ २१२ ॥ अनेनैव मंत्रेणस्यां मध्व
ज पताकालंभ ॥ उदुत्तमं वरेणेति मंत्रेण तोरणोपरि निधानं ॥ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्य

मथं३श्रथाय॥ अथोवयमादित्यव्रतेतवानागसोऽअदितयेस्याम॥१०।१२॥ त्वन्नोऽअग्नेइतिमंत्रेणन
वनीतोदनबलिदानं॥ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः॥ यजिष्ठोवह्नि-
तमःशोशुचानोविश्वाद्वेषांथंसिप्रमुमुग्ध्यस्मत्॥२१।३॥ इतिपठित्वा॥ वरुणायसांगायस
शक्तिकायइमंनवनीतोदनबलिंसमर्पयामि इत्युक्त्वा॥ भोवरुणदिशांरक्षबलिंभक्ष॥ अस्ययज
मानस्यसकुटुंबस्यसपरिवारस्य॥ आयुःकर्त्ता॥ क्षेमकर्ता॥ तुष्टिकर्ता॥ पुष्टिकर्ता॥ वरदोभवेतिपठि
त्वा॥ आचम्यवरुणंप्रार्थयेत्॥ पाशहस्तंचवरुणमपांपतिमीश्वरं॥ आवाहयामियज्ञेस्मिन्वरुणा
यनमोनमः॥ इतिसंप्रार्थ्यध्वजेसंकुकरणायनमः योमेदंडइतिदंडालंभ योमेदण्डःपरापतद्वैहा यशो

धिभूम्यांतमहं पुनराददे आयुषेब्रह्मणेब्रह्मवर्च्चसाय ॐअजेकालायक्षेत्रपालायनमः॥ इतिनामम
मंत्रेणसंपूज्य॥ अग्नआयाहीतिमंत्रेणसामवेदंपूजयेत्॥ अग्नऽआयाहिवीतयेगृणानोहव्यदातये
निहोतासत्सिबर्हिषि॥ सामवेदस्तुपिंगाक्षोजागतःशुक्रदैवत भारद्वाजस्तुविप्रेन्द्रआत्विकृत्वंमेमन-
रेभवेतिपठित्वासामवेदप्रतिनिधित्वेनसामवेदीयंब्राह्मणंगंधादिनापूजयेत्॥ तत्रब्राह्मणद्वयक
र्तृकोमंत्रपाठः॥ इन्द्रायसामगायत॥ इत्येकं॥ अहमस्मिन्नितिद्वितीयं॥ प्रथमजाइतितृतीयंसेतुंस्त
रइतितृतीयं॥ स्वादिष्टयाइतिचतुर्थं॥ गायंतित्वागायत्रिणइतिपंचमं॥ ज्येष्ठमासइतिषष्ठमंत्रं॥ अथेड
मानिमंत्राणिक्रमेणप्रदर्शयंति॥ अथवायव्ये॥ तत्रकलशंसंस्थाप्य तस्मिन्कलशेपुष्पदंतायनमः॥ इ

४६

तिसंपूज्य॥ आनोनियुद्भिरित्यावाहनं॥ आनोनियुद्भिः शतनीभिरध्वरꣳ सहस्त्रिणीभिरुपयाहियज्ञ
म्॥ वायोअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः॥२७।२८॥ इतिपठित्वा॥ मृगाधिरूढं
धूम्रवर्णंवायुंध्यात्वाआवाहयेत्॥ एह्येहि यज्ञेममरक्षणायमृगाधिरूढःसहसिद्धसंघैः प्राणाधिपःका
लकवेःसहायगृहाणपूजांभगवन्नमस्ते भोवायुइहागच्छइहतिष्ठेत्यावाह्यवायोयेतेइतिमंत्रेणधूम्र
ध्वजपताकालंभनंकुर्यात्॥ वायोयेतेसहस्त्रिणोरथासस्तेभिरागहि॥ नियुत्वान्त्सोमपीतये॥२७
३२॥ तववायोइतिमंत्रेणध्वजपताकोच्छ्रयः तववायवृतस्पतेत्वष्टुर्जामातरद्भुत॥ अवाꣳस्या
वृणीमहे॥२०।३४॥ आनोनियुद्भिरितिमंत्रेणपूजयेत्॥ आनोनियुद्भिः शतनीभिरध्वरꣳ स

हरिणीभिरुपयाहि यज्ञम् ॥ वायोऽस्मिन्त्सवनेमादयस्व यूयम्पातस्वस्तिभिःसदानः ॥२७
२८ ॥ इति संपूज्य नमेत् ॥ सर्वप्राणात्मको नित्यं सर्वप्राणा युरुच्यते ॥ ध्वजहस्तो महाप्राणस्तस्मै
प्राणात्मने नमः ॥ अनाकारो महोज्याश्च पश्चात् दृष्टिर्गतिर्दिवि ॥ तस्मै पूज्याय महते वायुमहं नमा
मि चेति नत्वा ॥ ध्वजे सार्वभौमाय नमः ॥ यो मे दंड इति दंडारोपणं यो मे दंडः परापतद्वैहायसो
धि भूम्यां तमहं पुनराददे दंडे सर्वनेत्राय क्षेत्रपालाय नमः ॥ इति नत्वा ॥ यवोदनेन बलिं दद्यात् ॥
वायवे सांगाय सायुधाय सशक्तिकाय इमं यवोदनबलिं समर्पयामि ॥ भो वायो दिशां रक्ष बलिं भक्ष
॥ अस्य यजमानस्य सकुटुंबस्य सपरिवारस्य ॥ आयुःकर्ता ॥ क्षेमकर्ता ॥ तुष्टिकर्ता ॥ पुष्टिकर्ता ॥

वरदोभवेइत्युक्त्वा आचम्य प्रार्थनांकुर्यात्॥ प्राणिनांप्राणरूपोयोमहाबलपराक्रमः॥ महावेग
समारूढदिशंरक्षप्रभंजन॥ इतिवायव्यदिक्कृत्यं॥ अथान्तरद्वारकृत्यं॥ नमस्तेदिव्यरूपायतव
थर्वाधिपतेप्रभो॥ कलेरधिपतिर्नाम्नामंगलचोत्तरानन॥ इतिद्वारदेवतामावाह्य कल्याणाभिधा
य प्रद्युम्नाधिष्ठितायचोत्तरद्वारायनमः॥ इतिपूजयेत्॥ प्रद्युम्नायनमः॥ द्वारशाखयो॥ ॐ प्र-
त्यूषायनमः॥ ॐ प्रभासायनमः॥ इतिवसुद्वयंनाममंत्राभ्यांपूजयेत्॥ शृंगेषुशाखयोर्वस्त्राणिब
ध्वा शाखामूलयोर्धान्यपुंजोपरिधनद श्रीप्रदनामानौकलशौपूर्ववत्संस्थाप्य॥ धनदायनमः॥
श्रीप्रदायनमः॥ सार्वभौमायनमः॥ इतिदिगीशांसंपूज्यकलशद्वयेवेण्येनमः॥ इतिसंपूज्यक-

ल्याणाभिधाय प्रद्युम्नाधिष्ठितायोत्तरद्वारायनमः ॥ प्रद्युम्नायनमः ॥ शाषयोजयायनमः ॥ विजया
यनमः ॥ पुनः धात्रेनमः ॥ विधात्रेनमः ॥ ॐ सत्यलोकायनमः ॥ ॐ ध्रुवलोकायनमः ॥ पुनः शनै-
श्चरायनमः ॥ राहवेनमः ॥ उर्ध्वेअथर्ववेदायनमः ॥ द्वारशाखयोरेव वेण्यैनमः ॥ पयोष्ण्यैनमः ॥ उ
त्तरांगेगणेशायनमः ॥ अधोदेहिल्यांद्वारश्रियैनमः ॥ देहलीमध्ये वास्तुपुरुषायनमः ॥ पार्वतीशाय
नमः ॥ चंडेश्वरायनमः ॥ इतिद्वार्स्यो ॥ द्वारदेशेहंसःइतिमंत्रेणसोममावाह्यपूजयेत् ॥ हंसः शु
चिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋ
तजाअद्रिजाऋतम्बृहत् ॥ १० । १४ ॥ ततोनरयुतंविमानस्थंकुबेरंध्यात्वाआवाहयेत् ॥ एह्येहि

यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धं ॥ सर्वौषधीभिः पितृभिः सहैव चात्र गृहाण पूजां भग
वन्नमस्ते ॥ भो कुबेर इहागच्छ इह तिष्ठेत्यावाह्य पूजयेत् ॥ ततः सोमो धेनुरिति मंत्रेण सुवर्णवर्णध्व
जपताकालंभः ॥ वयर्ठ० सोमेति मंत्रेण तोरणोपरि निधानं ॥ सोमो धेनुर्ठ० सोमो ऽ अर्वन्तमाशुर्ठ० सो-
मो वीरं कर्मण्यन्ददाति ॥ सादन्यं विदथ्यर्ठ० सभेयं पितृश्रवणं यो ददाशदस्मै ॥ ३४ । २१ ॥ व
यर्ठ० सोम व्रते तव मनस्तनूषु बिभ्रतः प्रजावन्तः सचेमहि ॥ ३ । ५६ ॥ योमेदंड इति दंडालंभ ॥ योमेद
ण्डः परापतद्धेहा यशोधिभूम्यां तमहं पुनराददे वयर्ठ० सोम इत्यव्यचाहितपूर्वोक्तेन मंत्रेण पूजनं
ध्वजे सुमुखाय नमः ॥ एकपादाय क्षेत्रपालाय नमः ततः प्रैयंगवबलिदानं सोमाय सांगाय सायुधाय-

यथाशक्तिकाय इमं बलिं समर्प्पयामि इत्युक्त्वा ॥ भो सोम दिशां रक्ष बलिं भक्ष अस्य यजमानस्य सकु-
टुंबस्य सपरिवारस्य ॥ आयुःकर्ता ॥ क्षेमकर्ता ॥ तुष्टिकर्ता ॥ पुष्टिकर्ता ॥ वरदो भवेति पठित्वा आचम्य
सोमं नमेत् ॥ नक्षत्राणां च सर्वेषां सोमो राजा प्रकीर्तितः ॥ रत्नागाच महाहस्ते सोमराजाय ते नमः ॥ इति न-
त्वा प्रार्थयेत् ॥ सर्वनक्षत्रमध्ये तु सोमराजा व्यवस्थितः ॥ तस्मै सोमाय देवाय नक्षत्रपतये नमः ॥ इति न-
त्वा ॥ शन्नोदेवीति मंत्रेण अथर्ववेदं पूजयेत् ॥ शन्नो देवीरभिष्टय आपो भवन्तु पीतये ॥ शंय्योरभिस्र-
वन्तु नः ॥३६।१२॥ सुवर्णनयनोथर्वानुष्टुप्छंदः पुरंदरः वेदो वैखानगोत्रस्तु ऋत्विक् त्वं मे मखे भवे-
ति ध्यात्वा ॥ अथर्वणवेदप्रतिनिधित्वेन अथर्वणवेदीयं ब्राह्मणं गंधादिना पूजयेत् ॥ ततो ब्राह्मणह-

यकर्तृकोद्वारपालमंत्रपाठः॥ अथर्वांगिरसंचैवअथर्वशिरसंतथा॥ देवींचमधुसूक्तिंचरोधसश्शां
तिमेवच॥ अथर्वाणौद्वारपालौपठतामुत्तरास्थितौ॥ इत्युत्तरद्वारपूजा॥ अथईशान्येगत्वाकलशं
संस्थाप्य॥ तत्रसुमतीकायनमः॥ इतिसंपूज्य॥ तस्मिन्कलशेवृषारूढंत्रिनेत्रंशुक्लवर्णं ईशानंध्यात्वा
आवाहयेत्॥ एह्येहियज्ञेश्वरनस्त्रिशूलकपालखट्वांगगणेसार्द्धं॥ लोकेशयज्ञेश्वरयज्ञसिद्धै गृहाण
पूजांभगवन्नमस्ते॥ भोईशानइहागच्छ इहतिष्ठेतिसंस्थाप्य इत्यावाह्यअभित्वाशूरेतिमंत्रेणईशानंपू-
जयित्वानमस्कारंकुर्यात्॥ अभित्वाशूरनोनुमोदुग्धाइवधेनवः॥ ईशानमस्यजगतः स्वर्दृशमीशा
नमिन्द्रतस्थुषः॥२७।३५॥ सर्वविद्याधिपोदेवईशानोनाममनामतः॥ शूलपाणेमहादेवत्रैलोक्याधि

पतयेनमः ॥ नमः संभवायचेतिमंत्रेणरक्तध्वजपताकालंभ नमः शम्भवायचमयोभवायचन-
मः शङ्करायचमयस्करायचनमः शिवायचशिवतरायच ॥ १६ । ४१ ॥ तमीशानमितिमंत्रेणध्व-
जपताकोच्छ्रयः ॥ तमीशानञ्जगतस्तस्थुषस्पतिंधियञ्जिन्वमवसे हूमहे वयम् ॥ पूषानोयथावेदसा-
मसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ २५ । १८ ॥ पताकायपुष्टयेनमः ध्वजेस्कन्दायनमः ॥ सुप्रतिष्ठि-
तायनमः ॥ क्षमायक्षेत्रपालायनमः ॥ योमेदंड इतिदंडालंभः ॥ योमेदण्डःपरापतद्वैहायसोधिभू-
म्यांतमहंपुनरादद ॥ पुनःनमस्कारः ॥ रक्षणंकुरुमेदेवत्रिनेत्रायत्रिशूलिने ॥ वृषध्वजाययज्ञायनमस्तु-
भ्यमुमापते ॥ वृषस्कंधसमारूढशूलहस्तत्रिलोचन ॥ आवाहयामियज्ञेस्मिन्पूजयंप्रतिगृह्यतां ॥

सर्वाधिपोमहादेवईशानुश्चक्र ईश्वरः ॥ शूलपाणिर्विरूपाक्षस्तस्मैनित्यंनमोनमः ॥ ततः गोधूम
गावेधुक्बलिंदद्यात् ॥ ईशानायसांगायसपरिवारायसायुधायसशक्तिकाययेमंबलिंसमर्प-
यामि ॥ भोईशानदिशांरक्षबलिंभक्ष अस्ययजमानस्यसकुटुंबस्यसपरिवारस्य ॥ आयुःक-
र्ता ॥ क्षेमकर्ता ॥ तुष्टिकर्ता ॥ पुष्टिकर्त्ता ॥ वरदोभवेत्युक्त्वा ॥ आचमेत् ॥ इतिईशानदिक्कृत्यं ॥
अथईशानपूर्वयोर्मध्ये अनंतमावाह्यपूजयेत् ॥ अनंतसयनीयेसमासीनंनीलवर्णंध्यात्वा ॥ ए-
ह्येहिपातालधरामहेंद्रनागांगनाकिन्नरदीयमान ॥ रक्षोरगेंद्रामरलोकसंघे अनंतरक्षाध्वरमस्य
दीयं ॥ भोअनंतइहागच्छइहतिष्ठेत्यावाह्य ॥ अनंतायनमः ॥ इत्यनंतंसर्वोपचारैःपूजयेत् ॥ ततोनम-

स्कार॥ पन्नगाधिपतिर्देवश्चानंतोनामनामतः॥ पाताले वसंतेनित्यंनागराजायतेनमः॥ नमोस्तुस
र्पेभ्य इति मंत्रेणमेघवर्णध्वजपताकालंभ॥ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु॥ येऽअन्तरिक्षे
येदिवितेभ्यः सर्पेभ्योनमः॥१३।६॥ तद्विष्णुरितिमंत्रेणध्वजपताकोच्छ्रयः तद्विष्णोः परम-
म्पदंꣳ सदापश्यन्तिसूरयः॥ दिवीवचक्षुराततम्॥६।५॥ योमेदंड इतिदंडालंभः योमेदण्डः
परापतद्वैहा यशोधिभूम्यांतमहंपुनरादद ध्वजेभैरवायक्षेत्रपालायनमः विष्णोर्नुकमिति
मंत्रेणध्वजपताकयोपूजनंपयसबलिदानंचकुर्यात्॥ विष्णोर्नुकं वीर्य्याणिप्रवोचुंयःपार्थि
वानिविममेरजाꣳसि॥ योऽअस्कभायदुत्तरꣳसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवे

न्त्वा ॥ ५ । १८ ॥ अनंताय सांगाय सपरिवाराय सायुधाय सशक्तिकाय इमं बलिं समर्पयामि ॥ भो
अनंत दिशां रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य सपरिवारस्य ॥ आयुःकर्ता ॥ क्षेमकर्ता ॥
तुष्टिकर्ता ॥ पुष्टिकर्ता ॥ वरदो भवेत्युक्त्वा आचम्य प्रार्थयेत् ॥ अनंतत्वादनंतस्त्वं फणीन्द्राधि
पते हरेः ॥ त्वयात्र रक्षणं कार्यं कृष्णनेत्रायते नमः ॥ योसावनंतरूपेण ब्रह्मांडं सचराचरं ॥ पुष्पवद्धा
रयेन्मूर्ध्नि तस्मै नित्यं नमो नमः ॥ इतीशानपूर्वयोर्मध्यकृत्यम् ॥ अथ निर्ऋतिपश्चिमयोर्मध्ये गत्वा
ब्रह्माणमावाह्य पूजयेत् ॥ हंसस्थं रक्तवर्णं ब्रह्माणं ध्यात्वा ॥ एह्येहि सर्वाधिपते सुरेंद्र लोकेन सार्द्धं
पितृगणदेवताभिः ॥ सर्वस्य धातास्यमितप्रभावो विशाध्वरं नः ॥ सततं शुभाय भो ब्रह्मान्सर्वलोक

हिता यच॥ पद्मयोनिश्चतुर्मूर्तिर्वेदवासः पितामहः॥ आयाहि ब्रह्मलोकात्वं तस्मै ब्रह्मात्मने नमः॥ इ-
त्यावाह्य ब्रह्मयज्ञानमिति मंत्रेण ब्रह्माणं पूजयेत्॥ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो
वेन ऽआवः॥ स बुध्न्या ऽउपमा ऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः॥१३।३॥ यद्देवेति मंत्रेण
रक्तध्वजपताकालंभः॥ यद्देवा देवहेडनं देवासश्चकृमा वयम्॥ अग्निर्मा तस्मादेनसो विश्वा
न्मुंचत्वंहसः॥२०।१४॥ ब्रह्मयज्ञानमिति मंत्रेण ध्वजपताकोच्छ्रयः॥ ब्रह्मयज्ञानं प्रथमं
पुरस्ताद्वि सीमतः सुरुचो वेन ऽआवः॥ स बुध्न्या ऽउपमा ऽअस्य विष्ठाः सतश्च योनिमसतश्च वि
वः॥१३।३॥ गायत्र्यै नमः॥ इति पताकां संपूज्य सुप्रभाय नमः॥ इति ध्वजं संपूज्य ब्रह्माणं नमेत्॥

पद्मयोनिश्चतुर्मूर्त्तिर्वेदावासपितामहः॥यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मैनित्यंनमोनमः॥ इतिनत्वा
ध्वजेसुप्रभायनमः॥ भूतनाथायक्षेत्रपालायनमः॥ व्योमेदंडइतिदंडालंभः॥ योमेदण्डः पराप्त
द्वैहायशोधिभूम्यांतमहंपुनराददे॥ततःसनोभुवनस्यइतिमंत्रेणपायसबलिंदद्यात्॥सनोभुवन
स्यपतेप्रजापतेयस्यतउपरिगृहायस्यवेह॥अस्मैब्रह्मणेस्मैक्षत्रायमहिशर्म्मयच्छ
स्वाहा॥१८।४४॥इतिपठित्वाब्रह्मणेसांगायसायुधायसशक्तिकायेमंबलिंसमर्पयामि॥भो
ब्रह्मन्दिशंरक्ष बलिंभक्ष॥अस्ययजमानस्यसकुटुंबस्यसपरिवारस्य॥आयुःकर्त्ता॥क्षेमं
कर्त्ता॥तुष्टिकर्त्ता॥पुष्टिकर्त्ता॥वरदोभवेत्युक्त्वाआचम्यब्रह्माणंप्रार्थयेत्॥पितामहजगत्स्वे

ष्टे कृष्णेशाव्योमरूपिणे ॥ व्योमस्थायनमस्तुभ्यं ॥ रक्षस्वेदंमहाप्रभो ॥ अथमंडपमध्ये ब्रह्मयज्ञान
मितिमंत्रेणमहाध्वजंसंपूज्य वंशेकिन्नरेभ्योनमः पृष्ठेपन्नगेभ्योनमः इतिपूजयित्वा इंद्रस्यवृ-
ष्णोरितिमंत्रेणमंडपमध्येस्थापयेत् ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः
सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॥ १३ । ३ ॥ इन्द्रस्यवृष्ष्णोवरुणस्यरा
ज्ञऽआदित्यानाम्मरुताᳫं शर्द्धऽउग्ग्रम् महामनसाम्भुवनच्यवानाङ्घोषोदेवानाञ्जयतामुद-
स्थात् ॥ १७ । ४१ ॥ ततः प्राच्यांगणानांत्वेतिमंत्रेणगणपतिंपूजयेत् ततः नमोस्तुरुद्रेभ्यश्चयेस्ये
रुद्राइतिमंत्रद्वयेनमंडपबाह्यादिक्षुविदिक्षुरुद्रांसंस्थाप्यतेभ्योबलिंदद्यात् नमोस्तुरुद्रेभ्योयेदि

विषेषांवर्षमिषवः तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः तेभ्योनमोऽ
अस्तुतेनोवन्तु तेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥१६।६४॥ ॐ अस्मेरु
द्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः यःशꣳसतेस्तुवतेधायिपज्रऽइन्द्रज्येष्ठाऽअस्माँऽ
अवन्तुदेवाः ॥३३।५०॥ अथसर्वभूतेभ्योबलिदानं अथश्चैवतुयेलोकाअसुराश्चैवपन्नगाः सपत्नी
परिवाराश्चप्रतिगृह्णंत्विमंबलिं नक्षत्राधिपतिश्चोर्ध्वनक्षत्रैःपरिवारितः स्थानंचैवपितृणांतु
सर्वेगृह्णंत्विमंबलिं ईशानोत्तरयोर्मध्येक्षेत्रपालोमहाबलः भीमनामामहादंष्ट्रः सर्वेगृह्णंत्विमं
बलिं येकेचिदिहलोकेतुआगताबलिकांक्षिणः तेभ्योबलिंप्रयच्छामिनमस्कृत्यपुनःपुनः

बलिं गृह्णंत्विमे देवा आदित्या वसवस्तथा मरुतोप्याश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः असुरा यातु-
धानाश्च पिशाचा मातरो नगाः शाकिन्यो यक्षवेतालाः योगिन्यः पूतनाः शिवाः जृंभकाः सिद्धगं-
धर्वाश्च मालाविद्याधरा नराः दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः सौम्या भवंतु गेतृ सादेवाः
सुतगणास्तथा इति ईशानभागे बलिं दद्यात् ततो मंडपात् पूर्वस्यां दिशि किंचिद्भूमिसुपलि-
प्य तत्रोपविश्य त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वं-
तु तानि मे देवदानवगंधर्वा यक्षराक्षसपन्नगाः ऋषयो मुनयो गावो देवमातर एव च सर्वे ममा-
ध्वरे रक्षां प्रकुर्वंतु मुदान्विताः ब्रह्मा विष्णुश्च रुद्रश्च क्षेत्रपालगणैः सह रक्षंतु मंडपं सर्वे मम

तुरक्षांसिसर्वतः एवंसंप्रार्थ्यश्लोकोक्तान्देवान्नाममंत्रैः स्तस्यामेवभूमौपूजयेच्चंदनादिभिः त्रै
लोक्येभ्यः स्थावरेभ्योभूतेभ्योनमः त्रैलोक्यस्थेभ्यश्चरेभ्योभूतेभ्योनमः ब्रह्मणेनमः विष्णवेन
मः शिवेभ्योनमः दानवेभ्योनमः गंधर्वेभ्योनमः यक्षेभ्योनमः राक्षसेभ्योनमः पन्नगेभ्योनमः
ऋषिभ्योनमः गोभ्योनमः देवमातृभ्योनमः एवंप्रत्येकंमेतान्संपूज्यएतैरेवनाममंत्रैस्तस्यांभू
मौतेभ्यएवबलिंदद्यात् त्रैलोक्यस्थेभ्यः स्थावरेभ्योभूतेभ्यइमंबलिंसमर्पयामि त्रैलोक्य
स्थेभ्यश्चरेभ्योभूतेभ्यइमं० ब्रह्मणेनमः इमं० विष्णवेनमः इमं० रुद्रायनमः इमं० देवेभ्यनमः
इमं० दानवेभ्यनमः इमं० गंधर्वेभ्यनमः इमं० यक्षेभ्यनमः इमं० राक्षसेभ्यनमः इमं० पन्नगेभ्यनमः

इमं० ऋषिभ्योनमः इमं० गोभ्यनमः इमं० देवमातृभ्यनमः इमंबलिंसमर्पयामि इतिबलिंदत्वा पा
णिमादंप्रक्षाल्ययजमानः प्राग्द्वारेणसऋत्विक्मंडपंप्रविश्यशिवादिदेवसमीपमागत्यउपविश्यपू
जापरिपूर्णतांप्रार्थयेत् अद्यपूर्वोच्चारितएवंग्रहगुणविशेषणविशिष्टायांतिथौमंडपस्तंभदेवा
नांतोरणद्वारत्रिशूलपताकाध्वजानांपूजनंकृतस्यविधेर्यन्न्यूनमतिरिक्तंतत्सर्वंश्रीसदाशिवा
दिदेवस्यप्रसादात् सन्निधिस्थानांब्राह्मणानांप्रसात्परिपूर्णमस्तुतत्नोघ्याशिषोनैगमाः एवंसां
गंमंडपंसंपूज्यात्मानंकृतार्थंमन्वीत इतिश्रीगौडवंशोद्भवराज्ञीरायपुरनिवासीश्रीयुक्तना-
नकचंदात्मजश्रीयुक्तरामलालपंडितविरचितेसर्वदेवप्रतिष्ठासंग्रहेमंडपपूजोपवर्णनंनामाद्वि

॥अथजलयात्रालिख्यते॥ ॥ततोयजमानः सपत्नीकः सुप्रक्षालितपाणिपादः कस्तूर्या-
दिचर्चितः शुक्लांबरधरः शुक्लमालाविभूषितोऽलंकरणानिधारयित्वासंभारान् गृहीत्वा
तथाहि दधिमधुघृतदुग्धशर्करागंधाक्षतपुष्पधूपदीपनैवेद्यपूगीफलतांबूलदक्षिणांता-
श्चपूजोपहाराः सुदृढकनककुंभाः पंचरत्नानिपंचपल्लवदूर्वाश्चार्द्राएकव्रीहिमाषाश्चप-
क्वाः ततःसुवासिनीभिर्जीवत्पुत्राभिः पतिव्रताभिर्मद्यादिदोषरहिताभिः सर्वब्राह्मणसु-
हृत्सहितः सन् ध्वजापताकालंकृतानिगजरथाश्वादीन्यन्यानिचानरवाह्यानिचतुर-

प्रतिष्ठा स्वविमानानि शिबिकादीनि शकटादीनि वा समारुह्य शंखभेरीमृदंगादिचतुर्विधवादित्रादिडम्बड जलया०
५६ लमंगधचारणादिप्रगीतवंशप्रशस्तिः सन्मार्गे आनो भद्रा इत्यादिशान्तिपाठसूक्तानि ब्राह्म
णेभ्यः शृण्वन् आनो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो ऽअपरीतास ऽउद्भिदः । देवानो य
थासदमिद्वृधे ऽअसन्नप्रायुवो रक्षितारो दिवे दिवे ॥२५।१४॥ देवानां भद्रा । सुमतिर्ऋजूयु
तान्देवानां ॐ रातिरभिनो निवर्त्तताम् ॥ देवानां ॐ सख्यमुपसेदिमा वयन्देवा न ऽआयुः प्रति
रन्तु जीवसे ॥२५।१५॥ तान्पूर्वया । निविदा हूमहे वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥ ५६
अर्य्यमणं वरुणं ॐ सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥२५।१६॥ तन्नो वातो

मयोभु वातु भेषजन्तन्माता पृथिवी तत्पिता द्यौः। तद्ग्रावाणः सोमसुतो मयोभुवस्तद-
श्विना शृणुतन्धिष्ण्या युवम्॥२५।१७॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हू
महे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥२५।१८॥ स्वस्ति न इ
न्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्प
तिर्दधातु॥२५।१९॥ पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः। अ
ग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवाऽअवसागमन्निह॥२५।२०॥ भद्रङ्कर्णेभिः शृणु-
याम देवा भद्रम्पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यद

दायुः ॥२५।२१॥ शतमिन्नु शरदो ऽअन्ति देवा यत्रा नश्चक्रा जरसन्तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥२५।२२॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा ऽअदितिः पञ्च जना ऽअदितिर्जातमदितिर्जनित्वम् ॥२५।२३ समुद्रमहानदीवापीकूपसरस्तडागादीनामन्यतमे जलाशये गत्वा तत्तीरे इंद्रघोषस्त्वा चित्पतिर्मेति यजुर्द्वयेन पंचगव्येन कुंकुमेन संप्रोक्ष्य ॥ इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्मा त्वादित्यैरुत्तरतः पात्विदमहन्तप्तं वार्बहिर्धा यज्ञान्निः सृजामि ॥५।२१॥ चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो

मासवितापुनात्वच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः॥तस्यतेपवित्रपतेपवित्रपूतस्यय
त्कामः पुनेतच्छकेयम्॥४।४॥ भूमौस्थापितसंभारः उदङ्मुखः स्वयमुपविश्य दक्षिणतः
पत्नीमुपवेश्य कृताचमनप्राणायामः कीर्त्तितदेशकालः पत्न्यासमन्वारब्धश्चिकीर्षितस्य
होमात्मकादि महारुद्रादियागस्य समाप्तिपरिपूर्त्तिद्वाराश्रीवरुणजलदेवताप्रीत्यर्थं गणेशपू
जनपूर्वक जलमातृजीवमातृक्षेत्रपालवरुणपूजनं करिष्ये॥ इतिसंकल्पयेत् ॥यद्देवस्येष्टदले
वापूजयेत् हस्तेक्षतान्गृहीत्वा एहिभालधृतवालसुधांशोविघ्नवारणविदारणसिंह एकदं
तविपदंतकरत्नंश्रीगणेशजगदीशनमस्ते॥१॥ ॐ भूर्भुवः स्वः गणेश इहागच्छ इहतिष्ठ गणेशान्

यनमः गणेशंमावाहयामि गणानांत्वेतिमंत्रेणगणेशंपूजयेत॥ ॐ गणानांत्वा गणपतिर्ठ०
हवामहेप्रियाणान्त्वाप्रियपतिर्ठ० हवामहेनिधीनान्त्वांनिधिपतिर्ठ०हवाम्महे व्वसोमम॥ आ
हमजानिगर्ब्भधमात्वमजासिगर्ब्भधम्॥२३॥१॥ प्रवलंतरायहरयेजगतांवरमूषकस्फुरितसद्ग
तये॥ गणनायकायबिलसत्तनवेहरसूनवेममाचिरणेनमः २ इतिनमस्कारः॥ हस्तेमाषतंडु
लबलिंगृहित्वा॥ ॐ नमोमूषकवाहनायपाशांकुशवराभयपाणयेसिद्धिबुद्धिसहितायअमुं
सदीपमाषभक्तबलिंसमर्पयामि॥ इतिगणपतयेबलिंदद्यात्॥ अथजलमातृपूजनंतत्रजल
मध्ये कुमारीधनदानंदाविमलामंगलाबला त्वमेवजलनाथाचमातस्त्वांपूजयाम्यहं॥ १॥कुं

भोघेनिपुर्ज्जनिताशचीभिर्यस्मिन्नयेषोन्याङ्कःश्रीऽम्नन्तः पुराशिर्व्वक्तः शानधारऽनुत्सोद्रुहे
नकुम्भीस्वधाम्मितृक्ष्वः॥ ॐ भूर्भुवःस्वः मात्सि इहागच्छ इहातिष्ठ मत्स्यैनमः मात्सिमावाह
यामिस्थापयामि गंधादिबलिदानंच ॥१॥ धृतपृष्टगरिष्टभूतलामरुणाक्षींजलकेलिलासं
चतुरागमसत्वतुः पदामिहतां कच्छपिकामहंभजे कच्छपिइहागच्छ इहातिष्ठ कच्छप्यैनमः क
छपीमावाहयामि गंधादिबलिदानांतं २ रणे दुर्जपैर्दानवैर्हन्यमानान्सुरान्यायितुंयासुधां
स्वस्यपृष्टे अधांन्मदरंतन्द्रां धूम्रनेत्रांनमस्कुर्महे कुर्मितांधर्मरूपां वृष्णोऽऊर्म्मिरसि
राष्ट्रदाराष्ट्रम्मेदेहिस्वाहा वृष्णोऽऊर्म्मिरसिराष्ट्रदाराष्ट्रममुष्मैदेहि वृषसेनोसिराष्ट्रदाराष्ट्रम्मे

देहिस्वाहा वृषसेनोसिराष्ट्रदाराष्ट्रमसुष्मैदेह्यर्थेतरस्य ॥१०।२॥ ॐभूर्भुवःस्वः कूर्म्मइ-
हागच्छइहतिष्ठ कूर्म्मायनमः कूर्म्मीमावाहयामि। गंधादिबलिदानांतं ॥३॥ वाराहींप्रवरांव-
राहतुल्यरूपांदंष्ट्राग्रोधृतिवसुंधरांसुपाद्यादितांसक्रोधादितितनुजेकरपद्महस्तांपद्मा
यांविमलसदृशांभृशंवंदे ॥ ॐमनसःकाममाकूतिंवाचःसत्यमशीय ॥ पशूनांरूप
मन्नस्यरसोयशःश्रीःश्रयतांमयिस्वाहा ॥३९।४॥ ॐभूर्भुवःस्वः वाराहिइहागच्छइ
हातिष्ठ वाराह्यैनमः वाराहीमावाहनं गंधादिबलिदानांतं ॥४॥ दर्दुरांदर्दुराविराणीदेवतां ५९
वंदितांमंदिरानंदितां ॥ सौम्यरूपामहंवारिमूर्तिस्थभांवारिणीसंस्थितांपूजयेत्प्रत्यहं

ॐ भूर्भुवः स्वः दर्दुरि इहागच्छ इहातिष्ठ दर्दुर्यैनमः दर्दुरीमावाहयामी स्थापयामि ॥ ॐ वरुण
स्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनीस्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऽऋतसदन
मसि वरुणस्य ऽऋतसदनमासीद ॥४।३६॥ गंधादिबलिदानं ॥ आनिदीर्घमुरवींविशालपुच्छाम
रुणांभोजविराजदक्षयुग्मां ॥ तरुणार्कसमानकायकांतिं शिशुमारीमुररीकरोमि पुज्यां ॥
ॐ घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा । दिशः
प्रदिश ऽआदिशो विदिश ऽउद्दिशो दिग्भ्यः स्वाहा ॥६।११॥ शिशुमारि इहागच्छ इहतिष्ठ
शिशुमार्यैनमः शिशुमारीमावाहयामि स्थापयामि गंधादिबलिदानांतं सागरस्वर्णदीमान

साध्यं भसां यादसां चेश्वरीं पाशभृद्वल्लभां पुंडरीकच्छविं पुंडरीकां नमामीश्वरीं तामहं पूज
येमातरं रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे कुय
वं च मे क्षितं च मेऽक्षितं च मेऽन्नं च मेऽक्षुच्च मे यज्ञेन कल्पन्ताम् ॥१८।१०॥ भूर्भुवः स्वः ईश्वरीइ
हागच्छ इहतिष्ठ ॥ ईश्वर्यै नमः॥ ईश्वरीमावाहयामि स्थापयामि गंधादिबलिदानं ॥७॥ इ
ति जलमातृपूजनं॥ अथ जलपूजनं॥ आद्याः सृष्टिकर्त्र्यो विचित्रा धात्र्यः सर्वप्राणिनां धान्यपुं
जैः त्रैलोक्यस्य व्यापका वृष्टिहेतुर्वदेवीस्त्वापः सर्वदा हि ॥ ॐ गर्भो ऽस्यौषधीनां गर्भो वन
स्पतीनाम् ॥ गर्भो विश्वस्य भूतस्याग्ने गर्भो ऽअपामसि ॥१२।३७॥ ॐ भूर्भुवः स्वः आपः इ

हागच्छ इहातिष्ठत अद्भ्योनमः आपः आवाहयामि स्थापयामि गंधादिबलिदानांतं इ
तिजलपूजा अथजीवमातृपूजनं ततोहरिद्राशालिचूर्णरंगेनसप्तरेखा हस्तमात्राकुर्यात्
पूजयेत् मातंगीपृथुरोमाणंपुछांदोलितवारिधिं मत्सीमत्स्यसमानांगींवारिण्यावाह
याम्यहं ॥ ॐ समुद्रोऽसिनभस्वानार्द्रदानुः शम्भूर्म्मयोभूरभिमावाहिस्वाहामारुतोऽसि
मरुताङ्गणः शम्भूर्म्मयोभूरभिमावाहिस्वाहावस्यूरसिदुवस्वाञ्छम्भूर्म्मयोभूरभिमावाहि
स्वाहा ॥१८।४५॥ ॐ भूर्भुवःस्वः मत्सिइहागच्छतइहातिष्ठत गंधादिबलिदानांतं ॥ कूर्मा
कूपाब्धिदेवींगंभीरांसर्वकर्मसु ॥ यातालतलसंस्थानांहृदिमावाहयाम्यहं ॐ यस्यां-

से घोर ऽ आसज्जुहोम्म्येषाम्बन्धानामवसर्ज्जनाय॥ यान्त्वाजनो भूमिरिति प्रमन्दे तेनिर्ऋति
न्त्वाहम्परि वेद विश्वतः ॥१२।६४॥ ॐ भूर्भुवः स्वः। हृदि इहागच्छत इहतिष्ठत हृदेनमः
हृदिंमावाहयामि स्थापयामि गंधादिबलिदानांतं २ गोवंशजातामतिदीर्घगात्रीं घोणार
विंदप्रतिमाक्षियुग्मां सरत्नभूषामसितांच गोधामाधारभूतां जगतो हमीडे ॐ गोमद्दूषु
णासत्या। श्वावद्यातमश्विना। वर्त्ती रुद्रा नृपाय्यम् ॥२०।८१॥ ॐ भूर्भुवः स्वः गोधे इ-
हागच्छत इहातिष्ठत गोधायैनमः गोधांमावाहयामिस्थापयामि । गंधादिबलिदानांत ॥
३॥ मदनकेतुगतां मकराकृतिं विततगात्रयुतामतिमेदुरां । प्रवलमारुतभूतसुमंचकांबुज

हृषंमकरीमहमर्च्चये ॥ ॐमायोमौषधीर्हिर्ठ० सीद्धाम्नोधाम्नौराजँस्ततोवरुणनोमुञ्च्च ।
यदाहुरघ्न्याऽइतिवरुणेतिशपामहेततोवरुणनोमुञ्च्च । सुमित्रियानऽआपऽओषधयः
सन्तुदुर्म्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥ ६।२२॥ ॐभूर्भुवःस्वःमक
रिइहागच्छतः इहतिष्ठतमकर्यैनमः मकरींआवाहयामिस्थापयामि गंधादिबलिदानांत४
अंधकारसमुत्पन्नांडुंडुभीविलिमध्यगां आतिलंबतनुंवंदे सततंडुंडुभाकृतिं ॐतेऽस्या
चरन्तीसमनेवयोषामातेवपुत्रम्बिभृतामुपस्थे । अपशत्रून्विध्यताᳪ । संविदानेऽआ
र्त्नीऽइमेविष्फुरन्तीऽअमित्रान् ॥२९।४१॥ ॐभूर्भुवःस्वः डुंडुभिइहागच्छतइहाति

ष्ठत डुंडुंभ्यैनमः डुंडुभीमावाहयामिस्थापयामि गंधादिबलिदानांतं ५ चतुरशीतिक
लक्षसुयोजनप्रमितदीर्घतनुं घनरोमशांसजलमेघधरांजलदाकृतिसविलयंहृदिदु
र्दुरिकांभजे ॥ ॐ वरुणः प्राविता भुवन्मित्रोविश्वाभिरूतिभिः करतान्नः सुराधसः
॥३३।४६॥ ॐ भूर्भुवःस्वः दुर्दुरिइहागच्छइहातिष्ठ दुर्दुर्य्यैनमः दुर्दुरीमावाहयामि गंधादि
बलिदानांतं ६ ॐ भोद्भवांसिद्धिदात्रींनीलांभोरुहलोचनां जलामावाहयाम्यत्र देवींविश्वग
तां पयःपृथिव्यांपयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः । पयस्वतीः प्रदिशः सन्तुम
ह्यम् ॥१९।३६॥ ॐ भूर्भुवःस्वःजलिइहागच्छइहतिष्ठत जल्यैनमः जलीमावाहयामि

गंधादिबलिदानांतं॥ ॥इतिजीवमातृपूजनंपूजनं॥ ॥अथचतुःषष्टिपूजनं जला
दिपूजासुविशेषपूज्येवंदेचतुःषष्टिसुयोगिनित्वं दिव्योपचारैर्बलिभिश्चसम्यक् आराधु
मिच्छामिनमोनमस्ते इतिकुंकुमाक्षतान्जलेप्रक्षिप्य चतुःषष्टिजलयोगिनिभ्योनमः
इति इतिगंधादिनासंपूज्य बलिंचदत्वा नमस्कारंकुर्यात् इतिसंक्षिप्तचतुःषष्टियोगिनी
पूजा ततोवायवींदिशंगत्वासाक्षतहस्तः कुंकुमेनपुरुषाकृतिंक्षेत्रपालंविलिख्यपूज
येत् डमरुत्रिशूलहस्तंघंटाघोराररवोद्दंडं कुंडलीसदुपवीतंक्षेत्रपतिंरुंडमालिनंवंदे
इतिध्यात्वा क्षेत्रपालमहीपालबलिंभुक्ष्वमयार्पितं संप्रसन्नः पूरयाशुत्वंवांछितान्मेम

नोरथान् क्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसि। मत्वाहिर्ठं॰ सीन्मामाहिर्ठं॰ सीः ॥२०
१॥ क्षेत्रपालइहागछइहतिष्ठ क्षेत्रपालायनमः क्षेत्रपालमावाहयामि गंधादिसंपूज्य
कुंकुमदीपयुक्तंदधिमाषभक्तबलिंदद्यात् इतिक्षेत्रपालपूजा ततःप्रक्षालितपाणि
पादः कृताचमनंपूर्ववासांसित्यक्त्वा तस्माद्देशादयकम्प्यवस्त्रांतरंपरिधायपूर्वास-
नेउपविश्यसाक्षत हस्तोजलेक्षीरादिसप्तसागरान् मानसादिसरांसिपुष्करादिती
र्थानिनदीश्चावाहयेत् तद्यथा नानारत्नविराजमानमुकुटान्वैडुर्यसकुंडलानफु-
ल्लांभोजविलोचनान्स्मितमुखान्मुक्ताप्रवालाधरान् मंदारप्रसवस्त्रजःश्चितनूनसु

क्ताक्षमालाकरान् मौंजीदंडसुमेखलादिललितान् सद्ब्रह्मचारिप्रभान् १ गंभीरागाः
न्पृथुभांगान् सुबहुसलिलोत्पीडमूर्ध्नीमुखाभ द्वीपानवर्तकर्णांतनिकटलसत्पविद्रु
मोष्ठान्सुपुष्टान् शैवालोदारकेशान्हिमहृजठरान् वीचिहस्तान्नदीशान्कूर्मादि-
स्थान्सुपादान्विविधमणिगणप्रीणितस्वर्गवृंदान् २ विकटमकरदंदैर्भीषणान्मान
हीनान् सकलमखिलमर्थैरर्थमानान्जलार्थं युवतिभिरपिगंगाद्याभिरुच्चैः कृतार्चा
न्हिहिमिह्लादिदुग्धाद्यंबुधीन्सप्तवंदे ३ इति दुग्धादिसप्तसागरानावाहयेत् ॥ समु-
द्राद्रूर्म्मिर्म्मधुमाँ उदारदुपांशुनासममृतत्वमानट् । घृतस्यनामगुह्यंयदस्तिजि

क्षा देवानाममृतस्यनाभिः ॥१६।८१॥ ऊँभूर्भुवः स्वः दुग्धादिसप्तसागराः इहागच्छत इ
हतिष्ठत दुग्धादिसप्तसागरेभ्योनमः दुग्धादिसप्तसागरान् आवाहयामि गंधादिबलि
दानांतंपूजयेत् मानसंहंसकंपंपांकुरुक्षेत्रंचपुष्करं प्रयागंभद्रतार्थंचमार्कंडामरकंटकं
१ गंगांभानुसुतांचिरिंचितनयांसिंधुंवितस्तांतथा गोदांगोमतिकांसशोणशरयूंचंद्रांवि
पाशामपि क्षिप्रांमेकलकन्यकांलपनुजांपूर्णांप्रणीतांतथा भीमांकृष्णानदींसुवेत्रवति
कांचर्मण्वतींगंडकी २ कावेरीतमसाशतद्रुमुरलांदुग्धांतथाभास्वतींवेणांपुण्यजला
महीनसरितंपुण्याइमाआपगाः ब्रह्मर्षिश्रितनीरकाः सुविमलागंधांभसः पुण्यदाःस्ना-

नेनापहृतां हतास्मि जगतांमावाहयाम्यंभसि ३ अमृतकुंभकरांसितवाससंहंसगतिं
विमलांहरिपादजांतुहिनभूधरमूर्ध्विहारिणींसगरपुत्रगतिंभजजान्हवीं ४ कमठराज
गतिंस्फकलिंदजायतांसिभासमशुभ्रवरांवरां कुवलयाभदृशांहरिसौख्यदांहृदिभजे
यमुनांरविनंदिनीं ५ प्रवरामत्तमरालगतवरामरुणभासमथारुणवाससांविधिसुतामृ
षिसंश्रितसत्तटामिहसरस्वतिकांहृदिभावये ६ इममेवरुणश्रुधिहवमद्याचमृडया
॥ त्वामवस्युराचके ॥ २१ ॥ १ ॥ ॐ भूर्भुवःस्वः मानसादिसरांसिपुष्करादितीर्थानिगंगादि
महानद्यश्च इहागच्छत इहातिष्ठत मानसादिसरोभ्यः पुष्करादितीर्थेभ्योगंगादिमहानदी

भ्योनमः मानसादिस सिपुष्करादितीर्थानि गंगादिमहानद्यः आवाहयामि गंधादिबलि
दानांतं॥ ततः साक्षतहस्तः दिशः प्रतीच्या अधिपं जलानांनाथं लसत्याशकरं सितांगं स्फ
हासवक्रं सितचारुहारं महाबलं तं वरुणं प्रवंदे ७ तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते
यजमानो हविर्भिः॥ अहेडमानो वरुणेहबोध्युरुशंस मान आयुः प्रमोषीः॥२१२॥ ॐ
भूर्भुवः स्वः वरुण इहागच्छत इहतिष्ठत वरुणायनमः वरुणमावाहयामि गंधादिब-
लिदानांतं॥ कुंदेन्दुशंखस्फुटिकांगकांत वारांपते निर्मलहारवस्त्र सत्पाशपाणे भवतः
प्रसादात्करोमि यज्ञं भव सन्निधिस्थः १ इतिनमस्कृत्य प्रार्थयेत इति वरुणपूजा॥

ततः पंचामृतं हस्ते गृहीत्वा पयः पृथिव्यामित्यादि स्वस्वमंत्रेण जले प्रक्षिपेत् ॐ पयः पृथि
व्याम्पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः। पयस्वतीः प्रदिशः सन्तु मह्यम् ॥१८।
३६॥ इति मंत्रेण दुग्धं क्षिपेत् दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः सुरभिनो
मुखाकरत्प्रणऽआयू७ँषि तारिषत् ॥२३।३२॥ इत्यनेन दधि प्रक्षिपेत् घृतं घृतपावानः पि-
बत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा दिशः प्रदिशऽआदिशो विदिशऽउ
द्दिशो दिग्भ्यः स्वाहा ॥६।१९॥ इत्यनेन घृतं प्रक्षिपेत् अपा७ँ रसमुद्वयस७ँ सूर्ये सन्त
७ँ समाहितम्। अपा७ँ रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा जु-

षेङ्क्लाम्मेषते योनिरिन्द्रायत्वाजुष्टंतमम् ॥ १।३॥ इत्यनेन शर्करां प्रक्षिपेत् मधुवाताऽ
ऋतायतेमधुक्षरन्तिसिन्धवः माध्वीर्न्नः सन्त्वोषधीः ॥ १३।२७॥ इत्यनेन मंत्रेण मधु प्रक्षि
पेत् पञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः सरस्वतीतु पञ्चधासोदेशेभवत्सरित्॥ ३४
११॥ इत्यनेन मंत्रेण पंचामृतं क्षिपेत् ॥ अथ घृताहुतीर्जलं जुहुयात् ॥ ॐ अद्भ्यः स्वाहा १ ॐ वा-
र्भ्यः स्वाहा २ ॐ उदकाय स्वाहा ३ ॐ तिष्ठन्तीभ्यः स्वाहा ४ ॐ स्रवन्तीभ्यः स्वाहा ५ ॐ स्यन्दमा-
नाभ्यः स्वाहा ६ ॐ कूप्याभ्यः स्वाहा ७ ॐ सूद्याभ्यः स्वाहा ८ ॐ धार्य्याभ्यः स्वाहा ९ ॐ अर्णवा
वायस्वाहा १० ॐ समुद्राय स्वाहा ११ ॐ सरिराय स्वाहा १२ केचित् प्रतिमंत्रं त्यागमिच्छंति॥

ततोहस्ते जलं गृहीत्वा ॥ ब्राह्मणमद्येति यजुषा सर्वजलाधिपतये सपरिवाराय वरुणा
येदं प्रीयतामिति वदेत् ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमृषिमार्षेयं ठं० सुधातुद
क्षिणम् । अस्मद्राताद्देवत्रागच्छतप्रदातारमाविशत १ जलंक्षिपेत्र ततः अर्घ्यपात्रं
हस्ते गृहीत्वा ॥ तत्र गंधाक्षतपुष्पाणि प्रक्षिप्य । उदारद्युतेनिर्मलोदारस्फुरत्पाशपाणेदि
गीशादिवंद्यः पतेयादसांसांद्रपीयूषदृष्टे नमस्ते नमस्ते वुनाथ वरुणस्योत्तंभनमिति
त्रिरर्घ्यं दद्यात् ॥ ॐ वरुणस्योत्तम्भनमसि वरुणस्यस्कम्भसर्जनीस्थो वरुणस्यऽऋ
तसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ॥ श्रीफलादीनि

याः फलिनीरिति मंत्रेण जले प्रक्षिपेत् याः फलिनीर्या ऽ अफला ऽ अपुष्पा याश्च पुष्पि
णीः ॥ बृहस्पतिप्रसूतास्तानो मुञ्चन्त्व ꣳ हसः ॥ १२ । ८९ ॥ ततः कलशस्थापनं ॥ विदिक्षु
चत्वारो मध्ये एक इति पंच ॥ तद्यथा अष्टदलानि कृत्वा ॥ यदेतन्मंडलमिति मंडलस्पर्शनं
यदेतन्मंडलं तपति तन्महदुक्थं तन्ना ऽ ऋचः स ऽ ऋचां लोकोथ यदेतदर्चिर्दीप्यते तन्महा
व्रतं तानि सामानि स साम्नां लोकोथ ऽ य ऽ एष ऽ एतस्मिन्मंडले पुरुषः सोग्निस्तानि यजू ꣳ
षि स यजुषां लोकः ॥ ओषधयः समिति मंडले यवान्स्थाप्य ॥ ओषधयः समवदन्त सोमे
न सह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्त ꣳ राजन्पारयामसि ॥ १२ । ९६ ॥ आजिघ्र कल

शमिति अकालवर्णमव्रणंबहिर्दध्यक्षतादिभूषितंकलशपंचकंस्थापयेत् ॐआजिघ्र
कलशंमह्यात्वाविशन्त्विन्दवः॥ पुनरूर्ज्जानिवर्त्तस्वसानः सहस्रंधुक्ष्वोरुधारापय
स्वतीपुनर्माविशताद्रयिः॥८।४३॥ आपोहिष्ठेतिजलमापूर्य ॐआपोहिष्ठामयोभुव
स्तानऽऊर्जेदधातन। महेरणायचक्षसे॥१४।३६॥ ॐशुनात इतिगंधं ॐशुनो
तेऽअंशुःपृच्यतांपरुषापरुः गंधस्तेसोममवतुमदायरसोऽअच्युतः॥२०।२७॥
याऽओषधीरित्योषधीः॥याऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगंपुरा॥ मनैनुबभ्रूणामहं
शतन्धामानिसप्तच॥१२।७५॥ ओषधयःसमितियवान् ओषधयःसम०मासि॥देवस्य

त्वेतिकुशोदकं ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम्॥ पंचामृत
मंत्रैः पंचामृतं पंचनद्यः सरस्वतीमपियन्तिसस्रोतसः सरस्वतीतुपंचधासोदेशेभवत्
सरित् काण्डात्काण्डादितिदूर्वा ॐकाण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥ एवा-
नोदूर्वेप्रतनुसहस्रेणशतेनच अश्वत्थेवइतिपंचपल्लवान् ॐअश्वत्थेवोनिषदनंप
र्णेवोवसतिष्कृता गोभाजइत्किलासथयत्सनवथपूरुषम् स्योनापृथिवीतिसप्त
मृदः ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः याःफलिनी
रितिफलं ॐयाःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमु

स्वन्वर्ठ० हसः ॥ परिवाजपतीरितिपंचरत्नानि ॐ परिवाजपतिः कविरग्निर्हव्यान्य
क्रमीत् । दधद्रत्नानिदाशुषे ॥ ॥ हिरण्यगर्भइतिहिरण्यं ॐ हिरण्यगर्भः समवर्तता
ग्रेभूतस्य यातः पतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवाय हविषाविधे
म ॥ ॥ युवासुवासाइतिवस्त्रयुग्मेनवेष्टनं ॥ ॐ युवासुवासाः परिवीतऽआगात्सोश्रे
यान्भवतिजायमानः ॥ तन्धीरासः कवयऽउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥ ॥ गंध
द्वारामितिगंधं ॐ गंधद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् ईश्वरींसर्वभूतानान्तामिहो
पह्वयेश्रियम् ॥ ॥ ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ॥ अस्तोषतस्वभानवोविप्रा

नाविष्टयामतीयोजान्विन्द्रतेहरी॥ ॥याःफलिनीरितिपुष्पं ॐयाःफलिनीर्य्याऽअफ-
लाअपुष्पायाश्चपुष्पिणीः॥ बृहस्पतिप्रसूतास्तानोमुंचन्त्वꣳहसः॥ ॥वसवस्त्वे
तिधूपं ॐवसवस्त्वाधूपयंतुगायत्रेणछन्दसाङ्गिरस्वद्रुद्रास्त्वाधूपयन्तुत्रैष्टुभेनछन्द
साङ्गिरस्वदादित्यास्त्वाधूपयन्तुजागतेनछन्दसाङ्गिरस्वद्विश्वेत्वादेवावैश्वानराधूपय
न्त्वानुष्टुभेनछन्दसाङ्गिरस्वदिन्द्रस्त्वाधूपयतुवरुणस्त्वाधूपयतुविष्णुस्त्वाधूपयतु॥
॥अग्निर्ज्योतिरितिदीपं ॐअग्निर्ज्योतिरग्निःस्वाहासूर्य्योज्योतिर्ज्योतिःसूर्य्यःस्वाहा
अग्निर्वर्च्चोज्योतिर्वर्च्चःस्वाहासूर्य्योवर्च्चोज्योतिर्वर्च्चःस्वाहा ज्योतिःसूर्य्यःसूर्य्योज्योतिः-

ज्योतिः सूर्य्यः स्वाहा॥ ॥अन्नपतेतिनैवेद्यं ॐअन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः
॥प्रप्रदातारन्तारिषऽऊर्जन्नोधेहिद्विपदेचतुष्पदे॥ ॥नमःपर्णायेतितांबूलं ॐनमःप-
र्णायचपर्णशदायचनमऽउद्गुरमाणायचाभिघ्नतेचनमऽआखिदतेचप्रखिदतेचनमऽ
इषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमोवः किरिकेभ्योदेवानाᳬहृदयेभ्योनमोविचिन्वत्के
भ्योनमोविक्षिणत्केभ्योनमऽआनिर्हतेभ्यः॥ ॥हिरण्यगर्भेतिहिरण्यं दक्षिणांचफ
लंशेससमर्पयेत्॥ ॐहिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकआसीत् सदाधारपृ
थिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम॥ ॥समुद्राचमनंयेनचक्रेयेनचवह्निमान्

सूर्यमार्गस्य संरोद्धा विंध्याद्रिः स्ववशीकृतः १ तस्यागस्त्यस्य तातस्त्वं मंगलादिषु वंदितः
वरुणस्य परं स्थानं तस्मै कलशाते नमः २ सोमः पवते इति नमस्कुर्यात् ॥ सोमः पवते सो
मः पवतेस्मै ब्रह्मणेस्मै क्षत्रायास्मै सुन्वते यजमान पवतऽ इषऽ ऊर्ज्जे पवतेद्भ्य ॐषधी-
भ्याः पवते द्यावापृथिवीभ्याम्पवते सुभूताय पवते विश्वेभ्यस्त्वा देवेभ्यऽ एषते योनिर्विश्वे
भ्यस्त्वा देवेभ्यः ॥ ॥ततो गंधपुष्पाक्षतैराचार्यादीन् सुवासिनीश्च हरिद्रकुंकुमांजन
कर्णाद्याभरणादिभिः पूजयेत् तांबूलचणकादिकं दद्यादिति ॥ ॥ततः उत्थाय॥ ॥ उत्ति
ष्ठ ब्रह्मणस्पते इति कलशानुत्थाप्य ॥ आप्यायस्वेति मस्तकोपरि धारयेत् ॥ उत्तिष्ठ ब्रह्मण

स्यते देवयन्तस्त्वेमहे उपप्रयन्तुमरुतस्सुदानवऽइन्द्रप्राश्रूर्भवासचा॥ ३४।५६॥ आप्या
यस्वसमेतुतेविश्वतः सोमवृष्ण्यम् भवावाजस्यसङ्गथे ततोमंत्रवाद्यघोषेण अर्द्धमार्गे
वसेत् स्थानेस्वल्पांभूमिरवनेत् तत्रइन्द्रादिलोकपालेभ्योनमइति गंधादिभिः संपूज्य
॥बलिंदद्यात्॥ ॥ततः क्षेत्रपालंपूजयेत्॥ आवाहयामिदेवेशंभैरवंक्षेत्रपालिनं दिव्यतेजं
महाकायंनानाभरणभूषितं॥ ॐभूर्भुवः स्वः क्षेत्रपाल इहागच्छत इहतिष्ठत क्षेत्रपालाय-
नमः क्षेत्रपालमावाहयामि क्षत्रस्योल्वमितिमंत्रेणक्षेत्रपालंपूजयेत् क्षत्रस्योल्वमसि
क्षत्रस्यजराय्वसिक्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसीन्द्रस्यवार्त्रघ्नमसिमित्रस्यासिवरु

णस्यासिलयायतंत्रंव्वदेत् ॥ दवासिरुजासिक्षुमासि गंधादिपूजा ततोगंधपुष्पा
क्षतमाषभक्तकुंकुमाकृतिबलिंहस्तेगृहीत्वा प्रार्थयेत् कोलीरांचित्रकूटाहिमागि
रिविवरेशाखजालंधकारे सौराष्ट्रेसिंधुदेशेमगधपुरवरेकोसलेवाकलिंगे कर्णाटे
कोंकणेवाभृगुसुतनगरेकान्यकुब्जेस्थितेवा सर्वास्मात्सर्वदावाह्युपसृतिभयतः
पातुवःक्षेत्रपालः १ क्षेत्रपालमहाबाहोमहाबलपराक्रम क्षेत्राणांरक्षणार्थायब
लिंगृह्णनमोनमः २ ॐनमःक्षेत्रपालायमहाबलपराक्रमायबर्बरकेशायसमस्त
व्यापकायचतुःषष्टिरूपायनगरग्रामक्षेत्रावनव्यापिनायसकलजगत्पूजिताय ॐ

ह्रॉँ ह्रूँ ह्रीँ क्षेत्रपाल बलिं गृह्ण भैरवरूपेण कुरु कुरु क्रूँ क्रूँ फाँ फाँ ह्रीँ ह्रौँ डमरुडम-
रु कुरुते यमदंडहस्ते हूँ हूँ हूँ रूपादिरूपादि किलि किलि किलि तं पातु नः क्षेत्रपा-
लः ॥ यं यं यं यक्षरूपं दशदिशिवदनं भूमिकंपायमानं सं सं सं हारमूर्तिं शिर-
सि धृतजटाशेखरं चंद्रबिंबं दं दं दं दीर्घकेशं कृतनरवमुखं ऊर्ध्वरेखाकरालं
पं पं पं पापनाशं प्रणतपशुपतिं भैरवं क्षेत्रपालं १ डिक्कुरायस्वाहा हिंडुनायस्वाहा
क्रन्दते स्वाहा वक्रन्दाय स्वाहा प्राथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राता-
य स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा संदिताय स्वाहा बलाते स्वाहासीनाय स्वाहा

शयनायस्वाहा स्वपतेस्वाहा जाग्रतेस्वाहा कूजतेस्वाहा प्रबुद्धायस्वाहा विजृम्भमा-
णायस्वाहा विधृतायस्वाहा सꣳहनायस्वाहोपस्थितायस्वाहा यनायस्वाहा प्राय-
णायस्वाहा ॥ यथावैहविषोहुतस्यस्कंदे ॥ ॐक्षेत्रपालबलिंगृह्णगृह्णविघ्नंनिवारय
निवारयस्वाहा ॥ अनेनबलिंदद्यात् ॥ ध्रुवाक्षितिरित्यादिचतुर्भिर्नमस्कृत्य पुष्पां-
जलिंक्षिपेत् ॥ ध्रुवाक्षितिर्ध्रुवयोनिः ॥ ध्रुवाक्षितिर्ध्रुवयोनिर्ध्रुवासिध्रुवंयोनिमा-
सीदसाधुया उक्थ्यस्यकेतुम्प्रथमञ्जुषाणाश्विनाध्वर्यूसादयतामिहत्वा १४
१ कुलायिनीघृतवतीपुरन्धिःस्योनेसीदसदनेपृथिव्याः अभित्वारुद्रावसवोगृ-

न्धुस्त्वोरुधारापयस्वतीपुनर्माविशताद्रयिः अंजलिंबध्वापठेत् सुराणाम
धियज्ञेशामंडपेस्थापितामया तस्ययज्ञेमहामंत्रीत्वंसौख्यंमांश्चदेहिमे इतिप
ठित्वा नमस्कारंकुर्यात् इतिजलपात्रविधिः॥

॥ अथाचार्योयजमानेनसहऋत्विग्भिः स्नपनमंडपमागत्यस्नपनद्रव्यसंभृतिंकृ
त्वा तत्रवेदिकात्रयंभूमिंच ॐनमोनारायणायेत्यभिमंत्रितेनपंचगव्येनसंप्रोक्ष्य त
त्र दक्षिणवेदिकायामास्तृतवालुकायांअक्षतैः स्वस्तिकमालिख्य तत्रसप्तधान्यकु

ताधारसुदग्रं भद्रपीठं निधाय वेदिकायाः पश्चाद्धारिपूर्णेन्सपल्लवान्त्रिसूत्रीवेष्टि

तान्षट्कलशान् मृत्तिकागोमयकषायगोमूत्रभस्मगंधोदकैः प्रपूर्यापरान्पंचदेवतास्थ

ज्ञांश्चचिन्हयित्वा गन्धोदकेनापूर्य उदकसंस्थं पंक्तिरूपेणासादयेत् तत्रांत्यः स्थपति

कलशः कलशेषु मृतकादिप्रमाणंतुइत्थंबोध्यं मृत्तिकाप्रमाणं पञ्चपलं गोमूत्रप्रमाणं

द्वादशपलानि मुष्टिसंमितभस्मप्रमाणं त्रिपलंपंचगव्यप्रमाणं क्षीरप्रमाणंषोडशपलम् ॥

दधिप्रमाणंपंचविंशतिपलं सप्तपलंघृतप्रमाणम् त्रिपलंमधुप्रमाणं त्रिपलंशर्करा

1 अत्रकुर्याद्विद्वान्विश्वकर्मणोध्यानंपूजनंचोक्तंविश्वकर्मातुकर्तव्यः श्मश्रुलोम्लम्बाधरः सदंशपाणिर्द्विभुजस्तेजोमूर्तिर्धरोर्वमुनिरिति

प्रमाणं बोध्यम् भद्रपीठयुतमध्यमवेदपार्श्वे मध्ये वरस्थपतिकलशातिरिक्तास्तेएवैकाद
शः भद्रपीठयुत्तोत्तरवेद्यांस्तु परितोष्टौ कलशान् पूर्वादिक्रमेण क्षारोदक १ क्षीर २ दधि ३ स
र्पिः ४ सुरा ५ इक्षुरस ६ दूर्वोदक ७ दर्भोदक ८ युतान् हिरण्यगर्भाद्यैरष्टभिर्मंत्रैर्विन्यसेत् त
तोन्ये च वेद्याः पश्चिमभागे मृत्तिका १ गोमय २ गोमूत्र ३ भस्म ४ मिलितपंचगव्य ५ क्षीर ६
दधि ७ घृत ८ मधु ९ शर्करा १० युताः दशकलशास्थाप्याः चतुर्दशशुद्धोदककलशा
पि तत्रैव स्थाप्याः अथान्यान् पंचत्रिंशत् कलशानासादयेत् तेषु पंचत्रिंशत् कलशेषु मध्ये
पंचसु पृथक् पृथक् पंचामृतानि पंचसु जलं पंचसु पल्लवकषायः दशक्रमात् पुष्पैः १

फलैः २ सौवर्णजलेन ३ गोशृंगोदकेन ४ धान्यैः ५ सहस्रछिद्रैः सर्वौषधीभिः ७ पंचपल्लवैः
८ दूर्वाभि ९ र्नवरत्नैर्युताः १० कार्याः अवशिष्टेषु दशसु दशपल्लवसहितेषु शुद्धजलमापू
र्यलोकपालानावाहयेत् अथदशपल्लवनामानि कदंबपल्लव १ शाल्मलीपल्लव २ जं
बूपल्लव ३ अशोकपल्लव ४ प्लाक्षपल्लव ५ उदुंबरपल्लव ६ वटपल्लव ७ बिल्वपल्लव ८
नागपल्लव ९ पलाशपल्लव १० एतानिदशपर्णानि सर्वेपिकलशाश्चाजिघ्रकलशमित्या
दिमंत्रेणस्थाप्या ततोऽन्यान्यपिवस्तूनि स्नानसाधकानितत्रस्थापयेत् तद्यथा
सूक्ष्मतंतुयुतंशुभ्रवस्त्रं सुगंधितैलं यवाद्युद्वर्तनचूर्णं सुगंधामलकचूर्णं जटामांसि-

चश्चासादयेत् ततः प्रथमवेदिकायापश्चात्स्थापितेषु द्वादशकलशेषुमध्ये अंत्येमंस्थ
पतिसंज्ञकंतीर्थोदककलशंदेवसमीपेकृत्वातस्मिन् कलशे सर्वेसमुद्राः सरितः स्ती-
र्थनीजलदानदाः आयांतु यजमानस्य दुरितक्षयकारकाः इत्यादितीर्थान्यावाहयेत्
तद्यथा काशीकुशस्थलीमायाऽवन्त्ययोध्यामथोः पुरीशालग्रामंसगोकर्णनर्म्मदाच-
सरस्वती तीर्थान्येतानिकुंभस्मिन् विशन्तुब्रह्मशासनात् ऊषारूढासरोजाक्षीपद्म
हस्ताशशिप्रभा आगच्छतुसरिज्ज्येष्ठागंगायापप्रनाशनी नीलोत्पलदलश्यामाप-
द्महस्तांबुजेक्षणा आयातुयमुनादेवीकूर्म्मयानास्थितासदा प्राचीसरस्वतीपुण्याप-

योष्णीगोतमीतथा चर्म्मिलाचंद्रभागाचसरयूर्गंडकीतथा जंबुकाचशतद्रुश्च-
कालिकासुप्रभातथा वितस्ताचविपासाचनर्म्मदाचपुनःपुना गोदावरीमहावर्त्ताश
करावर्त्तमाज्जुनी कावेरीकौशिकीचैवतृतीयाचमहानदी विटंकाप्रतिकूलाचसो
मनंदाचविश्रुता करतोयावेत्रवतीरेणुकाविणुकाचया आत्रेयगंगावैतर्णीका
श्मीरीह्लादिनीचया पावनीचशवन्नासाकल्मषाशशिनीतथा वाशिष्ठाचअपाप्याच
सिन्धुवत्सारुणीतथा ताम्राचैवत्रिसंध्याचतथामंदाकिनीपरा तैलकाशीचपराचदुं
दुभीनकुलीतथा नीलगंधाचवोचपूर्णचंद्राशशिप्रभा अमरेशप्रभासंचनैमिषंपुष्क

रं तथा आषाढिडिंडिभारलंभारभूतंचलाकुलं हरिश्चंद्रंपरंगुह्यंगुह्यंमध्यमकेश्व
रम् श्रीपर्वतंसमाख्यातंजलेश्वरमतःपरम् आम्रातकेश्वरंचैवमहाकालंतथैव-
च केदारमुत्तमंगुह्यंमहाभैरवमेवच गयांचैवकुरुक्षेत्रंगुह्यंकनखलंतथा वि
मलंचंद्रभासंचमाहेंद्रंभीममष्टकम् वस्त्रापदंरुद्रकोटिमविमुक्तंमहालयं गोक
र्णभद्रकर्णंचहेमांशंस्थानमष्टमं छागलाण्डंद्विरंचैवकर्कोटंमंडलेश्वरम् कालंज
रवनंचैवदेवदारुवनंतथा शंकुकर्णंतथैवेहस्थलेश्वरमतःपरम् एतान्यष्टौती
र्थानिगुह्यक्षेत्राणिसर्वशः तानिसर्वाणिकुंभेस्मिन्विशंतुब्रह्मशासनात् इत्यादि

रीत्याकलशेतीर्थान्यावाह्यकलशाभिमंत्रणंकुर्यात् कलशस्यमुखेविष्णुःकंठेरु
द्रःसमाश्रितः मूलेतस्यस्थितोब्रह्मामध्येमातृगणाःस्मृताः कुक्षौतुसागरासप्तसप्त
द्वीपावसुंधरा ऋग्वेदोथयजुर्वेदः सामवेदोह्यथर्वणः अंगैश्चसहिताःसर्वेकल
शंतुसमाश्रिताः ततःकलशप्रार्थना देवदानवसंवादेमथ्यमानेमहोदधौ उत्पन्नो
सियदाकुम्भविधृतोविष्णुनास्वयम् ततःसर्व्वाणितीर्थानिदेवाःसर्वेत्वयिस्थिताः
त्वयितिष्ठंतिभूतानित्वयिप्राणप्रतिष्ठिताः शिवस्स्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः
आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः त्वयितिष्ठन्तिसर्वेपियतःकामफलप्रदाः

त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजले ह्यवसानिध्यंकुरुमेदेवप्रसन्नोभवसर्वदा एवंघ
टेतीर्थावाहनादिकंकृत्वागंधौषधीपंचपल्लवहिरण्यवस्त्रफलादीनिपूर्वोक्ततत्तन्मंत्रैःप्र
क्षिप्य यथाविधिपूजनंकुर्यात् ततः शुद्धोदककलशान्विन्यस्यस्नानोपस्करजातंचा-
न्यत्समाहरेत् अथाचार्योयजमानश्चमूर्त्तिपस्थपतिसुवासिनीभिः सहिततूर्यादि
घोषेणकर्मकुटींगत्वाभूमिमुपलिप्य तत्राग्निंप्रतिष्ठाप्यप्राणायामदेशकालौसंकीर्त्य
प्रतिमानिर्माणेप्राणिवधादिदोषनाशार्थंदुर्निमित्तोपशमनायघृतेनयवैस्तिलैर्वाहोमं-
करिष्ये इतिसंकल्प्य ब्रह्मवरणाद्याज्यभागांतंकृत्वापापभक्षमंत्रेणदेवमंत्रेणवाश

तद्वयं हुत्वा पूर्णाहुतिं दत्वा प्रतिमां कुशैरुषीरव्यमद्ध्वाज्याऽभ्यंगेन देवस्य प्रणाभंगं कृत्वा
सितपुष्पैः संपूज्य मृदा गोमयेन गोमूत्रेण भस्मना क्षीरेण पृथक् पृथक् जलांतरितेन स्नापयि
त्वाभ्यर्च्य शंखतुर्यादिघोषैः ब्रह्मरथादिना देवं महामंडपप्रादक्षिण्येन स्नानमंडपमान
येत् तत्राचार्यो दक्षिणवेद्यां भद्रंकर्णेभिरिति प्राङ्मुखं देवं भद्रासने निवेश्य पूर्वकल्पि
तं सजलं सहिरण्यं सवस्त्रं सपल्लवं कलशं देवस्य पुरस्तात् स्थापयित्वा काशी कुशस्थली
व्यादिभिः मन्त्रैः पूर्वोक्तैस्तीर्थान्यावाह्य गीतवादित्रनिनादैर्देवं स्नापयेत् अथ यजमा

१ भद्रंकर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः २५। २१

नः शिल्पवर्गतित्परिचारकांश्चवस्त्रालंकरणाद्यैः संतोषयेत् क्षमध्वमितितान्प्रतिब्रूयात्
अथाचार्यः सिद्धार्थधृतपायसैस्त्र्यंबकमितिमंत्रेण शंखदुंदुभिघंटानिनादैर्बहिर्निर्गत्यप्राग्
दिदिक्षुत्रातारमित्यादिमंत्रैर्दिक्पालेभ्योबलिंदत्वाचमेत् तथाहि पूर्वेइंद्रायबलिदानं
त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ह्वयामिशक्रंपुरुहूतमिन्द्रꣳस्व
स्तिनोमघवाधात्विन्द्रः २०।५० इंद्रायेमंबलिंसमर्पयामि भोइंद्रदिशंरक्षबलिंभक्ष्य
अस्ययजमानस्यसकुटुंबस्यायुःकर्त्ताक्षेमकर्तातुष्टिकर्तापुष्टिकर्तावरदोभव एवमग्ने

१ त्र्यम्बकंयजामहेसुगंधिंपुष्टिवर्द्धनम् उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्

पिङ्गेयम् अग्निकोणे अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे देवाँ२॥ऽआसादयादिह
२२।१७ अग्नये इमं बलिं समर्पयामि दक्षिणे यमायत्वामखायत्वा सूर्यस्यत्वातपसे
देवस्त्वासवितामद्ध्वानक्तुपृथिव्याः सᳬंस्पृशस्पाहि अर्च्चिरसिशोचिरसितपोसि
३७।११ यमायइमं० नैर्ऋत्ये असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य
अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु १२।६२ निर्ऋत
येइमंब० पश्चिमेवरुणाय तत्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोह
विर्भिः अहेडमानोवरुणेहबोध्युरुशᳬंस मानऽआयुःप्रमोषीः २१।२ वरुणा-

येमंब० वायव्ये वायवे० आनोनियुद्भिः शतनीभिरध्वरꣳ० सहस्रिणीभिरुपयाहि
यज्ञम् वायो ऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः २७।२८ वाय
वेइमं० उत्तरेकुबेराय वयꣳ० सोमव्रतेतवमनस्तनूषुबिभ्रतः प्रजावन्तः सचेमहि
३।५६ कुबेरायेमं० ईशानेइशानाय तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्व
मवसेहूमहेवयम् पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये २५।१८
ईशानायेमं० एवंबलिंदत्वाआचम्य देवसमीपमागत्य त्रातारमिंद्रमित्याद्यैः पूर्वोक्त
दशाभिर्मंत्रैमंडपांतर्दिक्षरक्षांकृत्वा देवस्यपुरतश्चतुरोब्राह्मणानुपवेश्य स्वस्तिंवाचयि

त्वातेभ्योदक्षिणांदत्वा कर्मसिद्धिमाशास्यतेभ्यआशिषोगृहीत्वादेवस्यस्नपनमार
भेत् तद्यथा अग्निर्मूर्द्धेतिमंत्रेणमृदास्नानं अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽ
अयम् अपाꣳ रेताꣳसि जिन्वति इन्द्रस्यत्वौजसासादयामि १३।१४ यज्ञायज्ञावइ
तिकषायैः यज्ञायज्ञावोऽअग्नयेगिरागिराचदक्षसे प्रप्रवयममृतञ्जातवेदसम्प्रि-
यम्मित्रन्नशꣳसिषम् २७।४२ ततः शुद्धोदकस्नानं गायत्र्यागोमूत्रेण ॐभूर्भुवः
स्वः तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि धियोयोनःप्रचोदयात् ३।३५ ततःशुद्धोद-
कस्नानं गंधद्वारामितिगोमयेन गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ईश्वरीं

सर्वभूतानातामिहोपह्वयेश्रियम् ततःशुद्धोदकस्नानं मानस्तोक इति भस्मना मा नस्तोके तनये मानऽआयुषि मानो गोषु मानोऽअश्वेषुरीरिषः मानोवीरान्रुद्रभामिनो वधीर्हविष्मन्तःसदमित्त्वाहवामहे १६।१८ ततःशुद्धोदकस्नानं तत्सवितुरिति गंधतोयेन तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि धियोयोनःप्रचोदयात् ३।३५ ततः शुद्धोदकस्नानं ततः पंचकलशैः पंचदेवत्यैः स्नापयेत् तत्रक्रमः नमः संभवायेति प्रथमेन नमः शम्भवायच मयोभवायचनमः शङ्करायचमयस्करायचनमः शिवायच शिवतरायच १६।४१ ततःशुद्धोदकस्नानं हꣳ सइति द्वितीयेन हꣳसःशुचिष

द्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् नृषद्वरसदृतसद्व्योमसदब्जागो
जाऽऋतजाऽअद्रिजाऽऋतम्बृहत् १०।२४ ततः शुद्धोदकस्नानं यातेरुद्रशिवेतितृ
तीयेन यातेरुद्रशिवातनूरघोरापापकाशिनी तयानस्तन्वाशन्तमयागिरिशन्ता-
भिचाकशीहि १६।२ ततः शुद्धोदकस्नानं विष्णोरराटमितिचतुर्थेन विष्णोरराट
मसिविष्णोः श्नप्त्रेस्थोविष्णोः स्यूरसिविष्णोर्ध्रुवोसि वैष्णवमसिविष्णवेत्त्वा ५
२१ ततः शुद्धोदकस्नानं ब्रह्मयज्ञानमितिपंचमेन ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्वि
सीमतः सुरुचोवेनऽआवः सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमस-

तन्नश्शिवः १३।३ ततः शुद्धोदकस्नानं एवं रीत्या देवं संस्नाप्य सतं जीवेति मंत्रेण दुर्वा
क्षतश्वेतपुष्पैः संपूजयेत् शतञ्जीवेमशरदः शतᳬ शृणुयामशरदः शतम्प्रब्रवा
मशरदः शतमदीनाः स्यामशरदः शतम्भूयश्च शरदः शतात् ३६।२४ ततो देवम
भितः पीतवस्त्रेणाच्छाद्य द्यूतिय यवेषां भद्रं कर्णेभिरिति मंत्रेण भद्रासनं निधाय स्तीर्णं
बर्हिरिति मंत्रेण प्रागग्रान् कुशानास्तीर्य तत्र प्राङ्मुखमुत्तराभिमुखं वा देवं प्रणवेन
स्थापयेत् मंत्रद्वयं प्रदर्श्यते भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यज
त्राः स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः २५।२१ स्तीर्णं

म्बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानम्पृथिव्याम् देवेभिर्युक्तमदितिः सजोषाः
स्योनङ्कृण्वाना सुविते दधातु २१।४ ततः आचार्य उत्तराभिमुखो भूत्वा कुंकुमारक्ते
नसूत्रेण लिंगमावेष्ट्य हिरण्यगर्भः इतिमंत्रेण पूर्वकल्पितं सुवर्णपात्रं ताम्रपात्रं वा
दाय तत्र मधुघृते कृत्वा मधुवाता घृतवतीतिमंत्रद्वयेनाभिमंत्रयेत् मधुवाताऽ
ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्न्नः सन्त्वोषधीः १३।२७ घृतवती भुवना
नामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा द्यावापृथिवी वरुणस्य धर्म्मणा वि-
ष्कभितेऽअजरे भूरिरेतसा ३४।४५ ततो मधुघृताभ्यामक्तां सुवर्णशलाकां गृ

हीत्वा ॐ नमोभगवतेतुभ्यंशिवायहरयेनमः हिरण्यरेतसेविष्णोविश्वरूपायते
नमः इत्यनेनमंत्रेणलिंगस्यलक्षणमुद्धरेत तद्यथा लक्षणोद्धरणंकुर्यालिंगस्य
तुसमाहितः त्रिधाविभज्यपूजांगंलक्षणंस्याद्विभागिकं रेखात्रयंतुकर्तव्यंयवार्धां
तरसंमितं नस्थूलंनकृशंतद्वत्नवक्रंछेदवर्जितं निम्नंयवप्रमाणेनज्येष्ठलिंग
स्यकारयेत् स्थूलस्थानतश्चकर्तव्यासदामध्येकनीयसी अष्टभागंततः कृत्वा त्य
क्त्वाभागत्रयंबुधः लंबयेन्माणिरेखांतुपार्श्वयोरुभयोःसमं भ्राम्यंतुपंचभागोर्द्ध
कारयेत्संगमंततः तावत्प्रलंबयोद्विद्वान् यावद्भागचतुष्टयं रेखयोसंगमंतद्वत्

द्वौभागौ पृष्ठस्ततः लिंगस्य दक्षिणोद्धारे ब्रह्मेशानजनार्दनाः दक्षिणादिसुरेखासु-
विज्ञेयाः प्रतिमासु च ऊर्द्ध्वाधः पद्मपुटयोरस्योर्दक्षिणवामयोः क्रमाद्ब्रह्महरौ ज्ञे-
यौतारुज्योति महेश्वराः एवमेतत्समाख्यातं समासं लक्षणं मयेति स्वयंभूवाण-
लिंगसरिद्भवलोहरत्नचक्रलिंगानां लक्षणोद्धारं न कुर्यात् अथ पूर्ववत्संकल्प्य
प्रतिमायामुखं लिंगस्य नेत्राणि सुवर्णशलाकया नासिकासीन धौनेत्र मूलं संलभ्य
या चित्रं देवानामित्यर्थर्चेन अग्निर्ज्योतिरित्यनेन आकृष्णेनेति चा अपागमां-
योनींत्वां ऊर्द्ध्वाधः पद्मपुटद्वयं पृथग्भूतं कल्पयेत् ततोनेत्रमध्यद्विभागेन हस्तांक

नीनिकांप्रकल्पयेत् चित्रन्देवानामुद्गादनीकञ्चक्षुर्मित्रस्यवरुणस्याग्नेः आ-
८३ ग्निर्ज्योतिर्ज्योतिरग्निः स्वाहासूर्य्योज्ज्योतिर्ज्योतिस्सूर्य्यःस्वाहा अग्निर्वर्च्चोज्ज्यो-
तिर्व्वर्च्चःस्वाहासूर्य्योवर्च्चोज्ज्योतिर्वर्च्चःस्वाहाज्ज्योतिःसूर्य्यःसूर्य्योज्ज्योतिःस्वाहा
३१।१ आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च हिरण्ययेनसवितारथे-
नादेवोयातिभुवनानिपश्यन् ३३।४३ अत्रदेवस्यनयनरचनसमयेमुहूर्त्तमात्रं
देवस्यपुरतोनकोपितिष्ठेत् सुवर्णघृतपायसंचदेवंप्रदर्शयेत् अंजंतित्वामध्वरेदे- ८३
वयंतोवनस्पतेमधुनायतः क्षयोर।तुरस्याउपतस्थेइतिमंत्रेणदेवनेत्रेऽजयेत् श्री

त्वीशस्त्रेणोरेखामुल्लेखयेत् तामर्चामाचार्यो मधुसर्पिर्भ्यामभ्यज्य इमं मे इति
मंत्रेणाभ्युक्ष्य पुनर्मृदाद्यैः शिल्पिशस्त्रदोषनिवृत्त्यर्थं स्नपयेत् इमम्मे वरुण श्रुधी
हवमद्याच मृडय त्वामवस्युराचके २१।१ अथ प्रतिमाबहुत्वे पुनस्तत्रापिंडिकास्था
नामेवार्चानां पूर्वोक्तं स्नपनादिकं संक्षेपतः प्रतिपुरुषेणनिष्पाद्य नेत्रज्योतिः प्रभृति ते
नैव कारयेत् ततः सुवर्णपात्रं शलाकां स्नानवस्त्राणि च प्रतिमाकर्त्रे शिल्पिने दद्या
त् अथ यजमानः सहिरण्यां गामाचार्याय दद्यात् ततः अन्यतृतीयस्यां वेद्यां भद्रासने देवं
निधायाचार्यश्चतुर्भिः कलशैर्वक्ष्यमाणमंत्रैर्देवं स्नापयेत् तद्यथा समुद्रज्येष्ठाः स

लिलस्यामध्यात्नुनानायंत्यनिविशमानाः इंद्रोयावज्रीवृषभोरराद ता आपोदेवीर
हमामवतु १ याआपोदिव्याऋतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः समुद्रा
र्थायाः शुचयःपावका २ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यञ्जनानां
३ मधुश्चुतःशुचयोयाःपावकाआपोदेवीरिहमामवंतु ४ यासुराजावरुणोयासु
सुसोमोविश्वेदेवायासूर्जंमदंतिवैश्वानरोयास्वग्निःप्रविष्टः आपोदेवीरिहमाम
वंतु ५ इतिचतुर्भिः कलशैःस्नापयित्वाऽभ्यर्च्य दूर्वाक्षतान्शिरसिदत्वाप्रार्थये-
त् नमस्तेचैसुरेशानिप्रकृतेविश्वकर्मणः प्रभाविताशेषजगद्धात्रितुभ्यमेव

नमोनमः त्वयिसंपूजयामीशं नारायणमनामयं रहिताशेषदोषैश्च ऋद्धियुक्ता
सदाभवेति ततोदेवस्यदक्षिणहस्तेसितोर्णापट्टसूत्रनिर्मितंत्ववीवितास्तिमा
त्रंकौतुकंमूलमंत्रेणकनिकादित्यनेनवायदावध्नातिवावार्हस्यत्येनवावध्नीयात्
शन्नोवातःपवतांशन्नस्तपतुसूर्य्यः शन्नःकनिक्रदद्देवः पर्ज्जन्योऽअभिवर्ष
तु ३६।१० यदाबध्नन्दाक्षायणाहिरण्यंशतानीकायसुमनस्यमानाः तन्मऽ
आवध्नामिशतशारदायायुष्माञ्जरदष्टिर्य्यथासम् ३४।५२ ततः सर्वसत्वमयंशा
तंपरंब्रह्मसनातनं त्वामेवालंकरिष्याभित्वंवध्याभवतेनमः इतिमंत्रेणचेति अ

थकरिष्यमाणस्नपनं कलशेभ्यः शेषंवारि कलशांतरे धारयित्वा प्रतिमांतरपिंडि
काजातस्नपनाय प्रतिपुरुषांतरमभिदध्यात् ततश्चतुर्भिः कलशैर्देवं पुनः स्नापयेत्
इदमापइतिप्रथमेन इदमापः प्रवहतावद्यञ्च मलंचयत् यच्चाभिदुद्रोहानृतंय
च्चशेपेऽअभीरुणम् आपो मातस्म्मादेनसः पवमानश्च मुञ्चतु ६।१७ आपोदे
वीरितिद्वितीयेन आपोदेवीः प्रतिगृह्णीतमस्म्मैतत्स्योनेकृणुद्ध्वंᳪ सुरभाऽ
उलोके तस्म्मैनमन्त्ताञ्जनयः सपत्नीम्माविवपुत्रान्विभृताप्स्वेनत् १२।३५ इमंमे
इतितृतीयेन इमम्मेवरुणश्रुधीहवमद्याचमृडयात्वामवस्युराचके २१।१तत्वा

यामीतिचतुर्थेन तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अ
हेडमानो वरुणेह वोध्युरुशꣳस मान आयुः प्रमोषीः २१।२ ततोग्निर्मूर्द्धेतिमंत्रे-
णाष्टपलमितेनमृत्तिकाकलशेन देवंस्नापयेत् अग्निर्मूर्द्धादिवः ककुत्पतिः
पृथिव्याऽअयम् अपाꣳ रेताꣳसिजिन्वति ३।१२ समुद्रादूर्मिरितिशुद्धोदके
नस्नानं समुद्रादूर्म्मिर्म्मधुमाꣳ२ ॥ उदारदुपाꣳशुनासममृतत्त्वमानट् घृतस्य-
नामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः १७।८९ गंधद्वारामितिसप्तपल
मितेनगोमयकलशेन गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणी ईश्वरींसर्वभू

तानातामिहोपह्वयेश्रियम् १ वरुणस्योत्तंभनमसीतिशुद्धोदकेन वरुणस्योत्त
म्भनमसि वरुणस्यस्कम्भसर्ज्जनीस्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋत
सदनमसि वरुणस्यऽऋतसदनमासीद ४।३६ तत्सवितुरिति द्वादशपलमितेन गो
मूत्रकलशेन तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहिधियोयोनः प्रचोदयात् ३।३५
आपोहिष्ठेतिशुद्धोदकेन आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन महेरणायचक्ष
से ३६।१४ प्रसद्यभस्मनेतिमुष्टिमितभस्मोदककलशेन प्रसद्यभस्मनायो
निमपश्च पृथिवीमग्ने सर्ठ० सृज्यमातृभिष्ट्वंज्योतिष्मान्पुनरासदः १२।३८ योवः

शिवेतिशुद्धोदकेन योवः शिवतमोरसस्तस्यभाजयतेहनः उशतीरिवमातरः
३६।१५ पयःपृथिव्यामितित्रिपलसमितपंचगव्यकलशेन पयः पृथिव्याम्प-
यऽओषधीषुपयोदिव्यान्तरिक्षेपयोधाः पयस्वतीः प्रदिशःसन्तुमह्यम् १८।३६
देवीरापइतिशुद्धोदकेनदेवीरापोऽअपान्नपाद्योवऽऊर्म्मिर्हविष्यऽइन्द्रियावान्मदि-
न्तमः तन्देवेभ्योदेवत्राद्दत्तशुक्रपेभ्योयेषाम्भागस्थस्वाहा ६।२७ आप्यायस्वेति
षोडशपलसंमितक्षीरकुंभेन आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् भवा-
वाजस्यसङ्गथे १२।१२ तस्माअरमितिशुद्धोदकेन तस्माऽअरङ्गमामवोयस्य-

क्षयायजिन्वथस्मापोजनयथाचनः ३६।१६ दधिक्राण्वइतिविंशतिपलसंमितद-
धिकुंभेन दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः सुरभिनोमुखाकरत्प्रण
ऽआयूꣳषितारिषत् २३।३२ युंजानइतिशुद्धोदकेन युञ्जानः प्रथमम्मनस्त-
त्वायसविताधियः अग्नेर्ज्योतिर्निचाय्यपृथिव्याऽअध्याभरत् ११।१ घृतवती
तिसप्तपलसंमितघृतकुंभेन घृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसु
पेशसा द्यावापृथिवीवरुणस्यधर्म्मणाविष्कभितेऽअजरेभूरिरेतसा ३४।४५
देवस्यत्वेतिजलेनदेवस्यत्त्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम्

सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि १८।३७ मधुवाता इति
त्रिपलसंमितमधुकुंभेन मधुवाताऽऋतायते मधुक्षरन्ति सिन्धवः माध्वीर्न्नः सन्त्वो
षधीः १३।२७ आपो अस्मानिति शुद्धजलेन आपोऽअस्मान्मातरः शुन्धयन्तु
घृतेन नो घृतप्वः पुनन्तु विश्वꣳ हि रिप्रम्प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूतऽ
एमि दीक्षातपसोस्तनूरसि तान्त्वा शिवाꣳ शग्माम्परिदधे भद्रं वर्णम्पुष्यम् ४।२
आयंगौरिति त्रिपलसंमितशर्कराकलशेन आयङ्गौः पृश्निरक्रमीदसदन्मा
तरम्पुरः पितरञ्च प्रयन्त्स्वः ३।६ आपो हि ष्ठेति शुद्धोदकेन प्रक्षालयेत् आ

पोहयद्बृहतीर्विश्वमायन्गर्भं दधानाजनयन्तीरग्निम् ततोदेवानाᳪ समवर्त
तासुरेकः कस्मैदेवायहविषाविधेम २७।२५ यज्ञायज्ञावइतिसूक्ष्मतंतुवस्त्रेण
संमार्जयेत् यज्ञायज्ञावोऽअग्नयेगिरागिराचदक्षसे प्रप्रवयममृतञ्जातवेदस
म्प्रियम्मित्रन्नशᳪसिषम् २७।४२ सुगंधतैलेनाभ्यज्य द्रुपदादिवेतिमंत्रेण
यवगोधूमशालिविल्बमसूरचूर्णेनदेवमुद्वर्त्तयेत् द्रुपदादिवमुमुचानः स्विन्नः
स्नातोमलादिव पूतम्पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः २२।१२० ततोयातेरु
द्रेतिमंत्रेणदेवस्यशिरसिसुगंधामलकंयक्षकर्दमानुलेपंचासिंचयेत् पक्षकर्द-

मस्तु कस्तुरिकाया द्वौभागौ द्वौभागौ कुंकुमस्य[1] च चंदनस्य त्रयोभागाः शौशीन[2]
स्त्वेक एवहीत्युक्तलक्षणकोज्ञेयः याते रुद्रशिवातनूरघोरापापकाशिनी तया
नस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि १६।४९ ततोजटामांस्य[3]नुलिप्य
मानस्तोक इति प्रतद्विष्णुरिति मंत्रद्वयेन कलशद्वयाभ्यां देवंस्नापयेत् मानस्तो
के तनये मान ऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः मानोवीरान्रुद्रभामिनो
वधीर्हविष्मन्तः सदमित्वाहवामहे १६।१६ प्रतद्विष्णुस्तवते वीर्य्येण मृगोनभीमः
कुचरोगिरिष्ठाः यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियन्तिभुवनानिविश्वा ५०।२०

१ केसरस्य २ कर्पूरस्य ३ वालछड

ततः पंचनद्यइतिपंचामृतेन पञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः सरस्व
तीतुपञ्चधासोदेशेभवत्सरित् ३४।११ तदनंतरंपृथक्पृथक्पंचामृतघटकदु
ग्धादिद्रव्यैर्देवंस्नपयेत् पयःपृथिव्यामितिदुग्धेन पयःपृथिव्याम्पयऽओष
धीषुपयोदिव्यन्तरिक्षेपयोधाः पयस्वतीःप्रदिशःसन्तुमह्यम् १४।३६ ततःशु
द्धोदकेन ततोदधिक्राव्णइतिदध्ना दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवा
जिनः सुरभिनोमुखाकरत्प्रणऽआयूᳩषितारिषत् २३।३२ पुनः शुद्धोदकेन
ततोघृतंघृतपावानइतिघृतेन घृतङ्घृतपावानः पिबतवसांवसापावानः पिबता

न्तरिक्षस्यहविरसिस्वाहा दिशः प्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यः स्वाहा
६।११ पुनस्तथैवशुद्धोदकेन० ततोऽपाᳪरसमितिशर्कुरास्नानम् अपाᳪरस
मुद्वयसᳪसूर्य्येसन्तᳪसमाहितम् अपाᳪरसस्ययोरसस्तंवोगृह्णाम्यु-
त्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ८
३ पुनस्तथैवशुद्धोदकेन ततोमधुवाताऽऋतायतइतिमधुस्नानम् मधुवाता
ऽऋतायतेमधुक्षरन्तिसिन्धवः माद्ध्वीर्न्नः सन्त्वोषधीः १३।२७ पुनःस्तथैवशुद्धोद
केन गंधद्वारामितिगंधोदकेन गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् ईश्व

रीं सर्व्वभूतानान्तामिहोपह्वये श्रियम् ततो यज्ञायज्ञा वइति पंचपल्लवकषायक
लशेन यज्ञायज्ञा वो ऽअग्नये गिरागिरा च दक्षसे प्रप्र वयममृतञ्जातवेदसं-
प्रियम्मित्रन्न शꣳसिषम् २७।४२ ततो या ओषधीरिति ओषधीकलशेन या
ऽओषधीः पूर्व्वा जाता देवेभ्यस्त्रियुगम्पुरा मनैनु बभ्रूणामहꣳ शतन्धामानि
सप्त च १२।७५ ततः ओषधीः प्रतिमोदध्वमिति सितपुष्पशीतोदककलशेन
ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे सनेयमश्वङ्गाम्वासऽआत्मानन्तव पूरुष
१२।७८ ततो याः फलिनीरित्यष्टफलोदककलशेन याः फलिनीर्य्याऽअफ-

लाऽअपुष्पायाश्चपुष्पिणीः बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः १२।९१
ततोहिरण्यगर्भइतिसुवर्णोदककलशेन हिरण्यगर्भःसमवर्त्ततागे्रभूतस्यजा
तःपतिरेकऽआसीत् सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम
१३।४ हविष्मतीजोभृंगोदकेन हविष्मतीरिमाऽआपोहविष्माꣳ२ऽआविवास
ति हविष्मान्देवोऽअध्वरोहविष्माꣳ२ऽअस्तुसूर्य्यः ६।२३ ततोधान्यमसीतिधान्यो
दककलशेन धान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा दीर्घा
मनुप्रसितिमायुषेधान्देवोवःसविताहिरण्यपाणिःप्रतिगृभ्णात्वच्छिद्रेणपाणिना

चक्षुषेत्वामहीमाम्ययोसि १।२० सहस्राणीत्यनेनसहस्राक्षेणेतिवासहस्रधाराक लशेन सहस्राणिसहस्रशोवा होस्तवहेतयः तासामीशानोभगवः पराचीनामु खाकृधि १६।५३ यादिव्याइतिसर्वौषधिजलेन यादिव्याऽआपःपयसासम्बभु वुर्य्याऽअन्तरिक्षाऽउतपार्थिवीर्य्याहिरण्यवर्णायज्ञियास्तानऽआपःशिवासᳫं स्योनासुहवाभवन्तु नमोस्तुसर्पेभ्यइतिपल्लवोदकेन नमोस्तुसर्पेभ्योयेकेच पृथिवीमनु येऽअन्तारिक्षेय्येदिवितेभ्यः सर्प्पेभ्योनमः १३।६ काण्डात्काण्डा दितिदूर्वोदकेन काण्डात्काण्डात्प्ररोहन्तिपरुषः परुषस्यारिएवानोदूर्वेप्रतनु-

सहस्रेण शतेन च १३।२० अष्टौ व्यख्यदिति रत्नोदकेन अष्टौ व्यख्यत्ककुभः
त्री धन्वयोजनासप्तसिन्धून्हिरण्याक्षः सविता देव ऽआगाद्दधद्रत्नानि दाशुषे
वार्य्याणि ३४।२४ इमं मे इति तीर्थोदकेन इमम्मे वरुण श्रुधी हवमद्याच मृडय त्वा
मवस्युराचके २१।१७ एवन्देवं स्नपयित्वा पुनरष्टभिः कलशैः फलपुष्पमंगलमूल
तोयेन पूर्वकल्पितैः समुद्रसंज्ञकैः स्नपयेत् कयानश्चित्रेति क्षीरोदकेन १ कया
नश्चित्रऽआभुवदूतीसदावृधः कयाशचिष्ठया वृता ३६।४ आप्यायेति क्षीरकुं
भेन २ आप्यायस्वसमेतु ते विश्वतः सोम वृष्ण्यम्भवा वाजस्य सङ्गथे १२।११२ द-

धिक्राण्ण इतिदधिकुंभेन ३ दधिक्राण्णो ऽ अकारिषञ्जिष्णोरश्वस्य वाजिनः सुर
भिनोमुखाकरत्प्राण ऽ आयू ᳪ षितारिषत् २३।३२ घृतवतीति घृतोदकेन ४ घृत
वती भुवनानामभिश्रियोर्वीपृथ्वीमधु दुग्धे सुपेशसा द्यावापृथिवी वरुणस्य धर्म्म-
णाविष्कभिते ऽ अजरे भूरिरेतसा ३४।४५ पयः पृथिव्यामितीक्षुरसोदकेन ५ प-
यः पृथिव्याम्पय ऽ ओषधीषु पयोदिव्यन्तरिक्षे पयोधाः पयस्वतीः प्रदिशः सन्तुम
ह्यम् १८।३६ ततः शुद्धोदकेन देवं बर्हिरिति समुद्रोदकेन ६ देवम्बर्हिर्वारितीनान्दे
वमिन्द्रमवर्द्धयत् स्वासस्थमिन्द्रेणासन्नमन्या बर्ही ᳪ ष्यभ्यभूद्वसुवने वसुधे-

यस्यक्षत्तुयज २८।२१ स्वादिष्ठयेतिस्वादूकेन ७ स्वादिष्ठयामदिष्ठयापव-
स्वसोमधारयाइन्द्रायपातवेसुतः २६।२५ ततः सरस्वतीयोन्यामितिगर्भोदक
पदवाच्येननालिकेरजलेन ८ सरस्वतीयोन्यांगर्भमन्तरश्विभ्यांपत्नी
सुकृतम्बिभर्ति अपाᳫं रसेनवरुणोनसाम्नेन्द्रᳫं श्रियेजनयन्नप्सुराजा
१८।८४ ततोपंचत्रिंशत्कलशेषुमध्येयेऽन्तिमादशपल्लवान्वितालोकपालक
लशास्तैर्देवंस्नपयेत् तत्रप्रथमंत्रातारमितिकदंबपल्लवकुंभोदकेन १ त्रातारमि
न्द्रमवितारमिन्द्रᳫं हवेहवेसुहवᳫं शूरमिन्द्रम् ह्वयामिशक्रम्पुरुहूतमिन्द्र

थ्ठं स्वस्तिनोमघवाधात्विन्द्रः २०।५० तन्नोऽअग्नेइतिशाल्मलीपल्लवान्वितकुंभे
न २ तन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः यजिष्ठोवह्नितमः
शोशुचानोविश्वाद्वेषाथ्ठंसिप्रमुमुग्ध्यस्मत्स्वाहा २१।३ सुगन्नुपंथामितिजंबू
पल्लवान्वितकलशेन ३ सुगन्नुपन्थाम्प्रदिशऽअन्नऽएहिज्ज्योतिष्मध्येयजरन्न
ऽआयुः अपैतुमृत्युरमृतन्नऽआगाद्वैवस्वतोनोऽअभयङ्कृणोतुस्वाहा असुन्वं
तमितिअशोकपल्लवान्वितकुंभेन ४ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य
अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु १२

६२ ।। त्वायामीति प्लाक्षपल्लवान्वितकुंभोदकेन ५ तत्वायामिब्रह्मणावन्दमान
स्तदाशास्तेयजमानोहविर्भिः अहेडमानोवरुणेहवोध्युरुश०ᳫँ समानऽआयुः
प्रमोषी २१।२ आनोनियुद्भिरित्याम्रपल्लवोदकेन ६ आनोनियुद्भिः शतनी
भिरध्वरᳫँ सहस्रिणीभिरुपयाहियज्ञम् वायोऽअस्मिन्त्सवनेमादयस्वयू
यम्पात स्वस्तिभिः सदानः २७।२८ वयᳫँ० सोमेतिवटपल्लवोदकेन ७ वयᳫँ० सो
मव्रतेतवमनस्तनूषुबिभ्रतः प्रजावन्तः सचेमहि ३।५६ तमीशानविल्वपल्लवोद
ककुंभेन ८ तमीशानंजगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् पूषानो

यथाव्वेदसामसद्वृधेरक्षितापायूरदब्धः स्वस्तये २५।१४ नमोस्तुसर्पेभ्यइति-
नागपल्लवोदकेन ९ नमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु येऽअन्तरिक्षेयेदिवितेभ्यः सर्प्पेभ्योनमः १३।६ ब्रह्मयज्ञानमितिपलासपल्लवोदकेन १० ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः १३।३ ततोनानाभेरीशंखतूर्य्यकोलाहलध्वनिभिः पुण्य-
स्त्रीमंगलोद्गीतैर्ब्रह्मघोषगीतैः षोडशभि १६ रष्टाभि ८ श्चतुर्भि ४ रेकेणवा १ मंजलकुंभेनगंधतोयेनस्नपयित्वा अन्यकुंभधारितशेषवारिणाऽन्यत्प्रतिमाद्यंप्र-

ति पुरुषेण स्नपयित्वा ॥ देवं सितवस्त्रेण सुगंधिना परिमृज्य देवलिङ्गैर्मंत्रैर्विश्व
तश्चक्षुरित्यादिभिश्च समुसंकल्पीकृत्य देवमावाहयेत् ॥ विश्वतश्चक्षुरुत विश्व-
तोमुखो विश्वतोबाहुरुत विश्वतस्पात् ॥ सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावा
भूमी जनयन्देव एकः १७।१९ एवं देवं संप्रार्थ्य एह्येहीत्यावाहयेत् ॐ एह्येहि
भगवन्विष्णो लोकानुग्रहकारक यज्ञभागं गृहाणेमं वासुदेव नमोस्तु ते ॥ देवभेदेन
मंत्रोहा कर्तव्या एवं देवमावाह्य हिरण्यवर्णीति मंत्रेण पाद्यं अर्घ्यं दद्यात् हिर
ण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह

ततोविभ्राडित्याचमनीयं ॥ विभ्राड्बृहत्पिबतुसोम्यम्मध्वायुर्दधद्यज्ञपतावविह्रुत
म् ॥ वातजूतोयो ऽ अभिरक्षतित्मना प्रजाः पुपोषपुरुधाविराजति ॥ त्र्यंब
कमितिचंदनानिविलिंपयेत् त्र्यंबकंयजामहे सुगन्धिंपुष्टिवर्द्धनम् ॥ उर्वा
रुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ त्र्यम्बकंयजामहे सुगन्धिंपतिवेद
नम् ॥ उर्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥ ततोवेदाहमेतमित्युपवीतंनि
वेदयेत ॥ वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः परस्तात् ॥ तमेवविदि-
त्वातिमृत्युमेतिनान्यः पन्थाविद्यतेयनाय तदनन्तरंयदश्वायेतिवस्त्रम् ॥ यदश्वाय

व्वास ऽउपस्त्रिणान्यधीव्वासञ्ञाहिरण्यान्यस्मै ॥ सन्दानमर्वन्तम्प्रियादेवेष्वाया
मयन्ति २५।३९ ततोवेदाहमेत्युत्तरीयम् ॥ वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णं
न्तमसः परस्तात् ॥ तमेवविदित्वातिमृत्युमेतिनान्यः पन्थाविद्यतेयनायइ
दम्विष्णुरितिपुष्पं ॥ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांशु
सुरेस्वाहा ५।१५ धूरसीतिधूपं ॥ धूरसिधूर्व्वधूर्व्वन्तन्धूर्व्वतंय्योऽस्मान्धूर्व्व
ति तन्धूर्व्वयम्वयन्धूर्व्वामः देवानामसिवह्नितमं सस्नितमम्पप्रितमञ्जुष्ट
तमन्देवहूतमम् १।८ चंद्रमामनसइतिदीपम् ॥ चन्द्रमामनसोजातश्चक्षोःसूर्य्यो

ऽअजायत श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ३१।१२ अन्नपतेइतिनैवे
द्यं॥ अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः॥ प्रप्रदातारन्तारिषऽऊर्जन्नोधेहि
द्विपदे शञ्चतुष्पदे ११।८३ एवंनैवेद्यंदत्वा॥ यत्पुरुषेणेत्याचमनीयम्॥ यत्पुरुषेण
हविषा देवा यज्ञमतन्वत॥ वसन्तोऽस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः ३१।१४
यज्ञेनेति पुष्पांजलीन्॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यास
न् ते ह नाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ३१।१६ एवंपुष्पांज
लिंदत्वा संप्रार्थ्य तैलपात्रस्नानवस्त्रासननैवेद्यादिकं शिल्पिने दद्यात्॥

इति देवस्नपनविधिः     एवं यथाविधिं देवं स्नापयित्वा पुरुषसूक्तेन देवस्य स्तु
तिं कुर्यात् तथाहि  सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् स भूमिꣳ सर्व्व
तस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ३१।१ पुरुषऽएवेदꣳ सर्व्वं यद्भूतं यच्च भाव्यम् उ
तामृतत्त्वस्येशानो यदन्नेनातिरोहति ३१।२ एतावानस्य महिमातो ज्यायाꣳश्च
पुरुषः पादोस्य व्विश्वा भूतानि त्रिपादस्यामृतं दिवि ३१।३ त्रिपादूर्ध्व ऽउदैत्पुरु
षः पादोस्येहाभवत्पुनः  ततो व्विष्वङ् व्यक्रामत्साशनानशनेऽअभि ३१।४
ततो व्विराऽजायत व्विराजोऽअधि पुरुषः  स जातोऽअत्यरिच्यत पश्चाद्भूमि

मथोपुरः ३१।५ तस्म्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् पशूँस्ताँश्चक्के वा
यव्व्यानारण्याग्ग्राम्म्याश्चये ३१।६ तस्म्माद्यज्ञात्सर्व्वहुतऽऋचः सामानिज-
ज्ञिरे छन्दाᳬसिजज्ञिरेतस्म्माद्यजुस्तस्म्मादजायत ३१।७ तस्म्मादश्वाऽ
अजायतयेकेचोभयादतः गावोहजज्ञिरेतस्मात्तस्म्माज्जाताऽअजावयः ३१
८ तंय्यज्ञम्बर्हिषिप्प्रौक्षन्पुरुषञ्जातमग्ग्रतः तेनदेवाऽअयजन्तसाद्ध्याऽऋ
षयश्चये ३१।९ यत्पुरुषंव्व्यदधुः कतिधाव्व्यकल्प्पयन् मुखङ्किमस्यासीत्किं-
म्बाहूकिमूरूपादाउच्च्येते ३१।१० ब्राह्मणोस्यमुखमासीद्बाहूराजन्न्यः कृतः

९७

ऊरू तदस्य यद्वैश्यः पद्भ्याꣳ शूद्रोऽअजायत ३१।११ चन्द्रमा मनसो जातश्च
क्षोः सूर्य्योऽअजायत श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ३१।१२ ना
भ्याऽआसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्त्तत पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा
लोकाँ२ऽअकल्पयन् ३१।१३ यत्पुरुषेण हविषा देवा यज्ञमतन्वत वसन्तो
स्यासीदाज्यं ग्रीष्मऽइध्मः शरद्धविः ३१।१४ सप्तास्यासन्परिधयस्त्रिः सप्त
समिधः कृताः देवा यद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ३१।१५ यज्ञेन यज्ञम
यजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ते ह नाकम्महिमानः सचन्त यत्र पू

व्वै साद्ध्याः सन्ति देवाः ३१।१६ अद्भ्यः सम्भृतः पृथिव्व्यै रसाच्च व्विश्वकर्म्मणः स
मवर्त्तताग्ग्रे तस्य त्त्वष्टा व्विदधद्रूपमेति तन्म्मर्त्त्यस्य देवत्वमाजानमग्ग्रे ३१।१७
व्वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः परस्तात् तमेव व्विदित्वाति मृत्यु
मेति नान्यः पन्था व्विद्यतेऽयनाय ३१।१८ प्रजापतिश्चरति गर्ब्भेऽअन्तरजाय-
मानो बहुधा व्विजायते तस्य योनिम्परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि व्वि
श्श्वा ३१।१९ यो देवेभ्यऽआतपति यो देवानाम्पुरोहितः पूर्व्वो यो देवेभ्यो जा
तो नमो रुचाय ब्राह्मये ३१।२० रुचम्ब्राह्मञ्जनयन्तो देवाऽअग्ग्रे तदब्रुवन्

यस्त्वैवम्ब्राह्मणोव्विद्यात्तस्यदेवाऽअसन्वशे ३१।२१ श्रीश्चतेलक्ष्मीश्चप
त्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् इष्णन्निषाणामुम्मऽइषा
णसर्व्वलोकम्मऽइषाण ३१।२२ एवंपुरुषसूक्तेनदेवंस्तुत्वा उत्तिष्ठब्रह्मणस्प
तइतिमंत्रेण उत्तिष्ठोत्तिष्ठेत्यनेनवादेवमुत्थापयेत् उत्तिष्ठब्रह्मणस्पतेदेवय
न्तस्त्वेमहेऽउपप्रयन्तुमरुतः सुदानवऽइन्द्रप्राशूर्भवासचा ३४।५६ उत्तिष्ठोत्ति
ष्ठगोविन्दउत्तिष्ठगरुडध्वज उत्तिष्ठकमलाकांतत्रैलोक्यंमंगलंकुरु उत्ति
ष्ठोत्तिष्ठसंसारेज्यजनिद्रांजगत्पते साधवःसंप्रतीक्षंतेत्वद्दर्शनमहोत्सवाः

रथेतिष्ठन्निति रथमारोपयेत् रथेतिष्ठन्नयति वाजिनः पुरोयत्र यत्रकामयते सु
षारथिः अभीषूनाम्महिमानम्पनायत मनः पश्चादनुयच्छन्ति रश्मयः ३१।४२
ततश्चाभूर्जेनेति चतूर्य्यनिनादैः पुरुषसूक्तं जपन् पुरतश्चा स्यादस्य वा प्रादक्षेन र
थमार्गानुगामिना कर्म्मकर्तृस्थपतिलोकान् वस्त्र हिरण्यादिना नौराज्यमानैः याग
मंडाख्यमहामंडपपश्चिमद्वारि आनीयो नाद्यार्घं दत्वा कनिक्रददिति मूलमंत्रेण पु
रुषसूक्तेनाकृष्णेनेति मंत्रेण वा प्रवेशयेत् शन्नोवातः पवतां शन्नस्तपतु सूर्य्यः
शन्नः कनिक्रदद्देवः पर्ज्जन्योऽअभिवर्षतु पुरुषसूक्तं सहस्रशीर्षादिमंत्रसमुदा

यं आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च हिरण्ययेनसविता
रथेनादेवोयातिभुवनानिपश्यन् ३३।४२ तदनंतरं मध्यवेद्याः पश्चिमभागस्थित
पीठेपूर्वाभिमुखंदेवंनिधाय पुरुषएवेत्यनेनपाद्यं एतावानस्येत्यनेनार्घ्यंदद्यात्
पुरुषऽएवेदꣳ सर्वंय्यद्भूतंय्यच्चभाव्यम् उतामृतत्वस्येशानोयदन्नेनातिरोहति
३१।२ एतावानस्यमहिमातोज्यायाꣳश्चपूरुषः पादोस्यविश्वाभूतानित्रिपा
दस्यामृतन्दिवि ३१।३ ततोन्नपतइतिमधुपर्कंकुर्यात् अन्नपतेन्नस्यनोदे
ह्यनमीवस्यशुष्मिणः प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेसंचतुष्पदे अथ-

पूर्वापरोत्तरायाम्यास्येषु प्रासादेषु वेदिकायामाग्निमरुदीशाननैर्ऋतेषु कोणेषु चतु-
ष्कलशाविकारान्विकीर्य्य महामंडपमध्यवेदिकायां प्राक्शिरां शय्यां सारदारुमयं पट्ट
वा निधाय तदुपरि उपधानद्वयोपेतां तूलिकामास्तीर्य्य तामपि सद्वस्त्रेणाच्छाद्य तदुप
रि अक्षतैः स्वस्तिकं कृत्वा प्रागग्रान् कुशानास्तीर्य पुष्पाणि च विन्यस्य तस्याः पूर्वादि
दिक्षु विष्णुमधुसूदनत्रिविक्रमवामनान् स्वस्वनाममंत्रैः पूजयेत् आग्नेयादिकोणे
षु च श्रीधरं हृषीकेशं पद्मनाभं दामोदरं च स्वस्वनाममंत्रैः पूजयेत् शिवादिप्रतिष्ठा
यां तु शर्वादीनमूर्तीशान् स्वस्वनाममंत्रैरेव पूर्वादिदिक्षु क्रमेण पूजयेत् तद्यथा

शर्वंपशुपतिंचोग्रंरुद्रंभवमयेश्वरम् महादेवंचभीमंचइशानंक्रमतोन्यसेत्
एवंसंपूज्य शय्यायांनमः शंभवायेतिमंत्रेणप्राक्शिरसंदेवंनिवेशयेत् नमश्श
म्भवायचमयोभवायचनमः शङ्करायचमयस्करायचनमः शिवायचाशिवतरायच१६
४१ एवंप्रकारेणदेवंशय्यायांनिवेश्यत्रिभिः पट्टदुकूलैर्विचित्रैः कार्पासनिर्मितैर्दु
कूलैर्वादेवमाछाद्य देवस्याशिरोदेशेभूमावेवसवस्त्रकांचनराजतंताम्रमयंमृण्म-
यंवाकलशंमापोदेवीरितिमंत्रेणस्थापयित्वा आपोअस्मानितिप्रतिष्ठापयेत्
आपोदेवीः प्रतिगृभ्णीतभस्मैतत्स्योनेकृणुध्वꣳसुरभाऽउलोके तस्मैनमन्ता-

रज्जनयः सुपत्नीर्म्मातेवपुत्रम्बिभृताप्स्वेनत् १२।३५ आपोऽअस्मान्मातरः शु
न्धयन्तु घृतेननोघृतप्वः पुनन्तु विश्वꣳहि रिप्रम्प्रवहन्ति देवीरुदिदाभ्यः शुचि
रापूतऽएमि दीक्षातपसोस्तनूरसि तान्त्वाशिवाꣳशग्माम्परिदधे भद्रंवर्णम्पुष्य
न् ४।२ तदनंतरमाप्यायस्वेतिमंत्रेण मधुसर्पिर्भ्यांदेवमभ्यंजयेत् आप्यायस्व
मदिन्तम सोमविश्वेभिरꣳशुभिः भवानः सप्रथस्तमः सखावृधे १२।११४ ततो
यातेरुद्रेति देवंतैलसर्षपैरुपलिंपेत् यातेरुद्रशिवातनूरघोरापापकाशिनी तया
नस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि १६।२ ततोगंधपुष्पाद्यैर्देवमभ्यर्च्य

बृहस्पते परीति मंत्रेणासितं परिधानं दद्यात् बृहस्पते परिदीया रथेन रक्षोहामि-
त्राँ॥ अपबाधमानः प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथा-
नाम् अत्र देवस्य दक्षिणे पाणौ बृहस्पते परीति मंत्रेण कंकणबंधनमित्यपि केचि-
द्वदन्ति ततो विश्वतश्चक्षुरिति मंत्रेण देवस्य पादनाभिवक्षःशिरस्वालंभनं वि-
श्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् सम्बाहुभ्यां धम-
ति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः १७।१९ तत इन्द्रः क्षत्रं ददात्विति मंत्रेण
देवस्य दक्षिणपार्श्वे छत्रधारणं

ततोवातो वामनो इति व्यज
नंस्थापयेत् व्वातोवामनोवागन्धर्वाः सप्तविंशतिः तेऽअग्रेस्वमयुञ्जस्तेऽ
अस्मिञ्जवमादधुः ९।७ त्रीणिपदेतिमंत्रेणचरणप्रदेशेपादुके त्रीणिपदाधि
चक्रमेविष्णुर्गोपाऽअदाभ्यः अतोधर्म्माणिधारयन् पार्श्वयोः शांतिकुंभौ
आसन दर्पण घंटा भक्ष्य भोज्यान्नपानादि घृतं गृहोपस्कर जातं चाभित्वाशूरेतिमं
त्रेणदेवस्यपुरतः परिकल्पयेत् अभित्वाशूरनोनुमोदुग्धाऽइवधेनवः ईशानमस्य
जगतः स्वर्द्दृशमीशानमिन्द्रतस्थुषः अथभस्मदर्भतिलैर्देवस्यसमंताद्भुते-

भ्योरक्षार्थंप्राकारत्रयंकृत्वामंडपाद्बहिर्गत्वाप्रतिदिशमिंद्रादिलोकपालेभ्यो
गंधादिदानपूर्वकंबलिंदद्यात् बलिमंत्रस्तु पूर्वादिग्वासिभ्योदिक्पतिदिग्भूता
धिपतिदिग्रुद्रदिङ्मातृदिक्क्षेत्रपालेभ्योनमइत्येवंप्रतिदिशंबलिदानं त्र्यंब
कमितिमंत्रेणभूतेभ्योबलिदानं त्र्यंबकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् उर्वारु
कमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् त्र्यम्बकंयजामहेसुगन्धिम्पतिवेदनं
उर्वारुकमिवबन्धनादितोमुक्षीयमामुतः ३।६ एवंपूर्वादिक्षुबलिंदत्वाचमूयमहा
मण्डपमध्येत्रागत्यहोमंकुर्यात् तद्यथा ॐ परायविश्वात्मनेस्वाहेतिहोममंत्रंवि-

ष्णुप्रतिष्ठायांज्ञेयं शिवादिप्रतिष्ठायांतु ॐ परायशिवात्मनेस्वाहेतिमंत्रोहोमःक
र्तव्या अनेनमंत्रेणाष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिरष्टौवातिलैर्यवैर्वाप्र
त्येकमाहुतीर्हुत्वाप्रतिमायांन्यासानारभेत् तद्यथा अंपादयोः उंहृदये मंल
लाटे इतिप्रणवन्यासः भूःपादयोः भुवःहृदये स्वःललाटे इतिव्याहृतिन्या
सः अंतालुके आंमुखे इंदक्षिणनेत्रे ईंवामे उंदक्षिणश्रवणे ऊंवामे ऋंद
क्षिणगंडे ॠंवामे ऌंदक्षिणनासापुटे ॡंवामे एंऊर्ध्वदशनेषु ऐंअधोदश
नेषु ओंऊर्ध्वोष्ठे औंअधरे अंललाटे अःजिह्वायां यंत्वचि रंचक्षुषि लंना

सिकायां वंदशांनेषु शंश्रोत्रयो० षंउरे संकटिदेशे हंहृदये क्षंनाभ्यां लं
लिंगे पंफंचंभंमंदक्षिणबाहौ तंथंदंधंनं०वामे टंठंडंढंणंजंघायां चंछंजं
झंञंवामायां कंखंगंघंङं॰सर्वांगुलीषु इतिमातृकान्यासः ३ आदित्यायन
मः चन्द्रायनमः नेत्रयोः अंगारकायनमउसि बुधायनमः स्कंधे० बृहस्प
तयेनमः जिव्हायां शुक्रायनमोलिंगे० शनैश्चरायनमः ललाटे॰ राहवेनमः
पादयोः केतुभ्योनमः केशेषु रोहिण्यैनमः हृदये० मृगशिरसे० शिरसि आ
र्द्रायैनमः केशेषु॰ पुनर्वसवेनमः ललाटे॰ पुष्यायनमोमुखे॰ आश्लेषाभ्योनमो-

नासायां मघाभ्योनमोदशनेषु॰ पूर्वाफाल्गुनीभ्योनमोदक्षिणश्रोत्रे॰ उत्तराफा
ल्गुनीभ्योनमोवामे॰ हस्तायनमोहस्तयोः॰ चित्रायैनमोदक्षिणभुजे स्वात्यैनमोवा
मभुजे विशाखाभ्योनमोदक्षिणस्तने अनुराधाभ्योनमोवामस्तने ज्येष्ठाभ्यो
नमोदक्षिणकुक्षौ॰ मूलायनमोवामकुक्षौ॰ पूर्वाषाढाभ्योनमः कटिपार्श्वयोः उत्त
राषाढाभ्योनमः लिंगेश्रवणधनिष्ठाभ्योनमोवृषणयोः शतभिषाभ्योनमोनेत्रे॰
पूर्वाभाद्रपदाउत्तराभाद्रपदाभ्यांनमः ऊर्वोः रेवतीअश्वनीभ्यांनमः जंघयोः भर
णीकृत्तिकाभ्यांनमः पादयोः ध्रुवायनमोनाभ्यां सप्तऋषिभ्योनमोकण्ठे मा-

तृमंडलायनमः कटिदेशे विष्णुपदेभ्योनमः पादयोः नागवीथ्यैनमः अंगवी
थ्यैनमः वनमालायां ताराभ्योनमः रोमकूपेषु अगस्त्यायनमः कौस्तुभे ५ इ
तिग्रहादिन्यासः ४ चैत्रायनमः शिरसि वैशाखायनमोमुखे ज्येष्ठायनमोहृ
दये आषाढायनमः श्रावणायनमः स्तनयोः भाद्रपदायनमः उदरे आश्विना
यनमः कट्यां कार्तिकायनमः मार्गशीर्षायनमः ऊरुद्वये पौषायनमः माघाय
नमः जंघयोः फाल्गुनायनमः पादयोः संवत्सरायनमः परिवत्सरायनमः इदाव
त्सरायनमः वत्सरायनमः इतिदक्षिणाद्येषुबहुषु सर्वेभ्योनमः संधिषु ऋतुभ्यो-

नमः लिंगे अहोरात्रेभ्योनमोस्थिषु क्षणायनमः लवायनमः कलायैनमः
रोमकूपेषु कृतायनमो मुखे त्रेतायनमो हृदये द्वापारायनमोनितंबे कलियु
गायनमः पादयोः मन्वंतरेभ्योनमोबाह्वोः परायनमः परार्धायनमः जंघयोः
महाकालायनमः शरीरे उदगायनमः दक्षिणायनमः पादयोः विषुवतेनमः
इतिसर्वांगुलीषु इतिकाल न्यासः ब्राह्मणायनमोमुखे क्षत्रेयायनमोबा-
ह्वोः वैश्यायनमः ऊर्वोः शूद्रायनमः पादयोः संकरजेभ्योपादाग्रे अनुलो
मजेभ्योनमः सर्वांगसंधिषु गोभ्योनमः मुखे अजाभ्योनमः अविकाभ्योनमः

हस्तयोः ग्रामपशुभ्योनमः आरण्यपशुभ्योनमः ऊर्वोः इतिवर्णन्यासः मेघे भ्योनमः केशेषु अभ्रेभ्योनमः रोमसु नदीभ्योनमः सर्वगात्रेषु समुद्रेभ्यो नमः कुक्षिदेशे इतितोयन्यासः ऋग्वेदायनमः शिरसि यजुर्वेदायनमोदक्षि णभुजे सामवेदायनमो वामे सर्वोपनिषद्भ्योनमोहृदये इतिहासपुराणेभ्यो नमोजंघयोः अथर्वांगिरसेभ्योनमोनाभौ कल्पसूत्रेभ्योनमो पादयोः व्या- करणायनमो वक्त्रे तर्केभ्योनमः कंठे मीमांसायैसनिरुक्तायैनमोहृदि छंद शास्त्रेभ्योनमः ज्योतिःशास्त्रेभ्योनमः नेत्रयोः नीतशास्त्रेभ्योभूतशास्त्रेभ्यो

नमः श्रोत्रयोः आयुर्वेदायनमो दक्षिणभुजे धनुर्वेदायनमो वामभुजे योगशा
स्त्रेभ्यो नमो हृदये नीतिशास्त्रेभ्यो नमः पादयोः वस्तुतन्त्रायनमः ओष्ठयोः
इतिविद्यान्यासः दिवेनमो मूर्द्ध्नि सूर्यलोकायनमो दक्षिणनेत्रे चन्द्रलोका
यनमो वामनेत्रे अनिललोकायनमो घ्राणे व्योम्नेनमो नाभ्याम् समुद्रे
भ्योनमोऽस्थिदेशे पृथिव्यैनमः पादयोः इतिवैराजन्यासः १ हिरण्यगर्भा
यनमः शिरसि कृष्णायनमः केशेषु रुद्रायनमो ललाटे यमायनमो भ्रु
कुट्यां अश्विभ्यांनमः कर्णयोः वैश्वानरायनमो मुखे मरुद्भ्योनमो घ्राणे

वसुभ्योनमः कंठे रुद्रेभ्योनमोदंतेषु सरस्वत्यैनमोजिह्वायां इन्द्रायनमो
दक्षिणभुजे वलयेनमोवामभुजे प्रल्हादायनमोवामस्तने विश्वकर्मणेन
मोदक्षिणस्तने नारदायनमोदक्षिणकुक्षौ अनंतादेभ्योनागेभ्योनमोवाम
कुक्षौ वरुणायनमोहस्तयोः मित्रायनमःपादयोः विश्वेभ्योदेवेभ्योनमऊरु
द्वये पितृभ्योनमोजानुदेशे यक्षेभ्योनमोजंघयोः राक्षसेभ्योनमोगुल्फयोः
पिशाचेभ्योनमःपादयोः असुरेभ्योनमःपादांगुलीषु विद्याधरेभ्योनमः पार्श्व
योः ग्रहेभ्योनमःपादतलयोः गुह्यकेभ्योनमोगुदे पूतनादिभ्योनमोनखेषु

गंधर्वेभ्योनमो ओष्ठयोः कार्त्तिकेयायनमो गणेशायनमः कटिपार्श्वयोः इति
देवयोनिन्यासः १० मत्स्यायनमोमूर्द्धि कूर्मायनमः पादयोः नृसिंहायनमोल
लाटे वराहायनमोजंघयोः वामनायनमोमुखे परशुरामायनमोहृदि रामा
यनमोबाहुषु कृष्णायनमोनाभ्याम् बुधायनमोबुद्धौ कल्किनेनमोजानुदे
शे केशवायनमः शिरसि नारायणायनमो मुखे माधवायनमोग्रीवायां गोविं
दायनमोबाह्वोः विष्णवेनमोहृदये मधुसूदनायनमोपृष्ठे त्रिविक्रमायनमः
कट्यां वामनायनमोजठरे श्रीधरायनमः हृषीकेशायनमः जंघयोः पद्म

नाभायनमः गुल्फयोः दामोदरायनमः पादयोः इति मूर्तिन्यासः ११ अश्वमे
धायनमो मूर्द्ध्नि नरमेधायनमो ललाटे राजसूयायनमो मुखे गोसवायनमः क
ण्ठे द्वादशाहायनमो हृदि अहीनेनमो नाभौ सर्वजिद्भ्योनमो दक्षिण क
ट्यां अग्निष्टोमायनमो लिंगे अतिरात्रायनमो वृषणयोः आप्तोर्यामायनमो
ऊर्वोः षोडशिनेनमो जान्वोः उक्थायनमो दक्षिणजंघायां वाजपेयायनमो
वामजंघायां अत्यग्निष्टोमायनमो दक्षिणबाहौ चातुर्मास्येभ्योनमो वामे
सौत्रामण्येनमो हस्तेषु पशुविष्ट्यैनमो गुलीषु दर्शायनमः पौर्णमासायनमः

नेत्रयोः सर्वौषधिभ्योनमोरोमकूपेषु स्वाहाकारायनमः वषट्कारायनमः स्तनयोः
पंचमहायज्ञेभ्योनमः पादांगुलीषु आहवनीयायनमोमुखे दक्षिणाग्नयेनमो
हृदि गार्हपत्यायनमोनाभौ वेद्यैनमः उदरे प्रवर्ग्यायनमोभूषणेषु सवनेभ्यो
नमः पादयोः इध्मेभ्योनमोबाहुषु दर्भेभ्योनमः केशेषु इतिक्रतुन्यासः १२
अथमूलमंत्रन्यासः १३ आयुधन्यासः शक्तिन्यासः १५ अंगन्यासः १६
इतिसाधारणः सर्वत्रतेचवैष्णावमाधिकृत्योच्यते तद्यथा धर्मायनमोमूर्द्ध्नि
ज्ञानायनमोहृदि वैराग्यायनमोगुह्ये ऐश्वर्यायनमः पादयोः खड्गायनमः

शिरसि शार्ङ्गायनमोमस्तके मुसलायनमोदक्षिणभुजे हलायनमोवामे च
क्रायनमोनाभ्यां जठरे पृष्ठेच शंखायनमोलिंगेवृषणेच गदायनमोजंघयोः
जान्वोश्च पद्मायनमोगुल्फयोः पादयोश्चशिवयागेतु वज्रायनमः सिरसि दंडाय
नमःमस्तके खड्गायनमः दक्षिण भुजे पाशायनमोवामभुजे ध्वजायनमो
नाभ्यां जठरेवृषेच अंकुशायनमोलिंगे वृषणेच त्रिशूलायनमः जंघयोः
जानुनोश्च चक्रायनमोगुल्फयोः यमायनमः पादयोः इत्यायुधन्यासः २३
लक्ष्मैनमोललाटे सरस्वत्यैनमोमुखे रत्यैनमोगुह्ये प्रीत्यैनमः कण्ठे कीर्त्यै-

नमोदिक्षु शांत्यैनमोहृदये तुष्ट्यैनमोजठरे पुष्ट्यैनमः सर्वत्र इतिशक्तिन्या
सः २४ मूलमंत्रस्यहृदयंहृदयेशिरः शिरसि शिखाशिखायां कवचंसर्वत्र
नेत्रयोर्नेत्रं करयोरस्त्रं दक्षिणस्तनयोः श्रीवत्सायनमः उरसि कौस्तुभा-
यनमः कण्ठे वनमालायैनमः इत्यंगन्यासः ॐ पादयोः नंजानुनोः मोंगुह्ये
भंनाभ्यां गंहृदये वंकंठे तेंमुखे यांनेत्रयोः सुंललाटे देंशिरसि वांदिक्षण
पार्श्वेयंउत्तरे इतिद्वादशाक्षरन्यासः इतिचत्वारन्यासः अथप्रतिमायांजीव
न्यासः तत्रनाभेरधस्तादाधारस्थानादाकुंचनप्रकारेणनाभिचक्रेतेज आ

नीयततेजो हृत्पद्ममानीय हृत्पद्मात्तं चतन्मात्रैरूपेन ऐश्वर्यादिगुणयुक्तं-
स्फुरद्रश्मिसंकाशमूर्ध्वचक्रत्रयभेदेन स्वदेहध्यानेन वामनासान्निःसर्प्य ब्र-
ह्मरंध्रे प्रतिमायां प्रविश्य चिंतयेत् तत्र ललाटे किंचित् स्थिरं कृत्वा घंटि
काद्वारमानयेत् तत्र स्थिरीकृत्य तस्मात्तेजसः चक्षुरादिनासिकांतं प्राणान्नि
वेशयेत् पाद्म्यादि घंटिकांतमपानं नाभौ हृदये समानं सुषुम्णाब्रह्मरंध्रे उदा
नं हृत्पद्मेदलाष्टकं तन्मध्ये कर्णिकायां व्यापिनं पुरुषं प्रणवेनन्यसेत् ॐ मं
जीवात्मनेनमः ॐ भं प्राणात्मनेनमः शरीरव्यापकं न्यसेत् ॐ वं बुद्ध्यात्मने

नमः ॐ फं अहंकारात्मनेनमः ॐ बं मन आत्मनेनमः हृदये ॐ नं शब्दतन्मात्रात्म
नेनमः शिरसि ॐ धं स्पर्शतन्मात्रात्मनेनमः वक्त्रे ॐ दं रूपतन्मात्रात्मनेनमो हृदये
ॐ थं रूपतन्मात्रात्मनेनमो हस्तयोः ॐ तं गंधतन्मात्रात्मनेनमः पादयोः ॐ णं श्रोत्रा
त्मनेनमः श्रोत्रयोः ढं त्वगात्मनेनमः डं चक्षुरात्मनेनमः चक्षुषोः ठं जिह्वात्मनेन
मो जिह्वायां ॐ टं घ्राणात्मनेनमो घ्राणे ॐ ञं वागात्मनेनमो वाचि ॐ झं प्राणात्मनेन
मः पाण्योः ॐ जं पादात्मनेनमः पादयोः ॐ छं पाय्वात्मनेनमः पायौ ॐ चं उपस्थात्म
नेनम उपस्थे ॐ ङं पृथिव्यात्मनेनमः पादयोः ॐ घं अबात्मनेनमः बस्तौ ॐ गं तेजात्म

नेनमो हृदये ॐ खं घ्राणात्मनेनमः घ्राणे ॐ कं आकाशात्मनेनमः सिरसि
ॐ शं पुंडरीकाक्षायनमो हृदये ॐ रवं सूर्यात्मने नमो हृत्पुंडरीक मध्ये ॐ सं
सो मात्मनेनमस्तन्मधे ॐ रं वन्ह्यात्मनेनमस्तन्मध्ये ततोवंबीजं स्वाभिमत
मूर्त्यारव मंत्रेणयोज्यं ॐ पुरुषात्मनेनमः इतिपुरुषभावानायां ॐ पंपरायस्स
वात्मनेनमः इतिसर्वसाक्षिणं भावयित्वा ॐ धं सर्वात्मनेनमइतिसर्वतोमुखं
ॐ वं अनुग्रहात्मनेनमइत्यनुग्रहकारकं ॐ वं सर्वभूतात्मनेनमइतिसर्वसंभूति
कं ॐ लं सर्वसंहरणात्मनेनमइतिसर्वसंहारात्मकं १७ क्रमेण ध्यात्वा सर्वेश्व

रं तन्नतत्त्वश्चयन्यासः कर्तव्यः तद्यथा ॐ आत्मतत्त्वायनमः ॐ आत्मत
त्त्वाधिपतये ब्रह्मणेनमः पादयोः ॐ विद्यातत्त्वायनमः विद्यातत्त्वाधिपतये
विष्णवेनमः हृदये ॐ वायुतत्त्वायनमोघ्राणे ॐ जिह्वातत्त्वायनमोजिह्वायां
ॐ चक्षुस्तत्त्वायनमोश्चक्षुषोः ॐ त्वक्तत्त्वायनमश्चर्मणि ॐ श्रोत्रतत्त्वायनमः
कर्णयोः ॐ वायुतत्त्वात्मनेनमः पायौ ॐ उपस्थतत्त्वायनमः उपस्थे ॐ हस्तत
त्त्वायनमोहस्तयोः ॐ पादतत्त्वायनमः पादयोः ॐ वाक्तत्त्वायनमोवाचि ॐ
तमस्तत्त्वायनमोहृदि ॐ बुद्धितत्त्वायनमः ॐ अहंकारतत्त्वायनमः ॐ सत्वाय

नमः ॐ रजसेनमः ॐ तमसेनमः ॐ पुरुषतत्वायनमोहृदये ॐ रागतत्वायनमः
ॐ विद्यातत्वायनमः ॐ कालतत्वायनमः ॐ मायातत्वायनमः ॐ ईश्वरतत्वाय-
नमः ॐ सदाशिवतत्वायनमः ॐ शक्तितत्वायनमः ॐ शिवतत्वायनमः इतिषो
डशान्यासः २७ अथगायत्रीन्यासः सूर्यस्यतत्पादांगुष्ठयोः सगुल्फयोः वि
जंघयोः तुजानुनोः वउर्वोःरेगुह्ये णिवृषणयोः यंकटिदेशे भनाभौ गोजठरे
देस्तनयोः वहृदये स्यकंठे धीवदने मतालुमध्ये हिनासिकाग्रे धिचक्षुषोः
योभ्रूमध्ये योललाटे नः पूर्वदिशिप्रदक्षिणादिशि चोपश्चिमादिशि दउत्तरादिशि

या मूर्द्धि सर्वत्र तत्सवितुर्हृदये वरेणियंशिरसि भर्गोदेवस्यशिखायां धीमहि
कवचे धियोयोनःनेत्रयोः प्रचोदयादस्त्रे इतिगायत्रीन्यासः २० अथमंत्रन्या
सः अग्निमीले इति पादयोः अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् अग्निं
होतारंरत्नधातवम् इषेत्वेति गुल्फयोः इषे त्वेति गुल्फयोः इषेत्वोर्ज्जेत्वावायवस्थ
देवोवः सविताप्रार्प्पयतुश्रेष्ठतमायकर्म्मणऽ आप्यायद्धमग्न्याऽ इन्द्रायभागम्प्र
जावतीरनमीवाऽ अयक्ष्मामावस्तेन ऽ ईशतमघशं १० सोध्रुवाअस्मिन्गोपतौ-
स्यातवह्वीर्य्यजमानस्यपशून्पाहि ११ अग्नआयाहीतिजंघयोः अग्नऽआयाहि वी-

तयेगृणानोहव्यदातयेनिहोतासत्सिबर्हिषि शन्नोदेवीरितिजानुनोः शन्नोदे
वीरभीष्टयऽआपोभवन्तुपीतये शंय्योरभिस्रवन्तुनः ३६।१२ बृहद्रथंतरेइति
उर्वोः बृहद्रथंतरेपक्षौस्तोमऽआत्माछन्दाᳬसियज्ञानियजूᳬषिनामसामते
तनूर्वामदेव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याः शफाःसुपर्णोऽसिगरुत्मान्दिवंगच्छस्वःप
त १२।४ स्वस्तिनइतिजठरे स्वस्तिऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः
स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु २५।१९ दीर्घायुत्वेतिहृ
दये दीर्घायुत्वायबलायवर्चसे सुप्रजास्त्वायसहसाऽअथोजीवशरदः शतम्

श्रीश्चत इति कंठे श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपम-
श्विनौव्यात्तम् इष्णन्निषाणामुम्म इषाणसर्वलोकम्म इषाण ३१।१२ त्राता
रमितिवक्त्रे त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहव१० शूरमिन्द्रम्ह्वयामि
शक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः२०।५० त्र्यंबक इतिस्तनयोःने
त्रयोश्च त्र्यंबकंय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् उर्व्वारुकमिवबन्धनान्मृत्यो
र्म्मुक्षीयमामृतात् त्र्यम्बकंय्यजामहेसुगन्धिम्पतिवेदनम् उर्व्वारुकमिवब-
न्धनादितोमुक्षीयमामुतः१ मूर्द्धानमितिशिरसि मूर्द्धानन्दिवो अरतिम्पृथिव्या

वैश्वानरमृतऽआजातमग्निम् कविᳪ सम्म्राजमतिथिञ्जनानामासन्नापा
त्रञ्जनयन्तदेवाः इतिसाधारणोवैकल्पिकश्चन्यासः अथद्वादशाक्षरेणना
रायणस्यमूर्तिन्न्यासः ॐ केशवायनमः शिरसि ननारायणायनमोमुखे मोंमा
धवायनमोग्रीवायां भगोविंदायनमः कंठे भंविष्णवेनमः पृष्ठे वमधुसूदनाय
नमः कुक्षौ तेंत्रिविक्रमायनमःकट्यां वांवामनायनमोजंघयोः सुंश्रीधरायन
मो गुल्फे देंहृषीकेशायनमोदक्षिणे वापद्मनाभायनमोवामपादे यादामोद
रायनमो दक्षिणे इतिनारायणद्वादशाक्षरेणमूर्तिन्न्यासः २२ ॐ हृदयायनमः

हृदये विष्णवेनमः शिरसि ब्रह्मण्यायनमः शिखायां ध्रुवायनमः कवचे च
क्रिणेनमः अस्त्रायफट् अस्त्रं हस्तयोः शंभवायनमो गायत्री दक्षिणनेत्रे वि
जायनमः सावित्रे वामनेत्रे चक्रिणे चक्रिरूपायनमः पिंगलाक्षं दक्षु इत्यष्टां
गविष्णुमंत्रन्यासः २३ अथपुरुषसूक्तन्यासः सहस्रशीर्षेतिपादयोर्न्यसेत् पु
रुषएवेति जंघयोः एतावानितिजानुनोः त्रिपादूर्ध्वमित्यूर्वोः तस्माद्विराडितिवृष
णे तस्माद्यज्ञेति कट्यां तस्माद्यज्ञादितिनाभ्यां तस्मादश्वादितिहृदये तंयज्ञ
मितितनयोः तत्पुरुषमितिबाह्वोः ब्राह्मणोस्येतिगले चंद्रमामनसइति मुखे

नाभ्याआसीदितिनासायां तत्पुरुषेणेतिचक्षुषोः सप्तास्येतिकर्णयोः यज्ञे-
नयज्ञमितिशिरसि इतिपुरुषसूक्तन्यासः २४ अद्भ्यः संभृतइतिहृदये वेदा-
हमितिशिरसि प्रजापतिरितिशिखायां योदेवेभ्यइतिकवचे रुचंब्राह्ममि-
तिनेत्रयोः श्रीश्चतइति अस्त्रे इत्युत्तरनारायणन्यासः २५ शिवस्यचेत्कलान्या-
सः २५ अथशिवस्यपंचब्रह्मन्यासः तद्यथा अंगुष्ठयोरीशानं तर्जन्योस्तत्पु-
रुषं मध्यमयोरघोरं अनामिकयोर्वामं कनिष्ठयोः सद्योजातं ततः कनिष्ठयोः
हृदये अनामिकयोः शिरसि मध्यमयोः शिखायां तर्जन्योः कवचं अंगुष्ठ-

योरस्त्रंविन्यस्य परेणतेजसासंयोज्य कवचेनावगुंत्यसर्वकर्मसुनियोजयेत्
सर्वः आमनं अनेनविधिनादेवस्य करन्यासंविधायलिंगमुद्रांबध्वा ईशानः सर्व
विद्यानामीश्वरः सर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमे अस्तु सदा
शिवोमिति ईशानमुष्टिंबध्वा अंगुल्यग्रेरुद्रमुद्रयामूर्द्धि तत्पुरुषायविद्महे
महादेवायधीमहि तन्नोरुद्रः प्रचोदयात् तथैवतर्जन्यंगुष्ठयोगात्पुरुषमुखे
अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपे-
भ्यः इतिमध्यमांगुष्ठयोगेनहृदयेघोरं वामदेवायनमोज्येष्ठायनमः श्रेष्ठायनमोरु

द्रायनमः कालायनमः कलविकरणायनमो बलविकरणायनमो बलायनमोबल
प्रथमनायनमः सर्वभूतदमनायनमोमनोन्मनायनम इतित्र्यंगुष्टानामिकायोगे
नगुल्ये सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः भवेभवेनातिभवेभजस्व-
मांभवोद्भवायनमः इतिकनिष्ठांगुष्टयोगेनपादादारभ्यमस्तकांतयावत् शरीरव्या
पकत्वेनमूर्तिभूतंसद्योजातमितित्रयस्त्रभंग्याविन्यस्य ऊर्ध्वपूर्वदाक्षिणोत्तरपश्चि
मचक्रेषुवक्त्रभंग्याः ततोनमः कलाभंग्याः ईशानसर्वविद्यानांनमइति शशिनं
मूर्द्धि ईश्वरः सर्वभूतानामित्युभयदलपूर्वमूर्द्धि ब्रह्मणोधिपतिर्ब्रह्मणोनमइति

मतिष्ठा ११६

द्रष्टां दक्षिणमूर्द्धि शिवोमेनम इतिमरीचिं उत्तरमूर्द्धि ४ सदाशिवोनम इतिज्वालि
नींपश्चिममूर्द्धि ५ एवमीशानस्यकलापंचकं तत्पुरुषायविद्महेनमइतिशांतिंपूर्व
वक्त्रे महादेवायधीमहिनमइविद्यांदक्षिणवक्त्रे तन्नोरुद्रइतिप्रतिष्ठामुत्तरवक्त्रे प्र-
चोदयादितिधृतिंपश्चिमवक्त्रे इतितत्पुरुषकलाश्चतस्रः अघोरेभ्योनमइतितमां
हृदये अथघोरेभ्योनमइतिज्वरमोहांग्रीवायां घोरायनमइतिक्षमांदक्षिणांसे
घोरतरेभ्योनमइतिनिद्रांवामांसे सर्वेभ्योनमइतिमृत्युंनाभौ सर्वशर्वेभ्योनमइति ११६
मायांजठरेनमस्तेअस्तु इतिभयांपृष्ठे रुद्ररूपेभ्योनम इतिजरांउरसि दक्षिणाव

इतिबहुरुपकलाष्टकं वामदेवायनम इतिजरांमरवे ज्येष्ठायनमइति रक्षांलिंगे श्रे-
ष्टायनम इतिरतिंदक्षिणोरौ रुद्रायनम इतियानिंवारो कालायनमइतिकल्यांदक्षि
णजानुनि कलायनमइति संजीवनिंवामजानुनि कंविकरणायनमइतिप्रियांदक्षि
णजंघायां बलविकरणायनमइतिबुद्धिंवामजंघायां बलायनमइति छायां दक्षिण
स्फिजि बलप्रमथनायनमइधात्रीवामास्फिजि सर्वभूतदमनायनमइतिभ्राम
णींकट्यां मनोन्मनायनम इतिमोहिनीदक्षिणपार्श्वे उन्मनायनम इतिज्वरांवा
मपार्श्वे इतित्रयोदशकलाः सद्योजातंप्रपद्यामिनमइतिसिद्धिं दक्षिणपादे स

द्योजातायवैनम इतिऋद्धिं वामपादे भवेनम इतिदीप्तिं दक्षिणपाणौ नातिभवेनम
इतिमेधां नासायां भवस्वमांनम इति कांतिं शिरसि भवेनम इति स्वधां दक्षिणबाहौ
उद्भवायनम इतिप्रभां वामबाहौ इतिसद्योजातकलाष्टकं अत्राविशेषन्त्विति क अंतर
न्यासभावनां कृत्वा स्वस्वमुद्रया शशिन्याद्यष्टचत्वारिंशत्कलान्यासं विधाय विद्या
देवं हंसंसंपाद्य हं सहंसोति हृदयादिन्यासः कार्यः नृसिंहे ॐ नृसिंहउग्र ज्वल ज्वल
प्रज्वल प्रज्वल स्वाहा इतिमंत्रः नारसिंहीयदा स्थाप्यत्वधिवासिनि आगमे कृष्ण
मंवाथसाक्षाद्धापसुंदत्वा एवंन्यासान् विधाय निद्राकलशेनिद्रामावाहयेत् रुमो

ष्टिनंनमस्कृत्यनिद्रामावाहयाम्यहं मोहिनींसर्वभूतानां मनोविभ्रमकारिणीं
विरूपाक्षेशिवेशांते आगच्छत्वंतुमोहिनि वासुदेवाहितेकृष्णे कृष्णांगवि
भूषिते आगच्छसहसाजगत्संसुप्तसंसारमोहिनी सुषुप्तसंहारे देविकुमा
र्येकांतमानसे आमानिश्वासपात्थंवे आगच्छभुवनेश्वरि तमःसत्वरजो
रूपे आगच्छत्वरचारिणि मनोबुद्धिरहंकारसंहारस्त्वंसरस्वति शब्दस्प
र्शंचरूपंचरसोगंधश्चपंचमः आगच्छगृह्यसांनिध्यमोहपाशनिबंधिनि भव
स्योत्पत्तिहेतुस्त्वंयावदाभूतसंप्लवं भवःकल्पांतसंध्यायांवससेत्वंचराचरे

भोगशय्याप्रसुप्तस्य वासुदेवस्य शासने त्वं प्रतिष्ठासि वै देवि मुनियोगिसमु
त्थिते पितृदेवमनुष्याणां सयक्षोरगरक्षसां पशुपक्षिमृगाणां च योगमाया
विवर्द्धिनि वससे सर्वसत्वेषु मातेव हितकारिणि एहि सांनिध्यमूर्तिस्त्वं च सु
भ्योंस्थानगोचरे विशनासापुटे देवि कूटं चोत्कंटिताविश प्रतिभावय मां स
र्वमातृवद्देवि सुंदरी इदमार्घ्यं मया दत्तं पूजेयं प्रतिगृह्यतां उपप्राणादिति मंत्रो
यं तस्याः पूजाविधिस्मृतः निद्राकलशे निद्रां पूजयित्वा लोकपालमातृक्षेत्र
पालभूतेभ्यो बलिं दत्वा स्थाप्य देवं शय्यातः प्राच्यां सर्वतोभद्रमंडले लिंगतोभद्र

मंडले वा गंधाद्यैः पूजयेत् विष्णुश्चेत् द्वादशारेचक्रे तन्मध्ये षट्दलेचक्रे मूलमं

त्रेणदेवंनिवेशयेत् ॐ हुंहृदयायनम इति कर्णिकायांमध्येहृदयंपूजयेत् विष्णा

वेनमइतिशिरः पूर्वपत्रे ब्रह्मण्यायनमइतिशिखायांदक्षिणे ध्रुवायनमइति क

वचं पश्चिमे चक्रिणेनमः फट् अस्त्रमुत्तरे संक्षत्रायेतिआग्नेये विजयायनमः

सावित्रीमीशानदले ज्योतिकरूपायनमोनैर्ऋते चक्रिरूपायनमः पिंगलाख्यंवाय

वे इतिगर्भावरणं आरासुपूर्वादिक्रमेण केशव नारायणमाधव गोविंद विष्णुमधु

सूदन त्रिविक्रम वामन श्रीधर हृषीकेश पद्मनाभ दामोदर इतिद्वादशमूर्तिः पू

जयेत् इतिद्वितीयावरणं प्रागादितः खड्गायनमः गदायैनमः चक्राय० शंखाय०
पद्माय० हलायनम मुसलाय० शार्ङ्गाय० इतितृतीयावरणं एतैरेवमंत्रैर्विन्यस्यगं
धादिनापूजनं अथमूर्तिशाः शैववैष्णवादेन्यत्रच पृथिवीमूर्तयेनमपृथिवी
मूर्त्याधिपतयेशर्वायनम अग्निमूर्तयेनमअग्नि अग्निमूर्त्याधिपतयेपशुपतयेनमः
यजमानमूर्तयेनमः यजमानमूर्त्याधिपतये उग्रायनमः अर्कमूर्तयेनम अर्कमूर्त्या
धिपतयेरुद्रायनमः जलमूर्तयेनमः जलमूर्त्याधिपतयेभवायनमः वायुमूर्तयेनमः
वायुमूर्त्याधिपतये ईशानायनमः इंदुमूर्तयेनमः इन्दुमूर्त्याधिपतये महादेवायनमः

खमूर्तयेनमः खमूर्त्यधिपतये भीमायनमः इत्यष्टौमूर्तीस्तदधिपांश्चसंपूजये
त् अथवैष्णवेपंचैवमूर्तयइति चेत्तदाप्रागादिसंस्थितं पूर्वे पृथिवीमूर्तयेनमः
पृथिवीमूर्त्यधिपतयेवासुदेवायनमः दक्षिणेजलमूर्तयेनमः जलमूर्त्यधिपत
येसंकर्षणायनमः पश्चिमेअग्निमूर्तयेनमः अग्निमूर्त्यधिपतयेप्रद्युम्नायनमः
उत्तरेवायुमूर्तयेनमः वायुमूर्त्यधिपतये अनिरुद्धायनमः मध्ये खमूर्तयेनमः
खमूर्त्यधिपतयेनारायणायनमः शैवेपंचमूर्तिपक्षेमूर्तिपाः ब्रह्माविष्णुरुद्रेश्व
रसदाशिवाः लोकपालास्तुसर्वत्रपूजनीयाः ततोदिव्यवाससादेवमाछाद्य

रुषसूक्तेन स्तुत्वा पुष्पांजलिं दत्वा गंधपुष्पादिभिर्मंडपं वेदिं चावकीर्य देवस्याग्रे-
चतुरस्रं मंडलं कोणेषु स्वस्तिकलांछितं कृत्वा ब्रह्मविष्णुरुद्रेशान् प्रतिदिशं लो-
कपालांस्तदंतराले ऽष्टवस्वेकादशरुद्रा द्वादशादित्या विश्वेदेवसाध्यनासत्यमरुद्ग-
णागंधर्वाप्सरसः पितृगणापुण्यतीर्थानि विष्णावेशस्कंद दुर्गाक्षेत्रपालान् यथाव
काशमावाह्य तत्तन्नामभिरर्चयित्वा प्रतिष्ठाप्यदेवपार्षदेभ्यो नम इत्युक्त्वा यीह

एवं मंडले पूजां निवर्त्य आचार्यः स्वकुंड समीपमागत्या हिरण्यगर्भ इति मंत्रेण यथा

कमंपालाशोडंवराश्वत्थापामार्गसमीसमिदाज्येनतिलैश्चपरिवारदेश्चप्रत्येकं
द्वादशसहस्राणिषट्सहस्राणित्रीण्यष्टसहस्रमष्टशतंवाशांतिपौष्टिके मं
त्रैर्यथाविभागंजुहुयात् ऋत्विक्सहितोवाचार्योजुहुत् हिरण्यगर्भः सम
वर्तताग्रे भूतस्यजातः पतिरेकऽआसीत् सदाधारपृथिवींद्यामुतेमांकस्मै
देवायहविषाविधेम अथशांतिमंत्राः शन्नोवातःपवतां शन्नस्तपतुसू-
र्य्यः शन्नः कनिक्रदद्देवः पर्ज्जन्योऽअभिवर्षतु ३६।१० शन्नऽइन्द्राग्नी भवता
मवोभिः शन्नऽइन्द्रावरुणारातहव्याशन्नऽइन्द्रापूषणाव्वाजसातौशमिन्द्रासोमा

सुविताय शंयोः शन्नोदेवीरभिष्टय ऽआपो भवन्तु पीतये शंय्योरभिस्रवन्तु नः
इति शांतिमंत्राः अथ पौष्टिक मंत्राः पुष्टिनरण्वानाक्षितिर्न पृथिवीगिरिर्न भुज्मः क्षो
दोन शम्भुः अथो नाज्मन्त्सर्गः प्रनक्तः सिन्धुर्न तक्षोदः क इम्वराते जयस्फानो अमी
वाहा वसुवित्पुष्टिवर्द्धनः सुमित्रः सुमनो भव जयस्फानः प्रतरणः सुवीरो व्वीरहा प्र
चराशोमदुर्यान् ४। ३१ शिवोनामासि स्वधितिस्ते पिता नमस्ते ऽअस्तु मामाहिं ठं सिः
निवर्तयाम्यायुषे ऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय त्र्य
म्बकं य्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृता

त् त्र्यम्बकं यजामहे सुगन्धिम्पतिवेदनम् उर्वारुकमिव बन्धनादितो मुक्षीयमा
मुतः ३।६ इतिपौष्टिकमंत्राः अथपूर्वकुण्डे अग्निमीले इतिपलाशसमिधामष्ट स-
हस्रमष्ट शतंवातिलैर्यवैपूर्तियाः जुहुयुः अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्
अग्निनर्छ होतारंरत्नधातवम् इषेत्वेतिमंत्रेण दक्षिणकुंडेमूर्तियाजुहुयुः इषे
त्वोर्ज्जेत्वावायवस्थ देवोवः सविताप्रार्प्ययतुश्रेष्ठतमायकर्म्मणऽ आप्याय-
ध्वमघ्न्याऽ इन्द्रायभागम्प्रजावतीरनमीवाऽ अयक्ष्माामावस्तेनऽ ईशतमघश
ठ० सोध्रुवाऽ अस्मिन्गोपतौस्यातवह्वीर्य्यजमानस्यपशून्पाहि ११ अग्न्या

याहीतिपश्चिमकुंडे मूर्तियाः जुहुयुः अग्नऽआयाहिवीतयेगृणानोहव्यदातयेनि
होतासत्सिबर्हिषि शन्नोदेवीरित्युत्तरे कुंडे मूर्तियाः जुहुयुः शन्नोदेवीरभीष्टयऽ-
आपोभवन्तुपीतये शंय्योरभिस्रवन्तुनः ३६।१२ यदाऽष्टौकुंडानितदाऽउँवौषाडि
तिमंत्रेणाग्नेयकुंडे मूर्त्तियाः जुहुयुः दशप्रणवयुक्तयागायआनैर्ऋतेकुंडेजुहुयुः
जातवेदसे इतिमंत्रेणवायव्यकुंडेजुहुयुः जातवेदसेसुनवामसोममरातीयतोनिद
हातिवेदः सनः पर्षदतिदुर्गाणिविश्वानावेवसिंधुदुरितात्यग्निः नमोब्रह्मणइतिई-
शानकुंडे मूर्तियाः जुहुयुः नमोब्रह्मणेनमोस्त्वग्नयेनमः पृथिव्यैनमः ओषधिभ्यः नमो

वाचेनमोवाचस्पतयेनमोविष्णावेमहतेकरोमि सहस्रांते शतांतेवापूर्णाहुतिं
जुहुयात् तद्यथा आज्येनस्रुवमापूर्य्यपुष्करोपरिअधोमुखंस्रुवंकृत्वातदग्रे
पुष्करंदत्वा वामदक्षिणहस्ताभ्यांसंहताभ्यांशंखवत् संलग्नौतावुभौसमादाय
समपादः समुत्थायोर्द्ध्वकायोनाभ्यातिर्य्यग्विधायस्रुगग्रेदत्तमुष्टिमूर्द्धानंदिवइ
तिमंत्रमुच्चार्य्यवामस्तनांतंस्रुगमूलमानीयानुद्विग्नोयवप्रमाणधारयासमस्त
माज्यंवह्निंप्रापयेत् प्रांचंयथाभवतितथापूर्णाहुतिंदद्यात् आहुतेःसंपातंशांति
कलशेकुंडसमीपस्थेचनयेदिति मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽ

प्रतिष्ठा २३

आजातमग्निम् कविं सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः ३३

८ ततोऽष्टसु पूर्वादिकुंडेष्वष्टानां मूर्तीनां मूर्तिपानां लोकपालानां चैकैकं तन्मंत्रैः पीठे न्यस्याभ्यर्च्य ताभ्यो देवताभ्यः प्रतिदैवतमष्टसहस्रमष्टशतं वा खदिरपालाशौदुंबर प्लक्षवटापामार्गाश्वत्थशमीसमिद्भिर्घृतेन तिलैर्वा मूर्तिमूर्तिपानां होमं कुर्युः सहस्रांते शतांते वा पूर्ववत्पूर्णाहुतिं दद्युः तेषां मंत्राः स्योना पृथिवीति पृथिवीमूर्तिः अघोरेभ्य इति पृथिवीमूर्तिपतेः सर्वस्य स्योना पृथिवी नो भवान्नृक्षरा निवेशनी यच्छा नः शर्म सप्रथाः ३६।१३ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यस्सर्वस

दैव्येभ्यो नमोऽस्तु रुद्ररूपेभ्यः महाँ२॥ऽ इन्द्र इति इन्द्रमूर्तेः महाँ२॥ऽ इन्द्रो यऽ ओजा
सा पर्ज्जन्न्या वृष्टिमाँ२॥ऽ इव स्तोमैर्वत्सस्य वावृधे उपयामगृहीतोसि महेन्द्राय
त्वैष ते योनिर्म्महेन्द्राय त्वा इन्द्रायाहीतीन्द्रमूर्तिपतेः इन्द्रायाहि वृत्रहन्पिबा सोमठं
शतक्रतो गोमद्भिर्ग्रावभिः सुतम् उपयामगृहीतोसीन्द्राय त्वा गोमत ऽ एष ते योनि
रिन्द्राय त्वा गोमते २८।५ अग्निन्दूतमित्यग्निमूर्तेः अग्निन्दूतम्पुरो दधे हव्यवाह
मुप ब्रुवे देवाँ२॥ऽ आसादयादिह २२।१७ यः पशूनामित्यग्निमूर्तिपतेः पशुपतेः यः
पशूनाम्माभेम्मीरोअ्ञ्चनः किञ्चनाममत् १६।४७ अग्न आयाहीत्यग्नेः अग्न ऽ

आयाहि वीतये गृणानो हव्य दातये निहोतासत्सि बर्हिषि आसि . आहिरिवेति य
जमानमूर्तेः आहिरिव भोगैः पर्य्येति बाहुञ्ज्या याहेतिम्परि बाधमानः हस्तघ्नो वि-
श्वा वयुनानि विद्वान्पुमा ६ सम्परिपातु विश्वतः २८।४१ तमिन्द्रमिति यजमानमू
र्त्यधिपन्ते रुग्रस्य तमिन्द्रम्पशवः सचाश्विनोभा सरस्वती दधाना ऽ अभ्यनूषत
हविषा यज्ञ ऽ इन्द्रियैः २०।६९ यमायेति सोमस्तेः यमाय यमसूमथर्व्वक्ष्यै वतोका
६ सम्वत्सराय पर्य्यायिणीम्परिवत्सराया विजातामिदावत्सराया तीत्वरीमिद्वत्सरा
याति ष्कद्वरीम्वत्सराय विजर्ज्जरा ६ सम्वत्सराय पलिक्नीमृभुभ्यो जिनसन्धर्ठ० सा

ज्योक्च्यश्येम्मसूर्यम् २०।१५ उदुत्यमितिसूर्य्यमूर्तेः उदुत्यञ्जातवेदसन्देव

म्वहन्तिकेतवः दृशेविश्वायसूर्य्यम् ३३। ३१ परिनोइतिसूर्य्यमूर्त्यधिपतेः

रुद्रस्य परिनोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्म्मतिरघायोः अवस्थिरामघ

वद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृड ५० असुन्वन्तमितिनिर्ऋतिमूर्तेः अ

सुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य अन्यमस्मदिच्छ-

सातऽइत्यानमोदेवीनिर्ऋतेतुभ्यमस्तु १२। ६२ आपोहिष्ठेतिजलमूर्तेः आपोहि-

१ आवोराजानमित्यनेनापिसूर्य्यमूर्त्यधिपतेरुद्रस्य आवोराजानमध्वरस्यरुद्रंहोतारंसत्ययजंरोदस्योः अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसेकृणुध्वम्

ष्ठा मयोभुवस्तानऽउर्ज्जे दधातन महेरणाय चक्षसे ५० योवः शिवतमोरसस्त-
स्य भाजयतेह नः उशतीरिव मातरः ५१ तस्माऽअरङ्गमामवो यस्य क्षयाय जिन्व
थ आपोजनयथा च नः ५२ शिवो भवेति जल्हमूर्त्यधिपतेर्भवस्य शिवो भवप्र
जाभ्यो मानुषीभ्यस्त्वमङ्गिरः मा द्यावापृथिवीऽअभिशोचीर्म्मान्तरिक्षम्मावृ
नस्पतीन् ४५ इमम्मेइति वरुणस्य इमम्मे वरुणश्रुधी हवमद्या च मृडयत्वा
मवस्युराचके २१।१ वातआवात्विति वायुमूर्तेः वातआवातु भेषजं शंभु मयोभुनो
हृदे प्रणआयूंषि तारिषत् तमीशानमिति वायुमूर्त्यधिपतेरीशानस्य तमी

शानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम् पूषानोयथावेदसाम्
सद्वृधेरक्षितापायुरदब्धः स्वस्तये २५। १८ आनोनियुद्भिरितिवायोः आनोनियु
द्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् वायोऽअस्मिन्त्सवनेमाद
यस्व यूयम्पातः स्वस्तिभिःसदानः २७।२८ वयꣳ सोमेतिसोममूर्तेः वयꣳसो
मव्रतेतवमनस्तनूषुविभ्रतः प्रजावन्तः सचेमहि ३।५६ इन्द्रन्त्वेतिस्यंते
र्महादेवस्य इन्द्रन्त्वं शुभ्रपुरुहन्मन्नवसेयस्यद्विताविधर्त्तरि हस्तायवज्रःप्रति
धायिदर्शतोमहोदिवेसूर्य्यः अभित्यमितिकुबेरस्य अभित्यन्देवꣳसवितारमो

एयोः कविक्रतुमर्च्चामिसत्यसवं रत्नधामभिप्रियम्मतिङ्कविम् ऊर्द्ध्वायस्यामि
तिर्भाऽअदिद्युतत्सवामनिहिरण्यपाणिरमिमीत सुक्रतुः कृपास्वः प्रजाभ्यस्त्वा
प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनुप्राणिहि २५ आदित्यत्नस्येति रवमूर्त्तेः आ
दित्यत्नस्यरेतसो ज्योतिः पश्यन्ति वासरम् परोयदिध्यते दिवा मृगोनभीमइति तत्यते
भीममूर्त्तेः मृगोनभीमः कुचरोगिरिष्ठाः परावतआजगन्थापरस्याः सृकंसंशा
ययाविमिन्द्रतिग्मंविशत्रून्ताढिविमृधोनुदस्व अभित्वा देवतीशानमूर्त्तेः अभित्वा
देवसवितरीशानंवार्य्याणांसदावन्भागमीमहे ततोऽष्टसहस्राष्टशताद्यन्यतम

संख्ययामहाव्याहृतिभिस्तिलयवव्रीहिचवाज्यैः क्रमेणप्रत्येकंजुहुयुः
अथाचार्य्यः स्थाप्यदेवतालिंगकेनमंत्रेणसहस्रसंख्याकमष्टोत्तरशतसंख्या
कंवाघृतेनतलैर्वाहोमंविधायपूर्णाहुतिंदत्वादेवस्यदक्षिणेकरेहोमंनिवेद्य
पूर्वकुंडेघृतस्याष्टाहुतीर्मूलमंत्रेणहुत्वादेवस्यपादौस्पृशेत् मूलमंत्रेणपूर्वो
क्तसंख्यया याम्यकुंडेहस्तेनदधिहुत्वादेवस्यनाभिंस्पृशेत् वारुणकुंडेक्षी
रंहुत्वादेवस्यहृदयंस्पृशेत् सौम्यकुंडेमधुनाष्टाहुतीर्हुत्वादेवस्यमूर्द्धानंस्पृशेत्
वरुणकुंडेघृतादिचतुष्टयंमेलयित्वातेनैवद्रव्यजातेनपूर्णाहुतिंहुत्वादेवस्यसर्वा

गंस्पृशेत् एवंप्रतिमायांन्यासादिकंकृत्वाऽन्यत्प्रतिमाजातंकूर्म्मशिलाब्रह्मशिला
पिंडिकावाहनानिवानीयपरिचारकदेवांश्चतत्तन्मंत्रेणावाह्यसंपूज्यपरिवारदेवांश्चप्र
तिमायाः वामपार्श्वे एतानिसर्वाण्यधिवासयेत् परिवारदेवतायथाविष्णोः चंडप्रचंडा
दिः महादेवस्यतुनंदिमहाकालगणेशभृंगिचंडीमातृवृषस्कन्दयः सूर्य्यस्यदण्डिपिंगला
दयः तानिप्रतिमादीनिमधुघृतेनाभ्यज्य शुद्धवारिणाप्रक्षाल्य स्नानशेषवारिणाऽनेन
कुंभविधानेनप्रतिमावत्स्नापयित्वागंधपुष्पाद्यैः पूजयित्वा वस्त्रेणाच्छाद्य प्रधानप्रतिमापि
ण्डिकायाः स्वमंत्राभ्यांन्यासंकुर्यात् तत्रविष्णुश्चेत् स्थाप्यस्तदा ओं धं टं पं चं भं फं लक्ष्म्यै

नमः एतानिपंचाक्षराणिहृच्छिरः शिखाकवचनेत्रसंज्ञकानिहुंफडंतोऽस्त्रवचनसमुदा

यइति महतिपिंडिकायांपंचाङ्गानिन्यस्यतत्त्वत्रयमूर्तिमूर्तिपांश्चपूर्ववद्विन्यसेत् तदा

भ्यांमंत्राभ्यामधिवासयेत् ॐ ह्रांह्रींश्रींह्रूंक्षः परब्रह्मणेसर्वाधारायनमः ॐह्रीं

श्रींह्रांदिव्यतेजोधारिणिसुभगेनमइतिमंत्रद्वयं इत्यधिवासनम् अथप्रासादोपि

नूतनश्चेत्तस्याप्यस्मिन्नेवावसरेऽधिवासनंक्रियते तद्यथा पंचगव्याद्यानीयप्रा

सादाग्रे एकाशीतिपदमक्षतैः कृत्वातेषुपदेषुसप्तधान्यपुंजान्कृत्वा उपरिवारिपूर्णानि

काशीतिकलशानाहृत्यतत्रतत्र नवनवकान्मध्येमध्यमंकोष्ठंज्ञात्वातेषुनवकलशान्म-

ध्यपूर्वादिक्रमेणाजिघ्रेतिमंत्रेणविन्यसेत् आजिघ्रकलशम्मत्यात्वाविशन्त्विन्द
वः पुनरूर्ज्जानिवर्त्तस्वसानःसहस्रन्धुक्ष्वोरुधारापयस्वतीः पुनर्म्माविशताद्रयिः ८
४३ तत्रसर्वमध्यमकुंभेसोमायवनस्पतयेइतिमंत्रेणशम्युदुंबराश्वत्थचंपकाशो
कपलाशप्लक्षन्यग्रोधकदंबाम्रविल्वार्जुनतरुसंभवानिपल्लवानिनिक्षिपेत् सोमा-
यवनस्पतयेस्वाहामरुतामोजसेस्वाहेन्द्रस्येन्द्रियायस्वाहापृथिविमातर्म्मामाहिर्ठ०-
सीर्म्मोऽअहन्त्वाम् १०।२३ तदनंतरंमध्यनवकुंभेपूर्वकुंभेपद्मकरोचनादूर्वांकुर
दर्भपिंजूलश्वेतपीतसर्षपसितरक्तचंदनजातीकुसुमकुंदमधावर्तदशकंविनिक्षि

पेत ततोयवव्रीहितिलसुवर्णरजतसमुद्रगामिनदीकूलमृत्तिकाभूम्यसंस्पृ
ष्टगोमयमितिसप्तकमाग्नेयकुंभे ३ सहदेवीविष्णुक्रांताभृंगराजमहौषधी
शमीसतावरीगुडूचीश्यामाकमित्यष्टकं याम्यकुंभे ४ ततः कदलीफलपुंगी
फलनालिकेरबिल्वनारिंगमातुलिंगबदरामलकमिति फलाष्टकं नैर्ऋतिकुंभे
५ मंत्रसाधितं पंचगव्यं वारुणकुंभे ६ शम्युदुंबराश्वत्थन्यग्रोधपलाशादिक
षाय पंचकं वायव्यकुंभे ७ शंखपुष्पीसहदेवीबलाशतावरीकुमारीगुडूची
वचाव्याघ्रीतिमूलाष्टकमुत्तरकुंभे ८ वल्मीकादिसप्तमृत्तिका ईशानकुंभे-

निक्षिप्य हिरण्यवर्णां हरिणीमिति मंत्रेण मध्यनवकुंभानभिमंत्रयेत् हिरण्य वर्णां हरिणीं सुवर्णरजतस्रजां चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह शेषकुंभान् गंधोदकपूरितान् मध्यमादिकलशानां समंतात् पूर्वादिक्रमेणाष्टावष्टौ विन्यस्य मूलमंत्रेणाभिमंत्र्य रक्तसूत्रेणावेष्ट्यांतर्बहिरधस्तादूर्ध्वं च प्रासादं पंचगव्येन संप्रोक्ष्य मूर्द्धानं दिव इति वल्मीकमृदा विलिंपयेत् मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ३३।८ ततः समुद्रादूर्मिरिति मंत्रेण समुद्रज्येष्ठा इति मंत्रेण वाई

ऐशानादिक्स्थेनमृत्तिकाकुंभेनप्रासादंसाशिखरंस्नपयेत् समुद्राद्गूर्म्मिर्म्मधुमा
वाँ२ उदारदुपांशुनासममृतत्वमानट घृतस्यनामगुह्यंयदस्तिजिह्वादेवाना
ममृतस्यनाभि १७।८९ यज्ञायज्ञावेतिवायव्यस्थेनपंचकषायकुंभेन यज्ञाय
ज्ञावो२ अग्नयेगिरागिराचदक्षसे प्रप्रवयममृतञ्जातवेदसम्प्रियम्मित्रन्न
शंसिषम् २७।४२ पयःपृथिव्यामितिवारुणेनपञ्चगव्यकुंभेन पयःपृथिव्या
म्पय२ ओषधीषुपयोदिव्यन्तरिक्षेपयोधाः पयस्वतीः प्रदिशःसन्तुमह्यम् १८।
३६ याःफलिनीरितिनैर्ऋतेनफलकुंभेन याःफलिनीर्या२ अफला२ अपुष्पा

याश्च पुष्पिणीः बृहस्पतिप्रसूतास्तानो मुंचंत्व० हंसः १२।९८ हं०सः शु
चिषदिति सौम्यस्य मूलाष्टक कुंभेन हं० सः शुचिषद्वसुरन्तरिक्षसद्धोतावे
दिषदतिथिर्दुरोणसत् नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजा
ऽऋतम्बृहत् १०।२४ विष्णोरराटमिति पूर्वेण कुंभेन विष्णोरराटमसि विष्णोः
श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ५।२१ सो-
मं राजानमित्याग्नेय कुंभेन सोम० राजानमवसेऽग्निमन्वारभामहे आ
दित्यान्विष्णु० सूर्य्यम्ब्रह्माणञ्च बृहस्पतिं स्वाहा ९।२६ विश्वतश्चक्षु

रितियाम्यदिकस्थेनकुंभेन विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरु
तविश्वतस्पात् सम्बाहुभ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः १७
१८ नमोऽस्तुसर्प्पेभ्यइतिमध्यमकुंभेन नमोऽस्तुसर्प्पेभ्योयेकेचपृथिवीम
नु येऽअन्तरिक्षेयेदिवितेभ्यः सर्प्पेभ्योनमः १३।६ इदमापः प्रहतेत्यष्टाभिःपू
र्वादिक्रमेणप्रासादंसशिखरंस्नापयेत् इदमापः प्रवहतावद्यञ्चमलंचयत्
यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरुणम् आपोमातस्मादेनसः पवमानश्च
मुञ्चतु ६।१७ अथैकाशीतिकलशानामभावेगन्धोदकपूरितेनैकेककलशेन

देव्यापेकर्म्मणेशुन्धध्वमिति सम्प्रोक्ष्य सूत्रेणावेष्ट्य स्नापयित्वा देवरूपं प्रासादं
चिंतयित्वा तद्यथा पादौ पादशिलास्तस्य जंघापादोर्ध्वमुच्यते गर्भश्चैवोदरं
ज्ञेयं कटिश्च कटिमेखला १ स्तंभास्तु बाहवो ज्ञेया घंटाजिह्वा प्रकीर्तिता दीपः
प्राणोऽस्य विज्ञेयस्त्वपानो जलनिर्गमः २ ब्रह्मस्थानं तु यत्तस्य तन्नाभिः परिकी
र्तिता हृत्पद्मं पिंडिका प्रोक्ता प्रतिमा जीव[2] उच्यते ३ पादचारस्त्वहंकारो ज्योतिस्त
च्चक्षुरुच्यते तदूर्ध्वं प्रकृतिस्तस्य प्रतिमा पुरुषः स्मृतः ४ तलकुंभास्तथा द्वारं



१ दैव्यापकर्म्मणेशुन्धध्वन्देवयज्यायै यज्ञोश्रषाः पराजभुरिदम्बस्तच्छुन्धामि १।१३
२ पुरुष.

तस्यप्रजनंस्मृतं शुकनासाभवेन्नालागवाक्षःकर्ण उच्यते ५ कपोतपालिः स्क
न्धोस्यग्रीवाचामलसारकः कलशस्तुशिरोज्ञेयंमज्जाक्षिसरसंस्मृतम् ६ मेद
श्चैवसुधांविद्यात्प्रलेपोमांस उच्यते अस्थीनितुशिलास्तस्यस्नायुः कीलादयः
स्मृताः ७ चक्षुषीशिखरास्तस्यध्वजाः केशाः प्रकीर्तिताः एवंपुरुषरूपंतंध्या
त्वाचमनसासुधीः ८ प्रसादंपूजयेत्पश्चात्गंधध्वजादिभिः शुभैः सूत्रेणवेष्ट
येद्देवंवासस्तत्परिकल्पयेत् ९ प्रसादमेवमभ्यर्च्य वाहनंचाग्रमंडपः सर्वदेव
मयंवास्तुपुरुषंसर्वाधारंतस्याधस्ताद्देवंसंचिंत्यपूज्यवक्ष्यमाणमंत्रेणप्रासाद

मधिवासयेत् तद्यथा ॐ ह्रीं सर्वदेवमयाचिंत्यं सर्वरत्नोज्वलाकृते यावच्चंद्र
सूर्यश्च तावदत्रास्थिरोभवइतराधिवास्यापिण्डिकावाहनपरिवारदेवतानांतत्तन्मं
त्रैः प्रत्येकमष्टाविंशतिसंख्याकंहोमंतिलैः हुत्वामूलमंत्रेणचरुणाष्टोत्तरशतं
हुत्वा गंगायमुनागोदावरीसरस्वत्याख्याश्चतस्रोधेनवोमंडपस्यदाक्षिणद्वारे
उदङ्मुखीः स्थापयित्वा संपूज्य नारायणायविद्महेवासुदेवायधीमहितन्नोविष्णुः
प्रचोदयादिति विष्णुगायत्र्यादुग्ध्वातत्क्षीरेण तत्पुरुषायविद्महेमहादेवाय
धीमहितन्नोरुद्रः प्रचोदयादिति रुद्रगायत्र्याचरुंश्रपयित्वा तथैवदेवाय-

निवेद्य मंडपस्योत्तरभागे द्वादश ब्राह्मणान् विष्णुभक्तान् भोजयित्वा विष्णुर्मे प्रीयतामिति वदेत् अथाचार्याय धेनुं दद्यात् ततः ऋत्विगादिभ्यो वस्त्रांगुलीयकादिदक्षिणां दत्वा रात्रौ जागरणं गीतवादित्रादिनानोत्साहेन कुर्यात् इति प्रासादाधिवासनम्

अत्र ज्येष्ठमध्यमकनिष्ठानां सप्तरात्रं पंचरात्रं त्रिरात्रमेकरात्रं सद्यो वा यथावत्यं तमधिवासनं कुर्यात् अत्र श्लोकाः अनेकदिननिर्वर्त्ये अधिवासनकर्मणि होमान् षोडश सहस्राणि विदधीरन् पृथक् पृथक् तस्मिन्नेकाहनिर्वर्त्ये कुर्यादष्टोत्तरं शतं प्राग्वत्पूर्णाहुतिं दद्यात्स कुञ्जपतिद्वारयाः यद्वा प्रतिदि

नं कर्म होममष्टोत्तरं शतं देशिको मूर्तिपैः कुर्याद्याक स्कार्यं समाप्यते संध्या-
सुतिसृषु देयो बलिर्मंत्रैर्यथोदितैः आचार्ये दक्षिणां देयाऋत्विग्भ्यश्च स्वशक्तितः
भोजनं च तथान्येभ्यो देयं वित्तानुसारतः विनाधिवासनं यज्ञः कृतोपि न फलप्र
दः इति सर्वदेवप्रासादाधिवासनाविधिः अथाधिवासनानंतरं प्रातराचार्यः
स्नात्वा नैत्यकं कर्म निर्वर्त्य यागमंडपमेत्य मूर्तिपान्वितो द्वारस्थान् देवान् पूर्ववत्संपूज्य
पश्चिमद्वारेण मंडपं प्रविश्य वास्तुमंडलस्थान् देवान् सामान्यतः संपूज्य कुण्डे वा
स्तोष्पते इति मंत्रेणाष्टोत्तरशतहमनं कुर्यात् वास्तोष्पते प्रतिजानीह्य स्मान्स्वा

वेशोऽअनमीवोभवानः यत्वेमहे प्रतितन्नो जुषस्वशन्नो भवद्विपदेशंचतुष्पदे
अथदेवमंत्रेणमूलमंत्रेणमूर्त्तिमूर्त्तिपतिलोकपालमंत्रैश्च प्रतिदैवमष्टशतंहुत्वा
पूर्णाहुत्यंतंकर्म्मकृत्वादिग्बलिंदत्वादेवसमीपमागत्य यथासंभवंसुवर्णादिकंदत्वा
देशायचात्मानंनिवेद्यप्रणमेत् यत्रतुस्वयंभूर्देवः प्रागेवाप्रतिष्ठितः प्रासादश्च
नूतनस्तत्रापितदुत्तरभागेमंडपंकृत्वापूर्वेद्युः पुण्याहवाचननांदीश्राद्धादिमंडप
स्थापनपूजनादिऋत्विग्वरणादिकंकुर्यात् तत्राचार्योमंडपेसर्वतोभद्रादितत्त
द्देवतामंडलंकृत्वावास्तुदेवतापूजनाग्निप्रतिष्ठाग्रहपूजनाज्यभागोन्तरग्रहहोम

शिरव्यादिवास्तुपीठदेवताहोमाएकाशीतिकलशस्थापनादिकृत्वातैः प्रासादंपूर्वोक्तप्र
कारेणस्नापयित्वायजमानमभिषिंच्यप्रासादमुत्सृजेदित्येतावानेवविधिः प्रकृतम
नुसरामः पंडपादुत्तरतः पूर्वकल्पितैः शांतिकलशादिजलैः सपरिकरंयजमान
मभिषिंचेयुः ततआचार्य्यमूर्त्तिपब्राह्मणस्थपत्यादीन्परितोष्य प्रासादोत्सर्गं
कुर्यात् तद्यथा मासपक्षाद्युल्लिख्य इमंशिलेष्टकादार्वादिनिर्मितंबलभीजगती
प्राकारपरिवारगोपुरपरिवारदेवतादेवतालयसंयुतंतद्देवतालोककामः कुलद्वया
नुग्रहायामुकदेवताप्रीतये ऽहमुत्सृजामीतिकुशयवजलानिक्षिपत्वातेवनत्वाप्रा

ह्मणान्भोजयेत् इति अथाचार्यो मूर्तिधरैः सार्द्धं अधिवासितां देवताधारभू-
तां कूर्मशिलां ब्रह्मशिलां पिण्डिकां च आतारमिति मंत्रेण गृहीत्वा शांतिघोषेण प्र-
दक्षिणं प्रासादमानीय अस्त्राय फडिति अस्त्रमंत्रेण शततोयेन चाविप्रोत्सारणा-
र्थं च पुष्पोदकधारया प्रदक्षिणं प्रासादगर्भमभ्युक्ष्य दर्भैर्महारौ ॥ इतिसमुलि-
रव्येत् महारौ ॥ इन्द्रे वज्रहस्तः षोडशी शर्म्म यच्छतु हन्तु पाप्मानं योऽस्मान्द्वेष्टि उ-
पयामगृहीतोसि महेन्द्राय त्वैष ते योनिर्म्महेन्द्राय त्वा २६।१० ततो अस्त्राय फडिति

१ आतारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः २०।५०

मंत्रपूतेन वारिणा सर्वतः प्रासादं संप्रोक्ष्य द्वारमध्यं चोक्तसूत्रसंपातेन संसाध्य यवे
न यवार्द्धेन वा ईशानीमुत्तरां वा दिशमाश्रित्य स्नातां पूजितां प्रणवेन कूर्म्मशिलां पंचरत्नो
परि निधाय तच्छुभ्रे सौवर्णकूर्म्मं द्वारसन्मुखमुपधाय तदुपरि रत्नानि विन्यस्य षड्विंशद्भ
र्त्तयुतां पंचचत्वारिंशद्भर्त्तयुतां वा ब्रह्मशिलामधिवासितां निदध्यात् ॐ नमो व्यापिनि
स्थिरे चले ध्रुवे ॐ श्रीलं स्वाहेति मंत्रेण गंधादिना यथाशक्ति संपूज्य प्रार्थयेत् त्वमेव
परमा शक्तिस्त्वमेवासनधारिका शिवाज्ञया त्वया देवि स्थातव्यमिह सर्वदा ततः स्थै
र्यं सर्वगतं स्मरन् सकलमध्वानं तद्रूपं चिंतयेत् ॐ तत्त्वात्मनेनमः पादाध्वनेनमः वर्णा

ध्वनेनमः मंत्राध्वनेनमः भुवनाध्वनेनमः कलाध्वनेनमः ततःपुण्याहवाचनंकृत्वामू
लमंत्रेणाष्टोत्तरशतंहुत्वाषड्विंशत्सु पंचचत्वारिंशत्सुवाब्रह्मशिलागर्तेषुप्रागादिषुवा
स्त्वावरणात्ससुवर्णनदक्षिणहस्तेनरत्नन्यासं वक्ष्यमाणमंत्रैः कुर्यात् अथाचार्यस्था
पनेश्वरश्वरहितेब्रह्मशिलोपरि भागेसश्वभ्रांपिंडिकांपूर्वपश्चिमाभिमुखे प्रासादे-
सौम्यप्रणालांदक्षिणोत्तराननेपूर्वप्रणालांपिंडिकां ध्रुवसूक्तेननिधायदेवपत्नीलिं
गकमंत्रैः पिंडिकामभिमंत्रयेत् ततस्तत्रैवयस्यदेवस्ययस्यांदिशिआयतनंतत्रावा

१ पूर्वपश्चिमानने इत्यपिपाठः

हन पूजनेविदध्यात् तद्यथा इंद्रांबिकाविष्णुनामैंद्र्यां अग्नेराग्नेय्यां भूतानांमातृग
णानामंकस्यचवायव्यां भद्रकालीपितृनिर्ऋतीनांनैर्ऋत्यां वरुणवीथिसरितांप्रती
च्यां वायुदुर्गाफणींद्रगजास्यानांमारुत्यां यक्षोउमास्कंदानांसौम्यां ब्रह्मणोदक्षिण
स्यां शिवस्येशान्यां द्वारस्यदक्षिणेवामेक्रमाद्वैश्रवणश्रियोः तत्राविष्णुश्चेत्स्थाप्य
स्तदाश्रीश्चते श्रीरसिश्रीनिधनं श्रीपत्यादीन्मंत्रान्पठेत् यदारुद्रस्तदा आपोहिष्ठा
गौरीर्मिमाय जातवेदसेइत्यादीन् ब्रह्माचेत्स्थाप्यस्तदागायत्र्यादीन् सूर्यश्चेत्स्था
व्यस्तदा उषस्तच्चित्रमस्तु अदर्शीत्यादीन्मंत्रानुच्चारयेत् तद्यथा श्रीश्चतेलक्ष्मी-

श्रीपत्न्या वहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् इष्णन्निषाणामुम्म ऽइषा-
णसर्वलोकम्म ऽइषाण ३१।२२ आपोहिष्ठामयो भुवस्तान ऽऊर्ज्जे दधातनमहे
रणायचक्षसे ५० भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियोयोनः प्र
चोदयात् २ उषस्तच्चित्रमाभरास्मभ्यंवाजिनीवति येनतोकञ्चतनयञ्चधा
मे ३३ ततस्तत्वन्यासंकुर्यात् तद्यथा आत्मतत्वायनमः आत्मतत्वाधिपत्यैक्रि
याशक्त्यैनमः विद्यातत्वायनमः विद्यातत्वाधिपत्यैज्ञानशक्त्यैनमः शिवतत्वायन
मः शिवतत्वाधिपत्यैइच्छाशक्त्यैनमः प्रतितत्वंपूर्तिपलोकमालाम्विन्यसेत् अथ

आधारशक्त्यैनमः इतिपिंडिकायांन्यासंकृत्वाततोऽनंतासनादिवन्हितत्वांतांपीठ
पूजांनिर्वर्त्य आयंदशक्तीर्नवप्रागादिमध्यांतांनाममंत्रैर्विन्यस्याभ्यर्च्यतदुपरिपिं
डिकांशक्तिरूपिणींसर्वाभरणभूषितांदेवसंयोगगामिनींमनसाध्यात्वादेवभार्यालिं
गकेनविन्यस्यदेवींप्रार्थयेत् सर्वदेवमयोशानित्रैलोक्याल्हादकारिणी त्वांप्रतिष्ठा
पयाम्यत्रमंदिरेविश्वनिर्मिते १ यावच्चंद्रश्चसूर्यश्चयावदेवावसुंधरा तावत्त्वंदेवि
देवेशिमंदिरेऽस्मिन्स्थिराभव २ पुत्रानायुष्मतोलक्ष्मीमवलामजरान्नृणाम् अ
भयंसर्वभूतेभ्यः कर्तुंनित्यंविधेहिभो ३ विजयंभूपतेःसर्वलोकानांक्षेममेवच

सुभिक्षसर्वकालीनंकुरुदेविनमोनमइतितांप्रार्थ्य तस्यांमातृकान्यासंकुर्यात्
तद्यथा प्रणवंश्वभ्रेत द्वात्वेषोडशस्वरान् तेषांपरितोव्यंजनानि अथपिंडि
काश्वभ्रेपुरक्षादिन्यासंपूर्वादिमध्यांतंसव्यक्रमेणकुर्यात् तद्यथा बाह्यपरिधौ
मवव्रीहिनिष्पावप्रियंगुतिलमाषनीवारशालिसिद्धार्थकान् वज्रमौक्तिकवैडू-
र्य्यशंखस्फाटिकपुष्परागचंद्रकांतेन्द्रनीलपद्मरागान् २ मनःशिलाहरीतालांज
नश्यामांजनकाशीरसौराष्ट्रीरोचनगैरिकपारदान् ३ हिरण्यरजतताम्रायसत्र-

१ कांवळणी २ सोनामाणि गंधक

पुसीसकंकांस्यारकूटतीक्ष्णलोहानि ४ एतन्नवकवर्चतुष्टयस्यासंभवे शालिस्थु-
क्ति हरितालसुवर्णानिन्यासंविधौ प्रतिद्रव्यं योज्यानीति नारदोक्तं अथ मत्स्यपु
राणोक्तरत्नादिन्यासं कुर्यात् बाह्यपरिधिमवधिं कृत्वाऽभ्यंतरतोऽभ्यंतरतः प्र
त्येकं प्रागादीशानांतं तद्यथा वज्रमौक्तिकवैडूर्यशंखस्फटिकपुष्परागेन्द्रनी
लमहानीलान् १ हरीतालमनःशिलाऽभ्रकनीलांजनसौराष्ट्रीकासीसस्वर्णमा-
क्षिकगैरिकान् २ गोधूमयवतिलमुद्गनीवारश्यामकसर्षपव्रीहीन् ३ सुवर्णरजतता
म्रत्रपुसीसकधौषरीतिकान् ४ श्वेतचंदनरक्तचंदनागरुकार्ज्जुनोशीरवैष्णवीस

हृदेवीलक्ष्मणाचेति ५ रत्नानामभावेवज्रः धातूनामभावेहरितालं लोहानाम
भावेसुवर्णं वीजानामभावेयवान् औषधीनामभावेसहदेवैर्मंत्रैः इन्द्रस्तुसहसादी
प्तः सर्वदेवाधिपोमहान् वज्रहस्तोमहासत्वस्तस्मैनित्यंनमोनमः १ आग्नेयःपुरुषो
रक्तः सर्वदेवमयोव्ययः धूमकेतुरजोध्यक्षस्तस्मैनित्यंनमोनमः २ यमश्चोत्पलव
र्णाभः किरीटीदंडधृक्सदा लोकसाक्षीविशुद्धात्मातस्मैनि० ३ नैर्ऋतस्तुपुमान्
पुण्यः सर्वरक्षोधिपोमहान् खड्गहस्तोमहासत्वस्तस्मैनि० ४ वरुणःसर्वलोकेषुपु
रुषोनिम्नगाधिपः पाशहस्तोमहाबाहुःतस्मैनि० ५ वायुश्चसर्ववर्गोयंसर्वगंधव-

हः शुभः पुरुषोध्वजहस्तश्च तस्मैनि० ६ गौरोपस्तु पुमान्सौम्यः सर्वौषधिसमन्वितः
नक्षत्राणांपतिः सोमस्तस्मैनित्यं० ७ ईशानः पुरुषः शुक्लः सर्वदेवाधिपोमहान् शू-
लहस्तोविरूपाक्षस्तस्मैनि० ८ पद्मपाणिश्चतुर्मूर्तिर्वेदाभ्यासः पितामहः यज्ञाध्यक्ष
श्चतुर्वक्त्रस्तस्मैनि० ९ योसावनंतरूपेणब्रह्मांडं सचराचरम् पुष्पवद्धारयन्मूर्ध्नितस्मै-
नित्यंनमोनमः एवंन्यस्तानांरत्नादीनांवक्ष्यमाणदिक्पालमंत्रैर्नवभिरष्टभिर्वाआलंभ
नंपूर्वादिक्रमेणकुर्यात् तद्यथा त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमि
न्द्रम् ह्वयामिशक्रम्पुरुहूतमिन्द्रं स्वस्तिनोमघवाधात्विन्द्रः २०।५० इतिन्द्रम् अग्निर्मू

तमित्यग्निं अग्निन्दूतम्पुरोदधे हव्यवाहमुपब्रुवे देवाँ२ऽआसादयादिह २२।१७ य
मायत्वेति यमं यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे देवस्त्वा सविता मध्वानक्तु पृ
थिव्याः सꣳस्पृशस्पाहि अर्चिरसि शोचिरसि तपोसि ३१।११ एषतेनिर्ऋत इति
निर्ऋतिम् एषते निर्ऋते भागस्तञ्जुषस्व स्वाहाग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वा
हा यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चा
त्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्यऽउत्तरासद्भ्यः स्वाहा
सोमनेत्रेभ्यो देवेभ्यऽउपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा ९।३५ पंचनद्य इति वरुणम्

पञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ३४।११

१४० तव वायेति वायुम् तव वायवृतस्पते त्वष्टुर्जामातरद्भुत अवांस्या वृणीमहे

२७।३४ वयं सोमेति सोमम् वयं सोम व्रते तव मनस्तनूषु बिभ्रतः प्रजावन्तः

सचेमहि ३।५६ तमीशानमितीशानम् तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्व

मवसे हूमहे वयम् पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये २५।१८

ब्रह्म यज्ञानमिति ब्रह्माणम् ब्रह्म यज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः १४०

स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः १३।३ नमोस्तु सर्पेभ्य

इतिचानंतरम् नमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु येअन्तरिक्षेयेदिवितेभ्यःसर्प्पे
भ्योनमः १३।८ एवंरत्नादिन्यासानुक्त्वा पृथिवीमेकुंभसह्रनाग्निसौवर्णानिद्रा
रोन्मुखानिपारदंचतस्मिन्मध्यस्थभेनिधायगुग्गुलरसेनरत्नादिकंस्थिरीकृत्यमधु
पायसेनश्वभ्रमवलिप्यशङ्कलवन्धेनाच्छाद्यकूर्मीनिकषचूर्णेनावृत्यफडितिअस्त्रमंत्रे
णसंरक्ष्यमनोजूतीरितिमंत्रेणप्रतिमासादभिसेचनंकुर्यात् मनोजूतिर्जुषतामाज्यस्य
बृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञं३समिमंदधातु विश्वेदेवासइहमादयन्ता
मों३प्रतिष्ठ ततइन्द्रस्तुसहस्रादीप्तइत्यादिभिर्मंत्रैः पूर्वोक्तैर्दिक्पालमंत्रैर्लोकपाले

भ्यो बलिं दत्वाचामेत् एवं पिंडीकां प्रतिष्ठाप्य रत्नन्यासं कृत्वा ततः प्रासादाद् बहिः सम-
तान् पंचगव्येन प्रादक्षिण्येन भुवं संप्रोक्ष्य दर्भपिंजूलैः संमार्ज्य पूर्वादिष्वष्टदिक्षु वालुकया
ऽष्टौ स्थंडिलानि चतुरस्राणि वितस्तिप्रमाणानि कृत्वा तेषु स्थंडिलेषु अष्टौ कलशान् वारि
पूर्णान् पुष्पफलपत्रपंचपल्लवादियुतान् सूत्रवेष्टितान् पूर्वाद्यष्टाक्षरेण पञ्चादिशः उदजय
न्ताः उज्जेषर्ठं सवितापडक्षरेण पङ्क्तसुनुदजयन्तानुज्जेषम्भक्तः सप्ता ग्राम्यान्यमृनुदजय
न्तानुज्जेषम्बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषमित्रो नवाक्षरेण ३२। ९ अ
ष्टाक्षरेण स्थंडिलानामीशानमोगोविन्दस्याभिमंत्र्य स्थंडिलेषु पंचभूतसंस्कृतेषु अष्टोत्तर

सहस्रं तदर्द्धमष्टशतं वा देवस्य मूलमंत्रेण संस्कृतमग्निं प्रणीय पलाशसमिधामाज्याक्तमू
लाग्राणां प्रतिस्थंडिलं देवस्य मूलमंत्रेण हुत्वा ततआज्येन ॐ नारायणाय विद्महे वासु
देवाय धीमहि तन्नो विष्णुः प्रचोदयादिति विष्णुगायत्र्या अष्टोत्तरशतमष्टाविंशतिं वा हु
त्वा आचार्यस्ताम्रपात्रेऽष्टदिक्स्थेभ्यः कुंभेभ्यस्तोयमुपसंहृत्य मूलमंत्रेण शतवार
मभिमंत्र्य प्रतिमासमीपं गत्वा सर्वतीर्थमयमिदं जलमिति ध्यायन् देवमूर्द्धि क्षिपेत् हुंफ
डित्यनेन नरसिंहमंत्रेण देवस्य दिग्बंधनं कृत्वा मूर्तिपैर्युक्तः शंखतूर्यादिनिनादेन देवं प्रा
र्थयेत् ॐ प्रबुध्यस्व महाभाग देवदेव जगत्पते मेघश्याम गदापाणे प्रफुल्लकमलेक्षण १

प्रवुद्धस्त्वधरानंतवास्कृदेवनमोस्तुतेइति ततस्तोयक्षीरकुशाग्रतिलतंदुलयवसिद्धार्थ
कपुष्पाणिशंखेकृत्वाशंखमुद्रयादेवायार्घंदत्वा उत्तिष्ठब्रह्मणस्पतेइतिमंत्रेणदेवमुत्थाप्य
रथेतिष्ठन्निति मंत्रेणरथमारोपयेत् उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे उपप्रयंतुमरुतःसु
दानवइंद्रप्राशूर्भवासचा २४५६ रथेतिष्ठन्नयतिवाजिनःपुरोयत्रयत्रकामयते सुषा
रथिः अभीशूनाम्महिमानम्पनायतमनः पश्चादनुयच्छंतिरश्मयः २४१४२ ततोदेवस्यपुर
तआचार्यःपृष्ठतोयजमानःपुत्रकलत्रबंधुयुक्तः पार्श्वयोर्मूर्तिपास्तुर्यघोषेणस्वस्तिनइ
त्यादिशांतिपाठेनमंगलघोषेणचग्रामस्यप्रदक्षिणंमेत्यप्रासादादिपरिभ्रम्यप्रासादमानी

यरथादवतार्यभद्रासनेद्वारसंमुखेदेवंकृत्वा अर्घ्यंदत्वाप्रासादंप्रवेशयेत् द्वारेणद्वारबं-
धेनद्वारदेशेनतद्विना द्वारबंधोशिखाशून्यंतदूर्ध्वेनाप्यतद्युते १ वर्त्तयेद्वारसंस्पर्शाद्वारेणै-
वमहेश्वरं देवंगृहसमारंभेकोणेवापिप्रवेशयेत् २ अयमेवविधिर्ज्ञेयोव्यक्तलिंगेचसर्व-
था गृहप्रवेशनंद्वारलोकैरपिसमीहितम् ३ अपद्वारप्रवेशेनविदुर्गोत्रक्षयंतथा कर्तुश्चै-
वविनाशांनिमतःशांतिंसमाचरेत् ४ जीर्णादिदोषदुष्टस्यापद्वारेणैवनिर्गतं एतल्लिंगवि-
षयम् अथविष्ण्वाद्यर्चादारुरूपंद्वारेणैव देवमतोदेवाङ्गानिप्रासादंप्रवेश्यापिंडिकायाःस-
मीपेभद्रपीठेद्वारसन्मुखंदेवंनिधायार्घ्यमधुपर्काभ्यांदेवमभ्यर्च्यदेवस्यत्वेतिमंत्रेणपिंडिका

माल्यैश्चपूजयेत् एतस्मिन्नवसरे एव रत्नं वा सौवर्ण्यं तो भवति न पूर्वमित्यपि केचित् ततो
मूर्तिपरिमाणेन चान्वितान्याचार्यो देवं पिंडिकायां स्थापयेत् तद्यथा सुमुहूर्ते पुण्यलग्ने
शुभग्रहनवांशे पुण्याहमस्त्वित्युक्त्वा स्वयं परमात्मानं सृष्टिसंहारकारकमजमष्टविधैश्व
र्य्ययुक्तं जगदीश्वरं भावयन् सौवर्णपद्मां पिंडिकायाः श्वभ्रे निधाय ॐ प्रधानपुरुषाय यावद्या
वच्चंद्रदिवाकरौ तावत्त्वमनया शक्त्या युक्तो ऽत्रैव स्थिरो भवेत्युक्त्वा ध्रुवासि ध्रुवोयं यजमा
नोस्मिन् ध्रुवा द्यौरिति सूक्तेन देवमवक्रमदिङ्मूढं यथा स्यात्तथा ऽव्यग्रमुत्तराभिमुखमीशानाभिमुखं वापिं
डिकायाः श्वभ्रे निधाय ततः स्थिरो भव शाश्वतो भवेत्युक्त्वा पिंडिकालिंगयोरंतराले वालुका

सीसकादिभिर्हृदंपूरयित्वापुनर्नचालयेत् ततोविश्वतश्चक्षुरुतोविश्वतोमुखोविश्वतोबा
हुरुतविश्वतस्पात् सम्बाहुभ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवएकः १७।१८ इ
तिमंत्रेणदेवस्यमस्तकेहृदयेवादक्षिणकरेणस्पृष्ट्वाप्राणप्रतिष्ठांकुर्यात् तद्यथा अस्यश्री
प्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुरुद्राऋषयः ऋग्यजुःसामानिछन्दांसि क्रियामयवपुःप्रा
णाख्योदेवता आंबीजं क्रौंशक्तिः प्राणप्रतिष्ठायांविनियोगः ब्रह्मविष्णुरुद्रऋषिभ्योनमः
शिरसि ऋग्यजुःसामछंदोभ्योनमोमुखे प्राणाख्यदेवतायैनमोहृदि आंबीजायनमो
गुह्ये क्रौंशक्त्यैनमःपादयोः ओंकंखंगंघंङं आंपृथिव्यप्तेजोवाय्वाकाशात्मने आंहृदया

यनमः ॐचंछंजंझंञंइंशब्दस्पर्शरूपरसगंधात्मनेईशिरसेस्वाहा ॐटंठंडंढंणंउंश्रोत्रत्व
क्चक्षुर्जिह्वाघ्राणात्मनेऊंशिखायैवषट् ॐतंथंदंधंनंएंवाक्पाणिपादपायूपस्थात्मने
ऐंकवचायहुं ॐपंफंबंभंमंॐवचनदानविहरणोत्सर्गानंदात्मने औंनेत्रत्रयायवौषट्
ॐयंरंलंशंषंसंहंलंक्षं अंमनोबुद्ध्यहंकारचित्तात्मने अः अस्त्रायफट् एवमात्मनिदेवेचकृ
त्वादेवंस्पृष्ट्वा जपेत् ॐआंह्रींक्रौंयंरंलंवंशंषंसंहंसः देवस्यप्राणइहप्राणाः ॐआंह्रीं
हंसः देवस्यजीवइहस्थितः ॐआंह्रींहंसः देवस्यसर्वेन्द्रियाणि ॐआंह्रींहंसः देवस्यवा
ङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाइहागत्यस्वस्तयेसुखेनचिरंतिष्ठंतुस्वाहा अर्घादिदद्यात्

दत्वाजपेत् अस्यैप्राणाः प्रतिष्ठंतु अस्यैप्राणाःक्षरंतुच अस्यैदेवत्वमर्चायैमामहेतिचकस्य
न प्रणवेनसन्निरुद्ध्यसजीवंध्यात्वा ध्रुवाद्यौरितित्यृचंजप्त्वा कर्णेगायत्रींदेवमंत्रंचजप्त्वा
पुरुषसूक्तेनोपस्थाय पादनाभिशिरः स्पृष्ट्वाइहैवैधीतिनिर्जपेत् ततः कृतांस्वागतं देवदे
वेशमद्भाग्यात्त्वमिहागतः प्राकृतंत्वमदृष्ट्वामांबालवत्परिपालय धर्मार्थकामसिद्ध्यर्थंस्थिरो
भवशिवायनः सान्निध्यंतुमहादेवस्वार्चायांपरिकल्पय यावच्चंद्रावनीसूर्यास्तिष्ठंत्यप्रतिघा
तिनः तावत्त्वयात्रदेवेशस्थेयंभक्तानुकंपया भगवन्देवदेवेशत्वंपितासर्वदेहिनां येनरूपे
णभगवन्त्वयाव्याप्तंचराचरम् तेनरूपेणदेवेशस्वार्चायांसन्निधीभवेतिनमेत् परमसद्भा

ब्रह्माणंब्रह्मणः सूर्यस्यसौरं अन्येषांदेवानांतल्लिंगान् मंत्रान्जपित्वा सव्याहृतिंसप्रण-
वांसशिरस्कांचगायत्रींप्रणवसूक्तंचजपित्वासान्निध्यंचकुर्यात् ॐनमस्तेव्यक्तभागायसर्वो-
षपरमात्मने ज्ञानविज्ञानरूपायब्रह्मतेजोनुशायिने सुभातिक्ष्मागवेगायपुरुषायमहात्म-
ने अव्यक्तायपुराणायविष्णोःसन्निहितोभव आगच्छदेवदेवेशत्वमानासर्वतोहृतो त्वं-
याव्याप्तमिदंसर्वंजगत्स्थावरजंगमम् त्वमिंद्रःपावकश्चैवयमोनिरृतिरेवच वरुणोमारु-
तःसोमईशानःप्रभुरव्ययः येनरूपेणभगवंस्त्वयाव्याप्तंचराचरम् तेनरूपेणदेवेशममचा-
र्याःसन्निधौभव सर्वमंत्रादिसंयुक्तोलोकानुग्रहकाम्यया अर्चायांमहादेवसन्निधिं

मान्सदा सूर्याचंद्रमसौयावद् यावत्तिष्ठतिमेदिनी तावत्त्वयात्रदेवेशस्थातव्यंस्वेच्छयाप्रभो
यावच्चंद्रोयमःसूर्यस्तिष्ठत्यप्रतिघाततः तावदत्रतुदेवेशस्थेयंसर्वानुकंपयेति ततःस्थापित-
देवंप्रधानंकृत्वा तस्यपरितोन्यान्देवांस्तत्परिवारत्वेनस्मरेत् तद्यथा नंदिमहाकालवृषभृंगि
किरीटिस्कंदोमाविनायकविष्णुरुद्रभगवतींद्राग्नियमनिर्ऋतिवरुणवायुसोमेशानाप्सरोग-
णगंधर्वगुह्यकविद्याधरादीन् यदाब्रह्मास्थाप्यतेतदाविष्ण्वादयःपरिवारदेवता यदाविष्णु
स्तदाब्रह्मादयःपरिवारदेवताः यदारुद्रस्तदाब्रह्माविष्ण्वादयःपरिवारदेवताः एवंविनायक
दुर्गादीनामपिपरिवारकल्पनम् ततःकुंडेष्वंगानिजुहुयात् तद्यथापूर्वकुंडेहृदयमंत्रेण

ज्येनविंशत्याहुतीः १ दक्षिणकुंडेशिरोमंत्रेण २ पश्चिमेशिखामंत्रेण ३ उत्तरेकवचमंत्रे-
ण ४ आचार्यकुंडेनेत्रमंत्रेण ५ ततःपूर्वकुंडेऽस्त्रमंत्रेणेतिषडंगमंत्राणांहोमोऽधिकांगानि
येषांतानिपूर्वकुंडेहोतव्यानि ततःप्रतिमायास्तु चतुरावयवेविन्यसेदथमंत्रेणशतंहुत्वाप्रति-
माहृदयेजीवभूतंविन्यसेत् अन्याधिकानियानितान्याग्नेयकुंडेपूर्वकुंडेवा तथाप्रणवाद्यैर्ना
ममंत्रैर्देवशक्तिरप्यत्रकुंडेषुहुत्वातत्तत्स्थानेनिवेशनाय प्रणवाद्यानाममंत्राःस्वाहांताहोमेनमों
तान्यासकर्माणिभवंतीतिसर्वत्रज्ञातव्यम् एवंदेवंप्रतिष्ठाप्यप्रार्थयेत् लोकानुग्रहहेत्वर्थंस्थि
रीभवस्कन्दासन सान्निध्यंहिसदादेवमत्यहंपरिवर्तय १ माभून्पूजाविरोधोस्मिन्यजमा

नःसमृद्ध्यताम् संपालयंस्तथाराष्ट्रंसर्वोपद्रववर्जितम् २ क्षेमेणगृह्णीष्वमतुलांरूपरवमक्षय-
मस्तुताम् इतिसंप्रार्थ्यविधिनादेवंसांगंसमर्चयेत् ततोबहिर्निर्गत्यद्वारपालादीन्निजनाम
मंत्रैःस्थापयेत् विष्णुश्चेच्चंडप्रचंडादीन् शिवश्चेन्नंदिमहाकालादीन् सूर्यश्चेद्दंडिपिंगला-
दीन् ततोध्यानेनप्रासादंपुरुषाकृतिंस्थापयेत् अथप्रासादस्यरूपम् प्रासादस्यप्रवक्ष्या
मिरूपंध्यानेयथाभवेत् पादौपादशिलास्तस्यजंघापादोर्ध्वउच्यते गर्भश्चैवोदरंज्ञेयंकटिस्थ
कटिमेखला स्तंभास्तुबाहवोज्ञेयाघंटाजिह्वाप्रकीर्तिताः दीपःप्राणोस्यविज्ञेयस्त्वपानोज-
लनिर्गमः ब्रह्मस्थानंतुयत्तस्यतन्नाभिःपरिकीर्तिता हृत्पद्मापिंडिकाज्ञेयाप्रतिमाजीवउच्य

ते पादचारस्त्वहंकारोज्योतिस्तच्चक्षुरुच्यते तदूर्ध्वंप्रकृतिस्तस्यप्रतिमापुरुषःस्मृतः ज-
लकुंभास्तथाद्वारंतस्यप्रजननंस्मृतम् शुकनासाभवेन्नासागवाक्षःकर्णउच्यते कपोलपालिः
स्कंधोस्यग्रीवाचामलसारिकाः कलशस्तुशिरोज्ञेयःमज्जाक्षिप्रसंहितम् मेदश्चैवसुधाविद्या
त्प्रलेपोमांसउच्यते अस्थीनितुशिलास्तस्यस्नायुःकीलादयःस्मृताः चक्षूंषिचशिरास्तस्यध्व-
जाःकेशाःप्रकीर्तिताः एवंपुरुषरूपंतुध्यात्वाचमनसासुधीः प्रासादंपूजयेत्पश्चाद्गंधपुष्पा-
दिभिःशुभैः सूत्रेणवेष्टयेद्देवंवासस्तत्परिकल्पयेत् प्रासादेदेवमभ्यर्च्यवाहनंचाग्रमंडपे स्था-
पयेत्पुनरिंद्रादीन्निजदिक्षुचवेश्मसु दिक्पुरायासमुद्दिष्टादेवस्यात्परिकल्पयेत् आयायत

नानि कथ्यंतेविपरीतान्हिकर्तुस्स्याद्दशमावहा तत्रैंद्र्यांद्रांविकाविष्णोराग्नेयीकृष्णवर्त्मनः
अवाचीभूतमातॄणांगणानामंतकस्यच भद्रकाल्याःपितॄणांचनैर्ऋतेनैर्ऋतीमता वारुणीं
भोधिसरितांप्रतीच्यायतनस्यादिक् वायुर्दुर्गाफणींद्राणांगजास्यास्यचमारुती यक्षोमास्कंद
सोमानांसौम्यैशानीशिवस्यतु द्वारस्यदक्षिणेवामेक्रमाद्दैश्वरगाश्रियोः मध्यादिकपद्मगर्भ
स्यसर्वजंतुसुखावहं उक्तस्यायतनाद्देवोदशाफलफलप्रदाः शतंपंचाशदथवाविंशत्यष्टोत्तरंक्र
मात् नाममंत्रैरथैतेषांउत्तरादिक्रमाद्धुनेत् गर्भगेहंपुनःप्राप्यविस्तारविधिनार्चयेत् अर्घ्या
द्यैरुपचारैस्तुप्रभूतैरर्चयेत्सुधीः अथाशिवस्यप्रधानभूतस्यावाहनादिपूजा यथा यस्यासिंहार

थेत्युक्त्वाव्याघ्राभूतास्तथोरगाः ऋषयोलोकपालाश्चदेवस्कंदस्तथावृषः प्रियागणामातर
श्चसोमोविष्णुःपितामहः नागायक्षाःसगंधर्वायेचादिव्यानभश्चराः तमहंत्र्यक्षमीशानं
शिवंरुद्रमुमापतिम् आवाहयामिसगणंसपत्नीकंवृषध्वजमिति आगच्छभगवन्रुद्रा
नुग्रहायाशिवोभव शाश्वतोभवपूजांमेगृहाणत्वंनमोनमः ॐस्वागतमनुस्वागतंभगवते
नमोनमः सोमायसगणायसपरिवारायप्रतिगृण्हातुभगवान्मंत्रपूतमिदमर्घ्यंपाद्यं इदमा
चमनीयंचयदासनंब्रह्मणाभिहितंनमोनमःस्वाहेति आगच्छेत्यादिकामंत्राःसोमायपद
वर्जिताः सर्वत्रसाधारणाः एवंसंपूज्यप्रणम्यब्रह्मघोषेणस्नापयेत पंचामृतेनतत्तन्मंत्रपूर्वं

कम् तद्यथा दधिक्राव्णोतिदध्ना आप्यायस्वेतिक्षीरेण घृतवतीतिघृतेन मधु
वाताइतिमधुना आयंगौरितिशर्करया एषुपंचसुप्रतिस्नानेनगंधोदकेनक्षालयेत् ओ
षधीःप्रतिमोदध्वमितिपुष्पोदकेन गंधद्वारामितिगंधोदकेन शांतिकलशेनसंस्नवकल
शैश्चस्नापयित्वा गंधाद्यैरुपचारैः पूजयित्वादेवंध्यायन्जपेत् यज्जाग्रतोदूरमुदैति १ त-
तोविराडजायत १ सहस्रशीर्षापुरुषः १ अभित्वाशूरनोनुमः १ पुरुषएवेदं १ त्रिपादू
र्ध्वं १ येनेदं १ नत्वावांअन्यः १ इत्येतान्मंत्रान्सर्वान्प्रतिमास्पृक्चतुःकृत्वोजपेत् प्रतिप
र्यायमंत्रैर्देवस्यपादौनाभिंवक्षःशिरश्चालभेततोलिंगमंत्रैःप्रार्थयेत् भगवन्देवदेवेशाध

मेकामार्थमोऽस्मद विद्याविद्येश्वरैरुद्रैर्गणैर्लोकपालकैः देवदानवगंधर्वैर्यक्षैश्च कि
न्नरैःसह अस्मिन्लिंगेमहादेवसर्वदावसवैप्रभो पुंसामनुग्रहार्थाय पृथिव्यांस्वेच्छयाप्र
भो परावरेणभावेनस्थातव्यंसर्वदात्वया सर्वविघ्नहरःपुंसांसर्वदुःखहरःसदा सर्वदा
यजमानस्य इच्छासंपत्करोभव नमस्तेसर्वधर्मायसंतोषविजितात्मने ज्ञानविज्ञानतृप्ताय
ब्रह्मतेजोभिशालिने नमस्तेशब्ददेहायपुरुषायमहात्मने स्थापकस्यमूर्तिपानांशिल्पिनां
चविभोसदा ग्रामदेशनृपाणांचशांतिर्भवतुसर्वदा पूजकाराधकानांचभक्तानांभक्तवत्सल
सर्वेषांचजगन्नाथइच्छासिद्धिप्रदोभव चंद्रार्कौयावत्पर्यंतंलिंगेऽस्मिन्परमेश्वर स्थातव्यमुम

यासार्द्धंसर्वलोकानुकंपया यावच्चंद्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनी तावत्त्वयात्रदेवेशस्था
तव्यंस्वछयाप्रभो अथविष्णोस्तु सहस्रशीर्षेत्यादिभिर्मंत्रैःषोडशोपचारैःपूजनंकृत्वावैदि
कैःसूक्तैःपौराणिकैःमंत्रैःस्तोत्रैर्वास्तुत्वाक्षमस्वेत्युक्त्वादेवंप्रार्थयेत् तत्रशिवस्य ज्ञानतोऽज्ञा
नतोवापिभगवन्यत्कृतंमया तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादान्महेश्वर अथविष्णोःप्रार्थनं
ज्ञानतोऽज्ञानतोवापियावान्विधिरनुष्ठितः ससर्वस्त्वत्प्रसादेनसम्यग्भवतांमम ज्ञानतोऽज्ञान
तोवापिशास्त्रोक्तंनकृतंहियत् तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादादधोक्षज अथकर्तृनामयुक्तंदे १५०
वस्यनामविदध्यात् तद्यथा नारायणस्यामुष्यस्वामीअमुकनारायणोवा अथशिवस्यामु

केश्वरः अथभानोरमुकादित्यः देवीनामामुकेश्वरी गणपतेरमुकाविनायकइत्यादि
अथ नैमित्तिकेदोषप्रायश्चित्तमुच्यते स्थाप्यमानदेवप्रतिमालिंगंवायांदिशमुपाश्रयेत्तद्दिगी
शमंत्रेणशमीसमिधांपालाशानांवातिलैर्वाष्टोत्तरसंख्याकेपूर्णेनहोमंकुर्यात् तत्रइंद्रायें-
द्रे० अग्निंदूतं० आयंगौः० अस्कन्नं० इमंमे० प्राणाशिशः० अभित्यंदेवं आवोराजानमिति
मंत्रायथासंख्येन आचार्यदक्षिणाश्चक्रमेण गजोमेषोमाहिषोजः शक्तिर्मुक्ताफलंतथा व
स्त्रयुग्माऽविकाधेनुर्वृषभश्चविधानतः तदभावेस्वर्णप्रतिकृतयोवारजतोवावृषभएवोनिल-
नत्स्थाप्यमानेदेवेशब्दोत्थानेवकेश्चांतेस्फुरितेवामूलमंत्रेणाष्टोत्तरशतमघोरेणवाशान्त्यर्थंहु

त्वासदाप्रतिष्ठाहुती जुहोति ॐ शिवायशिरोभवस्वाहा ॐ शिवायप्रमेयोभवस्वाहा ॐ
शिवायदानादिबाधोभवस्वाहा ॐ शिवायानित्योभवस्वाहा ॐ शिवायसर्वगोभवस्वाहा ॐ
शिवायाविनाशोभवस्वाहा ॐ शिवायनमोभवस्वाहेति अथसर्वशांत्यर्थं अपरमंत्रोत्तरश
तमघोरेणहुत्वास्विष्टकृतंहुत्वा सर्वप्रायश्चित्तहोमंविधायपूर्वादिदिक्षुइंद्रादिभ्योबलिदानपू
र्वकंपूर्णाहुतिंजुहुयात् तद्यथापूर्वे ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमि
न्द्रम् ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः १ इंद्रायसांगायसपरिवारा
यसायुधायशक्तिकाराय एतंसदीपंदधिमाषभक्तबलिंसमर्प्पयामि भोइंद्रदिशंरक्ष बलिं

भस्स अस्य यजमानस्य सकुटुंबस्य आयुः कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता वरदो भव पूर्वादिशि व
लिं समर्प्य आग्नेय्यां ओं त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो ऽवयासिसीष्ठाः यजिष्ठो वह्नितमः
शोशुचानो विश्वा द्वेषा ᳪ सि प्रमुमुग्ध्यस्मत् २ अग्नये सांगाय० दक्षिणे यमाय त्वा मखाय त्वा
सूर्यस्य त्वा तपसे देवस्त्वा सविता मध्वानक्तु पृथिव्याः स ᳪ स्पृशस्पाहि अर्चिरसि शोचिरसि तपो
सि ३ यमाय सांगाय० नैर्ऋत्यां असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य अन्य
मस्मदिच्छ सा त ऽइत्या नमो देवि निर्ऋते तुभ्यमस्तु ४ निर्ऋतये सांगाय० पश्चिमे तत्त्वा यामि ब्र
ह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोध्युरुश ᳪ स मा न ऽआयुः

प्रमोषीः ५ वरुणायसांगाय० वायव्ये आनोनियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरु-
पयाहियज्ञम् वायोऽअस्मिन्त्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ६ वायवेसांगाय०
उत्तरे वयꣳ सोमव्रतेतवमनस्तनूषुबिभ्रतः प्रजावंतःसचेमहि ७ कुबेरायसांगाय० ईशा-
न्याम् ॐ तमीशानंजगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् पूषानोयथावेदसामसद्वृधे
रक्षितापायुरदब्धःस्वस्तये० ईशानायसांगाय० ईशानपूर्वयोर्मध्ये अस्मेरुद्रामेहनापर्वता-
सोवृत्रहत्येभरहूतौसजोषाः सꣳसनेस्तुवतेधायिपज्रइन्द्रज्येष्ठाऽअस्माꣳऽअवंतुदेवाः ९
निर्ऋतिपश्चिमयोर्मध्ये स्योनापृथिवीनोभवानृक्षरानिवेशनी यच्छानःशर्मसप्रथाः १० अनं

तायसांगाय॰ इतिदशदिक्पालबलिः अथनवग्रहबलिः ॐग्रहाऽऊर्जाहृतयोव्यतोविप्राय मतिम् तेषांनिशिप्रियाणामुवोह्यमिषमूर्ज्यं समग्रभम् ग्रहेभ्यःसांगेभ्यःसपरि॰ भोग्रहाः दिशांरक्षनबलिंभक्षयेत् अस्ययजमानस्य सकुटुंबस्य आयुःकर्तारः॰ इतिग्रहबलिः अथदु र्गाबलिः ॐअंबेऽअंबिकेऽअंबालिकेनमानयतिकश्चन ससस्त्यश्वकः सुभद्रिकांकाम्पीलवासि नीम् दुर्गायैसांगायै॰ ममयजमानस्यसकुटुंबस्य आयुःकर्त्री क्षेमकर्त्री शांतिकर्त्री तुष्टिकर्त्री पुष्टिकर्त्री वरदाभव॰ इतिदुर्गाबलिः अथक्षेत्रपालबलिं दधिमाषसिंदूरकज्जलदीपद्रव्य सहितपात्रेनिधाय कृतस्यकर्मणःसांगतासिद्ध्यर्थं क्षेत्रपालपूजनमहंकरिष्ये इतिसंकल्प्य

गंधादिभिर्वक्ष्यमाणमंत्रेणक्षेत्रपालंपूजयेत् ॐ नहिस्पृशमविदन्नन्यमस्माद्वैश्वानरात्पुर-
एतारमग्नेः एमेनमःवृधन्नमृताःअमर्त्यंवैश्वानरंक्षेत्रजित्यायदेवाः ॐ क्षेत्रपालायशाकिनी-
डाकिनीभूतप्रेतवेतालपिशाचसहितायइमंबलिंसमर्पयामि भोक्षेत्रपालदिशोरक्षबलिंभक्ष
ममयजमानस्य० द्यौःशांतिरितिमंत्रंपठेत् अनपेक्षमाणेनद्विब्राह्मणेनबलिंगृहीत्वाचतुः
ष्पथेक्षिपेत् ततोयजमानस्वस्थपृष्ठतोगत्वाजलंक्षिपेत् ॐ हिंकारायस्वाहा हिंकृतायस्वाहा
क्रंदतेस्वाहा वक्रंदायस्वाहा प्रोथतेस्वाहा प्रप्रोथायस्वाहा गन्धायस्वाहा घ्रातायस्वाहा
निविष्टायस्वाहोपविष्टायस्वाहा संदितायस्वाहा वल्गतेस्वाहा सीनायस्वाहा शयानायस्वाहा स

पतेस्वाहा जायतेस्वाहा कुंजतेस्वाहा प्रबुद्धायस्वाहा विजृंभमाणायस्वाहा विचृंतायस्वाहा स
ᳪहनायस्वाहोपस्थितायस्वाहा वनायस्वाहा प्रायनायस्वाहा ततोयजमानः पादौप्रक्षाल्याच
म्यपूर्णपात्रदानंकुर्यात् अद्यकृतैतदमुकहोमकर्मणि कृताकृतावेक्षणरूपअमुककर्मप्रतिष्ठा
र्थमिदंपूर्णपात्रंप्रजापतिदैवतंअमुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणेदक्षिणांतुभ्यमहं
संप्रददे ब्रह्मग्रंथिविमोकः अथपूर्णाहुतिः देशकालौस्मृत्वा कृतस्यकर्मणः सांगतासिद्ध्य
र्थंवसोर्धारासमन्वितंपूर्णाहुतिहोममहंकरिष्ये इतिसंकल्प्य चतुर्गृहीतमाज्यंद्वादशगृहीतं
वा वस्त्रंनारिकेलपुष्पचंदनमालादियुतंतदुपरिनिधाय पूर्णाहुतिंयजमानेनसहान्वारब्धआसी

योऽजुहुयात् तत्रमंत्रः ओंसमुद्रादूर्मिर्मधुमाँ उदारदुपाँ शुनासममृतत्वमानट् घृतस्यनामगु
ह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः १ वयंनामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमो
भिः उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत् २ चत्वारिशृंगात्रयोऽअस्यपादाद्वेशीर्षे
सप्तहस्तासोऽअस्य त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँऽआविवेश ३ त्रिधाहितंपणिभिर्गु
ह्यमानंगविदेवासोघृतमन्वविंदन् इंद्रएकं सूर्यएकंजजानवेनादेकंस्वधयानिष्टतक्षुः ४ ए
ताऽअर्षंतिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे घृतस्यधाराऽअभिचाकशीमि हिरण्य
योवेतसोमध्यऽआसाम् ५ सम्यक्स्रवंतिसरितोनधेना अन्तर्हृदामनसापूयमानाः एतेऽअ

र्यन्त्यूर्मयोघृतस्यमृगाऽइवक्षिपणोरीषमाणाः ६ सिंधोरिवप्राध्वनेशूघनासोवातप्रमियःपतयं-
न्तियह्वाः घृतस्यधाराऽअरुषोनवाजीकाष्ठाभिन्दन्नूर्मिभिःपिन्वमानाः ७ अभिप्रवंतसमनेवयो-
षाः कल्याण्यस्मयमानासोऽअग्निम् ८ घृतस्यधारासमिधोनसंततानुषाणोहर्यतिजातवेदाः
कन्याइववहतुमेतवाउअंज्यंजानाऽअभिचाकशीमि ९ यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधारा
ऽअभितत्पवंते अभ्यर्षतसुष्टुतिंगव्यमाजिमस्मासुभद्राद्रविणानिधत्त इमंयज्ञंनयतदेवता-
नोघृतस्यधारामधुमत्पवंते धामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यन्तरायुषि अपामनीकेस-
मिथेयऽआभृतस्तमश्याममधुमंतंतऽऊर्मिम् मूर्द्धानंदिवोऽअरतिंपृथिव्यावैश्वानरमृतऽआजातम

ग्निम् कविꣳसंम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः पुनस्त्वादित्यारुद्रावसवः
समिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः घृतेनत्वंतन्वंवर्द्धयस्वसत्याःसंतुयजमानस्यकामाः सप्त
तेअग्नेनस्वाहा एकांऋचंपठेत् अथप्रातर्हुतेअहुतेवायतरथाकामयेतसोऽअस्याअनिरता
येकुंभ्येदर्भोपहंति पूर्णादर्विपरापतसुपूर्णापुनरापत वस्नेवविक्रीणावहाइषमूर्ज्जꣳश
तक्रतोस्वाहा इतिस्वाहाकारेणाग्नौप्रक्षिपेत् इदमग्नयेवैश्वानरायवसुरुद्रादित्येभ्यः शत·
क्रतवे सप्तवतेअग्नये अद्भ्यश्चनमम वाजश्चेत्यादिसप्तविंशतिकंडिकाःपठेत् समास्त्वाअनुवा
कंपठेत् विष्णोर्नुकंषट्ऋचःपठेत् ओंसप्ततेअग्नेसमिधःसप्तजिह्वाःसप्तऋषयःसप्तधामानि

याणि सप्तहोत्राःसप्तधात्वायजंतिसप्तयोनीरापृणस्वघृतेनस्वाहाः शुक्रज्योतिश्चचित्रज्योतिश्च
सत्यज्योतिश्चज्योतिष्मांश्च शुक्रश्चऋतपाश्चात्यंहाः ईदृङ्चान्यादृङ्चसदृङ्चप्रतिसदृङ्चमितः
श्चसम्मितश्चसभराः ऋतश्चसत्यश्चध्रुवश्चधरुणश्चधर्त्ताचविधर्त्ताचविधारयः ऋतजिच्चसत्यजि
च्चसेनजिच्चसुषेणश्च अन्तिमित्रश्चदूरेअमित्रश्चगणः ईदृक्षासएतादृक्षासऊषुणःसदृक्षासः
प्रतिसदृक्षास एतनमितासश्चसम्मितासोनो अद्यसभरसोमरुतोयज्ञेअस्मिन् स्वतवांश्चप्र
घासीच शान्तपनश्चगृहमेधीचक्रीडीचशाकीचोज्जेषी इन्द्रंदैवीर्विशोमरुतोनुवर्त्मानोभवन्य
थेन्द्रंदैवीर्विशोमरुतोनुवर्त्मानोभवन् एवमिमंयजमानम् दैवीश्चविशोमानुषीश्चानुवर्त्मानोभव

तु इमꣳस्तनमूर्जस्वंतंधयायांप्रपीनमग्नेशरीरस्यमध्येउत्संजुषस्वमधुमंतसर्वत्समुद्रियꣳसद
नमाविशस्वघृतंमिमिक्षे॰ हव्यं सहैवयज्ञः उवाचनयतायावैबिभेमीति कानेनयतेत्यमितऽएव·
मापरिस्तृणीयुरिति तस्मादेतदग्निमभितःपरिस्तृणंति तृष्णायावैबिभेमीति कानेतृप्तिरितिब्रा
ह्मणस्यैवतृप्तिमनुतृप्येयमितितस्मात्सꣳस्थितेयज्ञेब्राह्मणेनर्पयतितवैब्रूयाद्यज्ञमेवैनंतर्पयति य
त्कर्मणोत्यरीरिचं यद्वान्यूनमिहाकरम् अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टꣳसुहुतंकरोतुस्वाहा
श्रद्धांमेधांयशःप्रज्ञांविद्यांपुष्टिंश्रियंबलम् तेजआयुष्यमारोग्यंदेहिमेहव्यवाहन इतिपूर्णा
हुतिः अथआयुष्करणम् आयुषंजमदग्नेरितिललाटे कश्यपस्यआयुषमितिग्रीवायां यद्दे

वेषुत्र्यायुषमितिबाहुमूले तन्नोऽअस्तुत्र्यायुषमितिहृदि ततः संस्रवप्राशनम् पवित्राभ्यांमा
र्जनम् पवित्रप्रणीताविमोकः ततः पात्रेणजलमादायाग्नेःपरिभ्रामयित्वा तज्जलेनयजमान
मूर्द्धनिकुशैरभिषेकंकुर्यात् ॐस्त्रामित्रियानआपओषधयः संतु शांतिरस्तु पुष्टिरस्तु यच्छ्रे
यस्तदस्तु यत्पापंतत्प्रणश्यतु द्विपदेभ्यश्चतुष्पदेभ्यः शांतिर्भवतु ॐदुर्मित्रियास्तस्मैसंतु
योऽस्मान्द्वेष्टि यंचवयंद्विष्मः इतिमंत्रेणप्रणीतांन्युब्जीकृत्य इत्यैशान्यां पूर्णपात्रदानामि
त्युपयमनम् अथबर्हिर्होमः देवागातुविदोगातुंवित्वागातुमितमनसस्पत इमंदेवयज्ञं
स्वाहावातेधाःस्वाहा अथईशानकोणेबलिंदत्वाऽग्न्याग्नेयांचतुष्कंकृत्वा तन्मध्येऽष्टदलंपद्मंस्व

स्तिकं वा विधाय तदुपरि भद्रासने सितवस्त्रोत्तरं विधाय तत्र यजमानं सपत्नीपुत्रबांधवादियुत-
मुपवेश्य होमोत्सर्गं कृत्वा प्रासादोत्सर्गं कुर्यात् तिथ्यादिकमुच्चार्य अमं प्रासादं पक्वेष्टकादिपा
षाणकाष्ठचूर्णादिनिर्मितं शिवं विष्णुं वा उद्दिश्य त्वमहमुत्सृजे इति अत्रैव करिष्यमाणनैत्यिकपू-
जोपकरणानि ताम्रकलशसाधारशंखधूपदीपनैवेद्यपात्रपुष्पकरंडतांबूलकरंडकशय्यातूलिको
पधानघंटाछत्रचामरव्यजनपरिधानवस्त्रालंकारवितानादिकं देवोद्देशेनोत्सृजेत् अथ मूर्तिपा
दिसंयुत आचार्यः स्त्रीपुत्रबांधवादिसहितस्य यजमानस्य वक्ष्यमाणप्रकारेणाभिषेकं कुर्यात् त
द्यथा यजमानं प्राङ्मुखमुपवेश्य स्वयमाचार्य उदङ्मुखस्तिष्ठन् देवस्नपनावशिष्टोदककुंभं मंडपस्थ

शांतिकलशोदकंचतैजसपात्रेसमादाय अंकुरितसप्तधान्यकुशदूर्वाम्रादिपंचपल्लवैः सोदकैः चतुर्वेदोद्भवैरभिषेकमंत्रैः स्थाप्यदेवतासूक्तैः पौराणिकैश्चाभिषेकगीतवाद्यादिपुरःसरंकुर्यात् अभिषेकेपत्नीवामभागेस्थापनीया अथाभिषेकमंत्राः समुद्रज्येष्ठाइतिचतसृणांवशिष्ठऋषिः आपोदेवतात्रिष्टुप्छंदः अभिषेकेविनियोगः समुद्रज्येष्ठा० आयंतामितितिसृणांसप्तर्षयः आपोदेवता अनुष्टुप्छंदः अभिषेकेविनियोगः आयंतामिंद्र० इमाआपइतितिसृणांसप्तर्षयः आपोदेवताअनुष्टुप्छंदः अभिषेकेविनियोगः इमाआपःशिवतमा० यद्देवादेवहेडनमित्यनुवाकः पवमानःस्वर्जनइत्यनुवाकः पौरुषंसूक्तंश्रीसूक्तंरौद्रंसूक्तं गाणपत्यग्रहमंत्राः लोकेशाः

आः त्र्यंबकंयजामहे० अघोरमंत्रः स्थाप्यदेवतासूक्तंछंदोगायत्र्यादीनि अथर्वसाम अन्यान्यपि
नानाशाखोद्भवानि अभिषेकसूक्तानिपाठ्यानि आपोहिष्ठामयोभुवस्तानऊर्जेदधातन महेर-
णायचक्षसे योवःशिवतमोरसस्तस्यभाजयतेहनः उशतीरिवमातरः तस्माअरंगमामवोयस्य
क्षयायजिन्वथ आपोजनयथाचनः १ स्तोकानामिन्दुंप्रतिशूरऽइंद्रोवृषायमाणोवृषभस्तुरा
षाड् घृतंप्रुषामनसामोदमानाःस्वाहादेवअमृतामादयंताम् आयात्विंद्रोवसऊपनइहस्तुतः
सधमादस्तुशूरः वावृधानस्तविषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्यात् आनऽइंद्रोदूरादान
ऽआसादभिष्टिकृदवसेयासदुग्रः ओजिष्ठेभिर्नृपतिर्वज्रबाहुःसंगेसमत्सुतुर्वणिःपृतन्यून् आ

नइन्द्रोहरिभिर्य्यात्वच्छार्वाचीनोवसेराधसेच तिष्ठातिवज्रीमघवाविरप्शीमंयज्ञमनुनोवाजसा-
तौ त्रातारमिन्द्रमवितारमिन्द्रमवितारमिन्द्रᳩहवेहवेसुहवᳩशूरमिन्द्रं ह्वयामिशक्रंपुरुहूत-
मिन्द्रᳩस्वस्तिनोमघवाधात्विन्द्रः इमंमेवरुणश्रुधीहवमद्याचमृडयत्वामवस्युराचके तत्त्वाया-
मिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः अहेडमानोवरुणेहबोध्युरुशᳩसमान-
ऽआयुःप्रमोषीः त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः यजिष्ठोवह्नित-
मःशोशुचानोविश्वाद्वेषाᳩसिप्रमुमुग्ध्यस्मत सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोअस्याऽउषसो
व्युष्टौ ऽअवयक्ष्वणोवरुणᳩरराणोवीहिमृडीकᳩसुहवोनऽएधि उदुत्तमंवरुणपाशमस्म-

स्मधमाविमध्यम ७ अथाय अथाहृयमादित्यव्रतवानागसो ऽ अदितस्याम भगप्रणेतर्भगस
त्यराधो भगेमांधियमुदवाददन्नः भगप्रनोजनयगोभिरश्वैर्भगप्रनृभिर्नृवंतः स्याम इदमापः प्र
वहतावद्यंच मलंचयत् यच्चाभिदुद्रोहानृतंयच्चशेपे ऽभिरुणं आपोमातस्मादेनसः पवमानः
श्चमुंचतु समुद्रायस्वाहा धातायस्वाहा सरिरायस्वा० वातायस्वाहेत्यादिवैदिकमंत्रैरभिषिच्य पौराणिकैः
मंत्रैरभिषिंचेत् तद्यथा सुरास्त्वामभिषिंचतु ब्रह्माविष्णुमहेश्वराः वासुदेवोजगन्नाथस्तथासं
कर्षणोविभुः प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्त
था वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः एतेत्वामभिषिंचंतुदिक्पालाः सपरिच्छदाः आदि-

त्यश्चन्द्रमाभौमोबुधोजीवसितार्कजाः ग्रहास्त्वामभिषिंचन्तुराहुकेतुश्चतर्पिताः अथोंकारवष
ट्कारौसावित्रीविधयस्त्रयः ऋचायजूंषिसामानिछंदांस्याथर्वणानिच चत्वारःसलिलावेदाः
सरहस्याःसविस्तराः पुराणमितिहासंचखिलान्युपखिलानिच अंगानिचैवोपांगानिव्याख्या
तानिपांतुते पृथिवीवायुराकाशआपोज्योतिश्चपंचमः इंद्रियाणिमनोबुद्धिस्तथासत्वंरजस्तं
म व्यानोदानौसमानश्चप्राणोपानश्चपंचमः वायवःसप्तचैवान्येयैर्व्याप्तमिदंजगत् मरीचिरंगि
रोत्रिश्चपुलस्त्यःपुलहःक्रतुः भृगुर्वसिष्ठोभगवान्पांतुतेत्वांमहर्षयः स्वायंभुवाद्यामनवश्चतुर्दश
दिशोदशम् नरनारायणौदेवावभिषिंचंतुसर्वदा रुद्राश्चैकादशप्रोक्ताआदित्याद्वादशैवतु अ

येप्यान्यानानुकीर्त्तिताःतोतास्त्वामभिषिंचंतुसलिलैरमृतोपमैः प्रभासंचप्रयागंचनैमिषंपुष्कराणि-
च गंगातीर्थंकुरुक्षेत्रंश्रीकंठगौतमाश्रमम् रामन्हदंविनशनंरामतीर्थंतथैवच गंगाद्वारंकनखलं
सोमोवैयत्रयोत्थितः कपालमोचनंतीर्थंजंबूमार्गंचविश्रुतम् स्फक्रयाबिंदुविख्यातंतथाकनकपिं
गलम् दशाश्वमेधिकंचैवपुण्याश्रमविभूषितम् बदरींचैवविख्यातांनरनारायणाश्रमम् विख्या
तंफल्गुतीर्थंचतीर्थंचंद्रवटंतथा गोकामुखंपुण्यतमंगंगासागरमेवच मगधेषुतपोदश्चगंगोद्भे
दश्चविश्रुतः तीर्थान्येतानिपुण्यानिसेवितानिमहर्षिभिः त्वांप्लावयंतुसलिलैःकीर्त्तिताऽकीर्त्ति
तानिवै स्फकरंयोगमार्गंचश्वेतद्वीपंतथैवच ब्रह्मतीर्थंरामतीर्थंवाजिमेधदशोपमम् धारासंपा

तसंयुक्तागंगाकिल्बिषनाशिनी गंगावैकुंठकेदारस्सूकरोद्भेदनंपरम् तत्पापमोचनंतीर्थंपुनंत्वे
तानिकिल्बिषान् धर्मार्थकामविषयोयशःप्राप्तिःशमोदमः अष्टांगयोगोपहरोयमोनियमएव
च कालोनयःसन्मतिश्चक्रोधोमोहःक्षमाधृतिः विद्युतोभ्राण्योषधयःप्रमादोन्मादविग्रहाः य
क्षाःपिशाचागंधर्वाःकिन्नराःसिद्धचारणाः नक्तंचराःकेसरिणोदंष्ट्रिणःप्रियविग्रहाः लंबोदर
श्चबालिनःपिंगाक्षाविश्वरूपिणः मरुतःसहपर्जन्याःकलात्रुटिलवक्षणाः नक्षत्राणिग्रहा
श्चैवऋतवःशिशिरादयः मासांतोरात्रयश्चैवपक्षायोगास्तथैवच आमोदश्चप्रमोदश्चप्रहर्षः
शोकएवच मन्युरस्तन्यरस्तपःसत्यंसिद्धिर्वृद्धिःश्रुतिर्धृतिः रुद्राणीभद्रकालीचभद्रप्रधातथा

रुणा भासीचकालिकाचैवशांडिलीचेतिविश्रुता आर्याकुहूःसिनीवालीभीमाचित्रवतीरतिः
एकाननाचकूष्मांडीदेवीकात्यायनीचया लोहित्यायनमित्राचदेवकन्याचयास्मृताः गोनंदादेवपत्न्य
श्चत्वांरक्षंतुसबांधवम् नानाभरणवेषाश्चनानारूपांकिताननाः नानादेशविचारिण्योनानाशास्त्रो
पशोभिताः मुखमंडीबिडालीचपूतनागंधपूतना शीतवातोत्थवेतालीरेवतीग्रहसंज्ञिताः पि·
तामहमुखोद्भूतारौद्रारुद्रांगसंभवा कुमारस्कंदजाश्चैवज्वराश्चवैष्णवादयः क्रोधनाक्रोधजाःकू
राःस्करविग्रहकारिणः लंबोदराजघनिनःपिंगाक्षाविश्वरूपिणः वामनाविकटाःकुब्जाःकरालाल
नमूर्द्धजाः सहस्रशतशश्चान्येत्वांसिंचंतुशुभांबुभिः महागणपतिर्नंदीमहाकालोमहाबलः ग्रा

मणीश्चैवगोपालः शृंगीरिड्गिणेश्वरः देवश्चवामदेवश्च घंटाकर्णः करंधमः श्वेतमोदकपालीचजृं
भकः शत्रुतापनः मज्जनोन्मज्जनौचोभौसंतापनविलापनौ निजघासोधसश्चैवस्थूलकर्णः प्रशोष
णः उल्कामालिंधमधमोज्वालाजिह्वः प्रतर्दमः संघट्टनः संकुचनः काष्ठभूतः शिवंकरः कुंभांडः कुं
भमूर्द्धिरोचनोवैकृतोग्रहः अनिकेतः सुरारिघ्नः शिवश्चाशिवएवच क्षेमकः पिशिताशीचसुरारि
र्हरिलोचनः भीमकीग्राहकश्चैवतथैवोग्रामहाग्रहाः उपग्रहार्यकश्चैवतथास्कंदग्रहोपरः चप
लोलोमवेतालस्तमसः समहाकपिः हृदयोद्धलिनश्चैव कुंडासिन्धुः कणप्रियः हरिश्मश्रुगुरुत्मंनो
मनोमारुतरंहसः पार्वत्यारोषसंभूतासहस्राणिशतानिच शक्तिमंतोद्युतिमंतोब्राह्मण्यः स

त्यसंगराः सर्वकामोपहर्त्तारोहंतारोद्विषतांमृधे एतेगणानांपतयः अभिषिंचंतुसर्वदा नारदःप
र्वतश्चैवगंधर्वाप्सरसांगणाः पितरःकारणंकार्यमाधयोव्याधयस्तथा अगस्त्योगालवोगार्ग्यःशा
ण्डिल्योधौम्यःपराशरः कृष्णात्रेयश्चभगवान्असितोदेवलोनलः बृहस्पतिरुतथ्यश्चमार्कंडेयःश्रु
तश्रवाः द्वैपायनोविदर्भश्चजैमिनिर्माठरःकठः विश्वामित्रोवसिष्ठश्चलोमशश्चमहाऋषिः उ
त्तंगश्चैवरैभ्यश्चपौलोमश्चाहितास्थितः ऋषिर्वैकालवृक्षीयोमुनिर्मेधातिथिस्तथा सरस्वतोप
रिक्रीतःकुशिकोगौतमस्तथा संवर्त्तऋष्यशृंगश्चस्वस्त्यात्रेयोविभांडकः ऋचीकोजमदग्निश्चतथो
र्वस्तपसांनिधिः भारद्वाजःस्थूलशिराःकश्यपःपुलहःक्रतुः बृहदग्निर्हिरण्याश्रुर्विजयःकण्वएवच

वितंडीवेदीर्घतपाः वेदश्चाथांशुमान्शिवः अष्टावक्रोदधीचिश्च श्वेतकेतुस्तथैव च उद्दालकः क्षीरपा
णिः शृंगीगौरमुखस्तथा अग्निवेश्यः शमीकश्च प्रमुचुर्मुमुचुस्तथा एतेचान्येचबहव ऋषयः संशि
तव्रताः मुनयः शांतितात्मानोयेचान्येनानुकीर्तिताः तेत्वांसर्वेभिषिंचंतु सर्वकामार्थसिद्धये त्रयोग्न
यस्त्रयोवेदास्त्रैविद्यं कौस्तुभोमणिः उच्चैःश्रवाहयः श्रीमान्वैद्योधन्वंतरिर्हरिः अमृतंगौः रुक्यश्चद
धिगौराश्चसर्षपाः शुक्लाःसुमनसःकन्याःश्वेतछत्रंयवाक्षताः दूर्वाहिरण्यंगंधाश्चवालव्यजनमेवच
तथाप्रतिहतंचक्रंमहोक्षश्चंदनंविषं श्वेतोवृषःकर्णिमतःसिंहव्याघ्रादयोनगाः पृथिवीचाक्षतान्नानां
ब्राह्मणामधुपायसं स्वस्तिकोवर्द्धमानश्चनद्यावर्तःप्रियंगवः श्रीफलंगामयंमन्त्याः दुंदुभिःपद्मकुंभ

नः ऋषिपत्न्यश्चकन्याश्चश्रीमद्भद्रासनंधेनुः रोचनारुचिकश्चैवनदीनांसंगमोदकं पक्षिणश्चस्वरूप
र्णाद्या वज्रमुक्तामणिध्वजाः आयुष्याणिप्रशस्तानिकार्यसिद्धिकराणिच एतान्यन्यानिसर्वाणि
ब्रह्मांडांतर्गतानिच तानित्वांसमभिषिंचंतुपुण्यतोयैःशुभाशयाइति एवंपौराणिकैर्मंत्रैरभिषिच्य
पुनः देवस्यत्वेतियाजुषेणतृचेनयजमानमभिषिंचेत् ततोयजमानादयोमहानद्यादौस्नात्वाश्र
हतेवाससीपरिधायतिलकादिधारयेयुः यजमानस्यैवाभिषेकइतिकेचिदितितन्नबहुधाशास्त्र
संमतमितिसुधियोविभावयंतु इत्यभिषेकः अथाचार्यपूजोच्यते सितानैश्चतुरस्रमंडलंकृ
त्वा तस्यमध्येपद्मंचविन्यस्यतत्रपीठंनिधाय सितवस्त्रेणाच्छाद्यगंधपुष्पादिभिरभ्यर्च्य तत्रआ

ङ्मुखोयजमानउदङ्मुखमाचार्यमुपवेश्यविष्टरपाद्यार्घाचमनीयादिभिरर्चयित्वा नवीनं
सुंदरंवस्त्रयुग्मंपरिधाय चंदनागरुकुंकुमादिरुगंधिद्रव्यैरनुलिप्य ततोदक्षिणहस्तेसौ
वर्णमंगुलीयकंविन्यस्य अन्यानिचकुंडलकंकणादिभूषणैर्भूषयित्वा देववद्भावयित्वा
पुष्पांजलिंमूर्द्धनिविन्यस्यअर्घ्यंदत्वा भक्तिश्रद्धायुक्तोयजमानोवित्तशाठ्यविवर्जितोदक्षि
णामाचार्य्यायदद्यात् तद्यथा ग्राममश्वंदासीदासंव्यजनचामरछत्रवितानयानासनवस्त्रा
णिगोसहस्रंतत्तदर्द्धंगोशतंतदर्द्धंवावृषभैकादशकंदशकंवास्ववित्तानुसारेण सर्वाःसालंकृ
ताःसन्निधीकृत्यप्रधानगोपुच्छंसतिलहिरण्यंजलपुष्पाक्षतपूगीफलद्रव्यादिसहितंहस्तेधृ

त्वा प्रयोगमुच्चार्य्य आचार्य्यहस्ते दद्यात् तद्यथा देवताप्रतिष्ठासांगतासिद्ध्यर्थं अमुकगो
त्रोत्पन्नोहम् अमुकशर्माहं ममुकगोत्रोत्पन्नायामुकवेदांतर्गतामुकशाखाध्यायिनेऽ अ·
मुकशर्म्मणे आचार्यायइमां गां सालंकृतां घंटाचामरभूषणवस्त्रगोदोहनपात्रादियुतां ता
म्रपृष्ठयुतां स्वर्णशृंगीं रौप्यखुरां यथाशक्त्युपस्करयुतां तुभ्यमहं संप्रददे नममइत्युच्चार्य
आचार्य्यकरे स्वकरस्थं सतिलम्बहिरण्याक्षतपुष्पपूगीफलद्रव्यादियुतं जलपुच्छादिकमा
चार्य्यहस्ते क्षिपेत् कृतैतद्गोदानप्रतिष्ठासांगतासिद्ध्यर्थमिमां दक्षिणां तुभ्यमहं सम्प्र
ददे इत्यभिधाय शिरसा प्रणम्य विज्ञापयेत् तद्यथा भगवन्सर्वधर्मज्ञाशिवधर्मपरा

यण सर्वशास्त्रार्थतत्त्वज्ञ शिवशास्त्रविशारद अनादिजन्मसंतानेत्वप्रमेयेभवार्णवे
अद्यमेत्युत्तमंजन्मअद्यमेसफलंधनम् अद्यमेजननोच्छित्तिरद्यमेपरमंपदम् मोचि-
तोहंत्वयानाथाद्यश्छेघाद्भवार्णवात् संत्रातोहंत्वयायस्मादप्रमेयाद्भवार्णवात् मुक्तोहम
द्यसंसारात् प्रपन्नोहंतवांतिकम् ज्ञानतोऽज्ञानतोवापि यन्न्यूनंचमयाकृतम् तत्स-
र्वंपूर्णमेवास्तुत्वत्प्रसादात्क्षमस्वमे एवंब्रह्मणेऋत्विगादिभ्यश्चदक्षिणांदद्यात् अथा-
चार्योऽक्षतफलसहितंयजमानायाशिषंदद्यात् यजमानस्यतिलकंकृत्वा समस्तजग-
दुत्पत्तिःस्थित्यनुग्रहकारकः शिवःसानुचरस्तुष्टः सर्वदासर्वकामदः द्रव्यहीनंतुयल्लिं-

विधिहीनंतुयत्किञ्चित् तत्सर्वंपूर्णमेवास्तु प्रसादात्कारणस्यतु स्थापकमूर्तिपानांतुव
र्णिनांशिल्पिनांतथा सराष्ट्रपार्थिवानांचशांतिर्भवतुसर्वदा भृत्यपुत्रकलत्रैश्चस्वामित्रैर्बंधु·
वाहनैः कारणस्यप्रसादेनसर्वलोकेश्वरोभव स्वस्तिनइन्द्रोवृद्धश्रवाः स्वस्तिनःपूषाविश्व·
वेदाः स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु १ पुनस्त्वादित्यारुद्रावस
वः समिन्धतांपुनर्ब्रह्माणोवसुनीथयज्ञैः घृतेनत्वन्तन्वंवर्धयस्वसत्याः सन्तुयजमानस्यकामा
२ मंत्रार्थाःसफलाःसन्तुपूर्णाःसन्तुमनोरथाः शत्रूणांबुद्धिनाशोस्तुमित्राणामुदयस्तव
तदनंतरंग्रहादीनामुत्तरपूजांकुर्यात् यस्तुग्रहगोचरद्वारापीडांकरोतिजन्मकालेवाऽनिष्ट-

स्थाने स्थितो भवति दशादिषु शुभदो भवति जपहोमदानादिभिर्विशेषेण पूजयेत् ततश्च

शांतिं करोति उक्तंच ग्रहा गावो नरेंद्राश्च ब्राह्मणाश्च विशेषतः पूजिताः पूजयंत्येते निर्दहं

त्यवमानिताः ततोऽग्नेः पश्चादवस्थितो यजमानो भूयसीं दक्षिणादिकं दत्वा अग्निं विस-

र्जयेत् ॐ गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताश-

न ततो नवग्रहविसर्जनम् अक्षतानादाय ॐ यांतु देवगणाः सर्वे पूजामादाय मामकी-

म् इष्टकामसमृद्ध्यर्थं पुनरागमनाय च अनेन विधिना यस्तु ग्रहपूजां समाचरेत् सर्वा-

न्कामानवाप्नोति शांतिर्भवति निश्चिता ततो ब्राह्मणान् भोजयित्वा सर्वकुटुंबजनैः सह भो-

जनं कुर्यात् एवं देवप्रतिष्ठां कृत्वा आत्मानं कृतार्थं मन्येत् निरीक्ष्यानेकशास्त्राणि रचि-
तोऽयं स्फुटसंग्रहः सतां प्रीत्यै विभूत्यै मे भवत्येव परिश्रमः ॥ ॥ इति श्रीनानकचंदा-
त्मज राम लाल पंडित विरचिते प्रतिष्ठासंग्रहे चतुर्थः किरणः ग्रंथश्चायं समाप्तः ॥ ॥
॥ ॥श्रीव्यंकटेशार्पणमस्तु॥ ॥श्रीरस्तु॥ ॥शुभं भूयात्॥

# इति प्रतिष्ठासंग्रहः समाप्तः

शाकाब्दाः १८०७ संवत् १९४२

यह पुस्तक पंडितजी रामलालजी इनके पाससे हक्क सहित लेकर मुंबईमें श्रीवेंकटेश्वर छापखानेमें गंगाविष्णु श्रीकृष्णदास इनोनें छापके प्रसिद्ध किया.